श्रीमाननीय वैद्यराजश्रीठाकुरदत्त शास्त्रिणां कर
समर्पित

* ॐ *

# ( नूतन )
# शिवराजविजयपताका

सारस्वतवंशावतंसेन प्राच्यमहाविद्यालयसाहित्य-
दर्शनशास्त्राध्यापकेन स्यालकोटवास्तव्य-
जैनन्यायविशारद—कवितार्किक—
नृसिंहदेवशास्त्रिणा दर्शनाचार्येण
रचिता।

सेयम्—
आशानन्द वर्म्मणा
निजव्ययेन प्रकाशिता।

सोलएजेंट—( पुस्तक-प्राप्तिस्थानम् )
मेहरचन्द्र लक्ष्मणदास
अध्यक्ष—संस्कृत पुस्तकालय,
सैदमिट्ठा बाज़ार, लाहौर।

मुद्रक—भारद्वाजप्रिंटिङ्ग प्रेस, लाहौर।

प्रथमसंस्करण ५००

द्वादशनिश्वाससमाप्तौ २४० पुटे त्रुटिः—

इति श्रीपण्डित-देवीदासतनुजनुषा सारस्वतवंशावतंसेन सती-विष्णुदेवी-गर्भजेन स्यालकोटवास्तव्य-जैनन्यायविशारद—कवितार्किक—[तन्त्रचक्रवर्त्ति] दर्शनाचार्य-**नृसिंहदेव**शास्त्रिणा प्रणीता (नूतन) "शिवराजविजयपताका" नाम शिवराजविजयटीका समाप्ता

———

* ॐ *

# द्वित्राः शब्दाः ।

अयि ! पाठकमहाभागाः !

साहित्याचार्यवर्यैः परिडतप्रकाराडैः अम्बिकादत्तव्यासैर्महाकविभिः 'बिहारिविहार' इत्याख्ये ग्रन्थे स्वयमेव स्वजन्मोदन्तकथा संक्षिप्य लिखिता, वयञ्च तस्या अपि सारमादाय अनुवादरूपेण पाठकजनपरिचयलाभायाऽत्रोद्धरामः । एतावता "शिवराजविजय" गद्यघटनावृत्तमपि परिचितं भविष्यति । तथाहि—*राजपुत्रायतनाम्नि देशे जयपुरराजधानीसमीपवर्त्ती 'मानपुर' नाम्ना प्रसिद्ध एको ग्रामः, नन्वसौ विद्वद्ग्राम एवासीत् । तत्र तत्रत्यविद्वत्सु प्रसिद्धतरा ज्योतिःशास्त्रनिष्णाताः गौडा † 'ईश्वररामजी' इत्याख्यया आख्याताः परिडतवर्या अभूवन् । एतेषामेव प्रपौत्रो "हरिरामः" श्रीमान् राजाश्रयप्रदानकारणात् 'रावत जी की धूला' इत्यभिधेये ग्रामे निवासं व्यधित—पं० 'हरि राम जी' इत्येतेषां पुत्रः श्रीमान् परिडतो 'राजाराम' इत्यभिख्यः 'धूला' ग्रामात्सम्बन्धं परिहाय सपरिवारो वाराणसीनिवासमकरोत् स्वगुणगौरवाच्च तत्र परिडतमराडल्यां ज्योतिर्विरवे महतीं ख्यातिमलभत । अत्रभवतोऽस्याऽनेकसन्तानेषु पुत्रद्वयमेव चिरञ्जीव्यासीत्, ज्येष्ठः श्रीमान् दुर्गादत्तः, कनिष्ठः श्रीमान् देवीदत्तश्चेति । स एवाऽयं 'श्रीदुर्गादत्तः' यः कविमराडले 'दत्त' नाम्ना प्रसिद्धिङ्गतो वर्त्तते । अयं श्रीमान् कदाचित् जयपुरे कदाचिच्च काश्यां मनोविनोदमकरोत् । एतेषां द्वितियपुत्रस्य

---

* 'राजपूताना' ।

† 'सार्धशतवर्षात्' पूर्वं 'मंडावा' ग्रामादेतेऽत्र समायाता' इत्यपि केचित् कल्पयन्ति ।

जन्म जयपुरे एव 'सिलावटों का मुहल्ला' इत्याख्ये आवसथे वैक्रमे वाणचन्द्राङ्कचन्द्रेब्दे (१९१५) चैत्रशुक्लाष्टम्यामभूत्। स *एवाऽहमस्मि। वैक्रमे रसचन्द्राङ्कचन्द्रेब्दे (१९१६) तु पूज्यपादा मम तातपादाः 'श्रीदुर्गादत्तजी' महोदयाः पुनर्वाराणसीमयासिषुः।

शास्त्रानुसारं पञ्चमे वर्षे एव मम (व्यासस्य) शिक्षायाः प्रारम्भो विहितः। मम जननी, ज्येष्ठा भगिन्यः, पितामही, पितृव्यपत्नी चापि सर्वाः पठिता अभूवन्। एवम् (सौकर्येण) मम शिक्षाप्रणाली चतुरस्त्ररूपतयैव उत्तरोत्तरमैधिष्ट। तदाऽहं दशवर्षवयस्क एव हिन्दीभाषाकवितायां रचने किंचित् प्रावार्त्तिषि। यः काश्चित् मत्प्रणीतां कवितामश्रौत् स एवमेवाकथयत् यन्नानेन स्वयं रचिता, किन्तु स्वपितृद्वारा विरचय्य (घोटिता सती) श्राव्यते।

अथ कदाचित् वै० (१९२६) मिते वर्षे "ओझा" इत्युपपदनामानः श्रीतुलसीदासाभिधाना जोधपुरात् विश्वनाथपुरीमुपसेदुः। एतेऽपि मामकीनां कवितां श्रावं श्रावं तामेव शङ्कामुदभावयिषत, यदत्यणीयासि वयासि एतादृश्या उद्भटायाः कवितायाः प्रणयनं न केवलं कठिनमेव प्रत्युत असम्भवप्रायमिवाभातीति।

तत उक्तसंशयविध्वंसनाय ते मत्पुरत एकां समस्यां स्थापितवन्तः कथितवन्तश्च यदियं मम समक्ष एव पूरणीयेति।

साचेयम्—

'मूंदि गई आंखें तव लाखें कौन काम की' इति। अहञ्च तत्क्षण एवेमामित्थमपूपुरम्। तथाहि—

चमकि चमाचम रहे हैं मनिगन चारु

---

* 'अम्बिकादत्तव्यास' इत्यर्थः।

सोहत चहूंधा धूमधाम धनधाम की।
फूल फुलवारी फल फैल के फबे हैं तऊ
छवि छटकीलि यह नाहिन आराम की॥
काया हाड चाम की लै राम की विसारी सुधि
जानकी कौ जाने बात करत हराम की।
अम्बादत्त भाखें अभिलाखे क्यों करत झूठ
मूंदिगई आंखें तब लाखें कौन काम की॥ इति।

ततः सर्वाङ्गीणानि दिव्यानि वस्त्राणि प्रशंसापत्रं च मह्यं दत्वा श्रीमन्तः तुलसीदासाः गुणग्राहितां प्रकटितवन्तः, येन तदारभ्य ममापि नाम गुणिगणगणनायामगण्यत गुणज्ञवर्यैः।

तत एकादशवर्षात्मके वयसि अमरकोष–रूपावलिप्रभृतीन् अनेकान् ग्रन्थान् समाप्य पण्डितवर श्रीकृष्णदत्तगुरुभ्यो लघुकौमुदीमपाठिषम्। एवञ्च तत्तदाचार्येभ्योऽनेकानि शास्त्राण्यध्यैषि। किन्तु द्वादशवर्षात्मके मयि एकदा कश्चित् तैलङ्गवृद्धोऽष्टावधानी वाराणसीमुपेयिवान्, तेन च महोदयेन गुणिगणगुणगणनाप्रियस्य भारतेन्दुहरिश्चन्द्रस्य भवने स्वाष्टावधानकौशलं प्रादर्शि। 'काशीवास्तव्योऽपि कश्चित् विद्वान् किञ्चित् कौशलमेभ्यः प्रदर्शयेत्' इति वदति भारतेन्दौ सर्वेषु च मौनव्रतपरायणेषु 'अयं बालः कदाचित् सरस्वतीमन्त्रकवितां करोति' इत्यभिहितवति मदीयपितृचरणे ममाग्रे मषीलेखनीकागदादौ च स्थापितेऽहमष्टकोष्ठकं चतुःपङ्क्तिएकमायतं यन्त्रमलिखम्, अपृच्छञ्च कं पदार्थं कवयेयमिति। तदा 'इदं घटीयन्त्रं वर्णय' इति बाबुहरिश्चन्द्रसहोदरो गोकुलचन्द्रमहोदयः सकुतूहलमवोचत्। उच्यताम्? भवतां कथनानुसारं तत्तत् कोष्ठक एवाक्षराणि लिखेयम्, ऋजुवाचने क्रियमाणे श्लोक एव भविष्यतीत्येवमभिधाय तदुक्तिपुरःसरं कोष्ठकेषु वर्णविन्यासमकार्षम्। तेन चायं श्लोकः सम्पन्नः।

तथाहि——

घटी सुवृत्ता सुगतिर्द्वादशाङ्कसमन्विता।
उन्निद्रा सततं भाति वैष्णवीव विलक्षणा॥

ततः सर्वतः समुत्थे साधुवादे 'सुकविरेष' इति ध्वनिर्दशोपि दिशा बधिरीकुर्वन्नुदस्थात्। ततः त्रयोदशे वर्षे तातचरणैः सह 'डुमरांव' राजधानीमगमम् तत्र महाराजो राधिकाप्रसादसिंहः कवितां मदीयामाकर्ण्य अत्यन्तं प्रासीदत्। एवमुत्तरोत्तरं सांख्ययोगवेदान्तादिदर्शनशास्त्रेषु सङ्गीत—सितार—जलतरङ्गादिनानाविधवादित्रविद्यायाञ्च प्रावीण्यमासादयम्। वै० १९३२ वर्षे च गभर्णमेण्टकालेजे संस्कृतविभागे प्रविश्य आङ्गलभाषामपि कथञ्चिदधिगतवान्। स्वभगिनीपतिपण्डितवासुदेवसकाशाच्च चिकित्साग्रन्थानप्यपाठिषम्। अथ ज्ञातवङ्गभाषोऽहं कचित् सम्पादककृत्यं कर्त्तुं प्रस्तुत आसम्। एषु दिवसेषु भारतजीवनसम्पादकश्रीश्यामकृष्ण — देवकीनन्दन — अमीरसिंहकार्त्तिकप्रसादप्रभृतिभिः सह ममान्तरङ्गता समजनि। ततो महाराजमिथिलेशस्य राज्याभिषेककाले सामवताख्यं प्रसिद्धं नाटकमरचयम्। वै० १९३५ वर्षे काश्मीराधीशस्यापिसंस्कृतकालेजे प्राविविशम्। श्री १०८ स्वामिविशुद्धानन्दसरस्वतीनामध्यक्षतायां परीक्षाञ्चादाम्, ते च सकलकलाकोविदानां समक्षे मां "व्यास" इति पदव्या अभूषयन्। वै० १९३७ वर्षे साहित्याचार्यपरीक्षायामहमेव शिरोमणिरासम्। ततः बल्लभकुलावतंसश्रीजीवनलालाख्यैः सह जाते परिचये कलिकाताराजधान्यां सनातनधर्मविषयेषु मम अष्टाविंशतिसङ्ख्याः वक्तृता अभूवन् अथाऽहं भगवत्कृपया २४ मिण्टमितकाले १०० एकशतश्लोकानां निर्माणसामर्थ्यमप्यासादयम्। ततः काश्यां ब्रह्मामृतवर्षिणीसभायाः सभ्याः कोविदाः मदं

"अष्टिकशतक" पदेन सह रजतपदकमार्पयन्। अथ वै० १६४० वर्षे, १६४३ वर्षे, १६४४ वर्षे, चाहमनेकत्र जीविकामकार्षम् किन्तु अनेकैः कारणै ऋणबाधित एवाभूवम्। पुनः वै० १६४८ वर्षे "विहारीविहार" पुस्तकं महता परिश्रमेण समापितम्। वै० १६५० वर्षे च देशाटनमकार्षम्। ततः भारतरत्न-भारतभूषण-शतावधानाद्यनेकैरुपाधिभिस्तत्र तत्राहं लब्ध-प्रतिष्ठोऽभूवम्। एकदा महाराजजयपुरमन्त्रिणा वेदसमस्या दत्ता तामेवमपूपुरम्—तथाहि—

प्रविष्टो राजभवने प्रतिबिम्बै र्न को भवेत्।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ इति

एतावत्पर्यन्तं स्वजीवनी स्वयमेव व्यासैर्लिखिता। अत्रान्तरे गभर्णमेण्ठपटनाकालेजे प्रोफेसरपदं लब्ध्वापि ते दुर्भाग्यवशात् तत्राऽस्वास्थ्यदूषितदेहाः वै०१६५७, वर्षे खिस्तीये १६०० वर्षे नवाम्बरमासस्य १६ तारकायाम् श्रीव्यासमहाकविः इन्द्रपुर्यां देवगुरुणा सह शास्त्रचर्चां विधातुमिव मर्त्य-भूमिं तत्याज। एतेषां रचिता प्रस्तारप्रदीपशिवराजविजयाद्या अनेके ग्रन्थाः सन्ति। आस्तां तावदेतत् :—

शिवराजविजयः—शिवराजस्य विजयः शिवराजविजयः तत्प्रतिपादकत्वात् ग्रन्थोऽप्युपचारात् "शिवराजविजय" इत्युच्यते। गद्यं काव्यमेतत्। "पद्यं गद्यञ्च मिश्रञ्च तत् त्रिधैव व्यवस्थितम्" इत्युक्तेः। गद्यलक्षणन्तु—"अपादः पदसन्तानो गद्यम्" इति। इदञ्च आख्यायिका, कथा चेति द्विविधम्। कथासञ्ज्ञकञ्चैतत् गद्यम्। पुनर्गद्यञ्चतुर्विधम्—"गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायञ्च" इति वामनोक्तेः। एतत्प्रपञ्चः काव्यादर्शटीकायां मदीय कुसुमप्रतिमयायां द्रष्टव्यः। शिवराजविजयस्य तु "चूर्ण" गद्येऽन्तर्भावः। चूर्णमेव 'चूर्णिका' इत्यप्युच्यते। यद्यप्यस्मिन् तत्र तत्र दीर्घसमासभाञ्जि

अपि बहूनि गद्यानि सन्ति तस्मात् "उत्कलिकाप्रायम्" इत्यपि वक्तुं शक्यते तथापि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायमनुरुध्य अदीर्घसमासभाजामेव पदानां बहुत्वात् 'चूर्ण' मेवैतत्। अत एवाऽत्र वैदर्भीरीतिर्मुख्या, क्वचित् क्वचित् गौड्यपि, प्रसादगुणस्य च बाहुल्यम्। प्रसादस्य सर्वरसव्यापकत्वात्। अन्तराऽन्तरा ओजोऽपि। मुख्यो वीररसः। करुणादिस्त्वङ्गभूतोऽपि। एतच्च सर्वं मूलग्रन्थपरिशीलनेन अस्मद्व्याख्याविलोकनेन च विशेषतः परिचितं भवितुमर्हति। धीरोदात्तश्चात्र नायकः श्रीशिववीरः। उपनायको माल्यश्रीकप्रभृतिः। प्रतिनायकोऽवरङ्गजीवः इत्यादि यथायथं वेदितव्यम्। अन्यदप्येतस्य काव्यस्य विषये बहु वक्तव्यमस्ति परन्तु समयाऽभावात् विस्तरभयाच्च सम्प्रति नोच्यते। किन्तु—मूलग्रन्थो बह्वशुद्धं मुद्रितः, मया च यथामति विज्ञाय टीकाग्रन्थो रचितः संशोधितश्च, तथापि क्वचित् २ स्खलितं दृश्येत चेत् पण्डितवर्याः संशोध्य मामनुगृह्णन्तु, नहि सर्वः सर्वं जानाति। एतदर्थं साहित्याचार्याणां श्रीशालिग्रामशास्त्रिणां पद्यमेकमुद्धरामि——

दुर्मोषो दोषसङ्घः क्षणमपि न दृढा शेमुषी मानुषीयं
गम्भीराम्भोधितुल्यं दुरधिगममहो शास्त्रतत्त्वं विशेषात्।
श्रद्धा बद्धाञ्जलिस्तद्गुणगणनिकषान् प्रार्थये प्रार्थनीयान्
जोषं जोषं विदोषं कलयितुमखिलं जोषमेवानतोऽहम्॥ इति

ई० ३०-३-२७ } विदुषामनुचरः—

नृसिंहदेवः।



# ❋ शिवराजविजयपताका ❋

## (अर्थात् नूतना शिवराजविजयटीका)

दुरितरिपुविनाशं बुद्धिसिद्धिप्रकाशं
शिवहृदयविलासं पार्वती-चारुहासम्।
मुखविततिसुनन्दं तापसंहारचन्द्रं
गणपतिमभिवन्दे विघ्नविध्वंसदण्डम् ॥ १ ॥

अजहरिहरमेधा-योगपीयूषधारा
जनिपुषिहृति-हेतु ब्रह्मनान्दीप्रसारा।
मम मतिजडतानां यूथमापोथयन्ती
जयतु जयतु देवी वाङ्मयाधारभूता ॥ २ ॥

गुरुचरणसरोजं मन्मनोभृङ्गभूमिः
सकलनिगमभङ्गी-सौरभाद्वैतराज्यम्।
विकचदलवितानं दोषपङ्कैकहानं
मम कृतिसुरधुन्यां राजतां सर्वदैव ॥ ३ ॥

जनकपदपयोजं निर्मलं चिन्तयित्वा
तदनु जठरधायाः पादरेणुं समाल्य।
"शिवविजयपताका" रच्यते नूतनेयं
* नरहरकविनाऽहो ! तुष्यतां तेन शर्वः ॥ ४ ॥

इह भवति मदीयवाग्विलासः

---

* नृसिंहदेवशास्त्रिणा।

सहृदय-कोक-विशोक-मोककारी ।
ननु जगति विनिश्चितं यदेततद्-
रविकिरणै र्न दिवान्धनेत्रतुष्टिः ॥ ५ ॥
काऽम्बिकाव्यासगद्यात्मा कृतिरेषा महोद्भटा ।
क मे व्याख्यानकामोऽयं पण्डिताग्रेरनातुरः ॥ ६ ॥
तथापि लीलया छात्र-हितमात्रप्रयुक्तया ।
शिवराजस्य विजये पताकां टीकयास्म्यहम् ॥ ७ ॥
नवा चैषा पताकेयं पूजिता जयकर्मणि ।
सिद्धिं दास्यति लोकानां गद्यधाराप्रवेशिनाम् ॥ ८ ॥
एषा टीका हितं कुर्यात् परीक्षावार्धिसन्तरे ।
छात्राणामिति मे कामं पूरयेच्च चतुर्भुजः ॥ ९ ॥

**अथ** श्रीलश्रीदक्षिणाशातिलकस्य महाराष्ट्रकुलमणेः शूरवीरधुराधारिधौरेयस्य कलावप्यकुण्ठितक्षात्रतेजश्चन्द्रहासस्य प्रातःस्मरणीयनामधेयस्य महामहनीयकीर्तेः श्रीमहीमहेन्द्रस्य **शिवराजस्य** वीररसप्रधानं चरित्रमुपनिबध्नन् अम्बिकादत्तव्यासो महाकविः स्वकालं सफलयन् ।शिष्टाचारपरम्परारक्षणदाक्षिण्येन मङ्गलमपि पाठयन् वर्णनीयप्रसङ्गस्य पातनिकाकाणिकामारोपयन्निव श्रीव्यासोक्तिं स्मरति "विष्णोर्माया" इति । वेवेष्टि व्याप्नोति चराचरात्मकं प्रपञ्चजातमिति * विष्णुः=शुद्धं ब्रह्म । विषेर्व्याप्त्यभिधायिनो † नुप्रत्ययान्तस्य रूपम् । " अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः "इति श्रुतेः । तस्य माया=दैवीशक्तिः तत्त्वान्यत्वाभ्यामनिर्वचनीया ' मायन्तु प्रकृतिं विद्यात् " इति " ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणै र्निगूढाम् " इति च श्रुतेः। ' दैवी ह्येषा गुणमयी मम माया दुरत्यया।" इति स्मृतेश्च । भगवती=दिव्या । यया मायया जगत्=संसारः **सम्मोहितम्**=अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते, कर्त्तव्याकर्त्तव्यविमूढं भवतीति यावत् ।

" हिंस्र " इति । घातुकः=क्रूरो नरः खलः = दुष्टः स्वपापेनैव विहिंसितो

---

* विशतेर्वा नुक्प्रत्ययान्तस्य रूपम्—उक्तञ्च:—
यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः ।
तस्माद्विष्णुरिति ख्यातो विशेर्धातोः प्रवेशनात् ॥ इति विष्णुपुराणे ।

† " विषः किच्च " ( उ० ३ । ३९ ) इति सूत्रेण नुः ।

भवति। पापिनः पापं कर्मैव तस्योद्ध्वंसने निमित्तम् अतएव शास्त्रेऽनाततायिवधस्यादोष उक्तः। तथाचोक्तम्—

**आततायिनमायान्तं हन्यादेवाऽविचारयन्।**
**नाततायिवधे दोषो हन्तुर्भवति कश्चन॥ इति**

**साधुः** = आचारवान् परहितकारी **समत्वेन** = कुशलाकुशलकर्मविवेकदृष्ट्या **भयात्** = परपीडाहेतोः **विमुच्यते** = मुक्तो भवति। सर्वथा शास्त्राचारपरिपालनवतां नृणां न काचिद्धानिरित्यर्थः। एतेनास्य प्रथमनिश्वासस्य "अनेकेषां पामराणां क्रूराः, महात्मानामनिन्द्याश्च आचाराः, लुण्टाकानां धाटीमारकाणाञ्च गर्हिता व्यवहारा" इत्याद्या अनेकाः समुज्जृम्भमाणा भगवतो माया एवोपक्षेपकत्वेन विषया "विष्णो" रिति भागवतप्रतीकेनोपनिबद्धाः सन्तीति ज्ञातव्यम्। विष्णुनामस्मरणेन सकलदुरितोपक्षयश्च सूचितो भवति। किञ्च—अत्र निश्वासे कश्चन म्लेच्छहतको हिन्दुकन्यां हरिष्यतीत्यसौ स्वयं स्वपापेन नष्टः, कन्या तु केनचन साधुनोपकृता सुरक्षिता इत्येतद्वृत्तं "हिंस्रा" भागवतोक्तिसमुद्धरणेन सूचितमित्यपि स्मरणीयं ग्रन्थाध्येतृभिरिति शिवम्।

"**अरुण**" इति। **अरुणः**=अव्यक्तरागः किञ्चिल्लोहितः उदयकालिकसूर्यप्रकाशस्य स्वभाव एषः। * "अव्यक्तरागस्त्वरुण" इत्यमरः। "ऋगतौ" अस्माद्धातोः "अर्तेरुनन्" इत्यौणादिक उनन् प्रत्ययः। ऋच्छतीति **अरुणः**। **पूर्वस्यामिति**।अत्र"दिशि"इति विशेष्यपदमध्याहर्त्तव्यम्। **भगवतः**=महैश्वर्यस्य **मरीचिमालिनः**=सूर्यस्य। म्रियते तमोऽस्मिन् इति **मरीचिः**।"मृकणिभ्यामीचिः" (३०४। ७०) इत्यौणादिकः ईचिप्रत्ययः। मरीचीनां † माला=पंक्तिः अस्या-

---

* "अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ।
निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु"॥
इत्याद्यन्यत्र कोषे।

† "माला तु पङ्क्तौ पुष्पादिदामनि" इति हैमः। मल्यते ध्रियते इति "माला"। मल धारणे।

‡ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥ इति।

षड्विधत्वं भगस्य। कालिकापुराणे तु—भगः=कामाख्यायोनिः ब्रह्मशिलापरपर्यायः पाषाणविशेषः अर्धयोजनविस्तीर्णः योजनायतः यमाश्रित्य विष्णुर्भगवान् मधुकैटभौ जघान।

स्तोऽस्ति **मरीचिमाली**। "अत इनिठनौ" (पा० ५ । २ । ११५) इति मतुबर्थ इनिः । सूर्यस्य ‡ भगवत्त्वन्तु सकलसृष्टिस्थितिसंहारहेतुत्वात्पुराणादौ प्रसिद्धम् । तथा च श्रीकृष्णवाक्यमर्जुनम्प्रति—

**आदित्यो मंत्रसंयुक्त आदित्यो भुवनेश्वरः ।**
**आदित्यान्नापरो देवो ह्यादित्यः परमेश्वरः ॥**
**आदित्यमर्चयेद्ब्रह्मा शिव आदित्यमर्चयेत् ।**
**यदादित्यमयं तेजो मम तेजस्तदर्जुन ! ॥ इति ।**

किञ्च—

**आदित्यञ्च शिवं विद्याच्छिवमादित्यरूपिणम् ।**
**उभयोरन्तरं नास्ति आदित्यस्य शिवस्य च ॥**

इत्यादिप्रमाणैर्युक्तमादित्यस्य भगवत्त्वमिति न संशयः । अनेनाऽशेषजगत्सवितृसूर्यनारायणस्मरणेन ग्रन्थकर्तुर्मङ्गलमप्याचरितं भवतीति शिष्यैः सुध्यातव्यम् । तमेव भगवन्तम् "एष" इत्यारभ्य "दिनस्य" इत्यन्तं वर्णयति । आकाशमण्डलस्य=गगनाभोगस्य **मणिः**=रत्नम् यथान्धकारे स्थापितो हीरकादिर्मणिः स्वोज्ज्वलम्भरेण तमो हन्ति तथाऽयमपि भगवान् बाह्याभ्यन्तरतमोऽपहः सकलार्थप्रकाशकश्चेतितमोहन्तृत्व—प्रकाशकत्वसाम्यात् मणिरूपणम्। **खेचरचक्रस्य**=खेचराणां ग्रहाणां चक्रस्य समूहस्य **चक्रवर्त्ती**=सार्वभौमः । यथा चक्रं सैन्यं वर्त्तयितुं सर्वभूमौ चालयितुं शीलं भवति सम्राजः तथा अस्याऽपि सर्वग्रहगणचालनचोतनशीलमिति युक्तं "चक्रवर्त्ती" इति रूपणम् । अत्र—"**सुप्यजातौ णिनिस्ताच्छील्ये** (३ । २ । ७८) इति सूत्रेण ताच्छील्ये णिनिः । चक्रे वर्त्तितुं शीलमस्येति व्युत्पत्तिः । * **आखण्डलदिशः**=† ऐन्द्र्याः दिशः अर्थात् पूर्वस्याः (नायिकायाः) **कुण्डलम्**=कर्णवेष्टनं भूषणविशेषः वर्त्तुलत्वसाम्यादित्याशयः । कुण्ड्यते रक्ष्यते धार्यते वा कर्णे इति **कुण्डलम्** । "**वृषादिभ्यश्चित्**"(३०१ । १०६)इति सूत्रेण "कुडि रक्षायाम्" अस्माच्चौरा-

---

* "आखण्डलः सहस्राक्ष" इत्यमरः ।

† "इन्द्रो वन्हिः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" ॥ इत्यमरः ।

एवञ्च—प्राच्यादीनामैन्द्रीत्यादिनामानि । इन्द्रादीनां प्राचीपतिरित्यादीनि नामानीति बोध्यम् ।

द्रिकात् कलच् प्रत्ययः । " कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्योः स्त्री" इति ( मेदिनी )। **ब्रह्माण्डभाण्डस्य**=ब्रह्माण्डमेव भाण्डं=गृहं तस्य दीपकः प्रकाशकत्वात् । **प्रेयान्**=अतिशयेन प्रियः प्रियतम इत्यर्थः "**अतिशायने तमबिष्ठनौ**" (५ । ३ । ५५) इति सूत्रेण प्रियशब्दात्स्वाथ = अतिशयविशिष्टार्थवृत्तेस्तमप् । **पुण्डरीकपटलस्य** = कमलाकरस्य । यद्यपि "पुण्डरीकं सिताम्भोजम्" इत्यमरोक्तेः पुण्डरीकपदेन श्वेतकमलानामेव ग्रहणमुचितं तथाप्यत्र कमलमात्रं विवक्षितम्, आदित्योदये कमलमात्रविकासस्य स्वभावसिद्धत्वात् । **शोकविमोकः** = शोकस्य विमोकः मोक्षो निवृत्तिर्यस्मात् सः । **कोकलोकस्य** = चक्रवाकसमुदायस्य । रात्रौ चक्रवाकदम्पत्योर्वियुक्तत्वात् । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः।**अवलम्बः**=आश्रयः। **रोलम्बकदम्बस्य**=भ्रमरगणस्य। ‡ **सूत्रधारः**= प्रवर्त्तयिता सर्वव्यवहारस्य=ऐहिकामुष्मिकक्रियायाः । सूर्योदय एव सर्वेषां स्वस्वव्यवहारोन्मुखतेति वस्तुस्थितिः । **इनश्च दिनस्य** । इनः=स्वामी । "इनः प्रभौ नृपे चन्द्रे" इत्यमरः ।

"एष भगवान्" इत्यारभ्य "दिनस्य" इत्यन्ते गद्ये व्यस्तं * **मालारूपकंनामाऽम** लङ्कारः । **वैदर्भी**रीतिः । अल्पसमासवत्त्वात् । **प्रसादो** गुणः । उक्तञ्च मम्मटेन—

**शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ।**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ॥**

तमेव भगवन्तं स्वभावोक्त्या भूयोवर्णयति—'अयमेव' इत्यादिना ।

---

‡ "नाटकीय कथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते" ॥

इत्युक्तलक्षणः प्रधाननटः सूत्रधारः । संसारोऽप्ययं नाट्यमेव विधातुः तत्र प्रधाननटः श्रीसूर्यो भगवान् । यत्र सर्वे प्राणिनः सूत्रधारप्रवर्त्तनोत्तरं स्वां स्वां भूमिकामारचयन्तीत्येवं साम्ये सति रूपकाभिसन्धिः कवेः ।

* प्रपञ्चितोऽयमलङ्कारो मया काव्यादर्शस्य **कुसुमप्रतिमायाम्** 'सौन्दर्यस्य तरङ्गिणी' इत्याद्युदाहरणेन ( १३८ ) पुटके । साहित्यदर्पणेऽप्युदाहृतम्—

" निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा " इति ।

अन्यत्राप्येतादृशस्थले एषैव दिगनुसरणीया ॥

**पृ०४ ॥** अहश्च रात्रिश्च अहोरात्रः तमहोरात्रम् । '**अहःसर्वैकदेश-संख्यातपुण्याच्च रात्रेः**' ( ५ । ४ । ८७ ) इति समासान्तोऽच् । '**रात्राह्नाहाः पुंसि**' ( २ । ४ । २९ ) इति पुंस्त्वम् । **द्वादशसु भागेषु**=द्वादशमासरूपेषु अंशेषु । **विभनक्ति**=विभज्य वर्त्तयति ।

" अहो रात्रे विभजते सूर्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः " इति मनुः॥

'विभनक्ति' इति विपूर्वकात् 'भञ्जो आमर्दने' अस्माद्धातोः लटि प्रथमपुरुषैक-वचने रूपम्।'**रुधादिभ्यःश्नम्**' (३।१।७८) इति शपोऽपवादः श्नम् । उपसर्गबलेन विभाजनमर्थः । **षण्णामृतूनाम्** = हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाम् । 'षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात्' 'द्वौ द्वौ मार्गादिमासौ स्यादृतुः' इति चोभयत्र (अमरः) । **अयनमिति**। 'अयने द्वे गतिरुदग्दक्षिणार्कस्य' इति **अमरः** । **युगभेदाः** = कृत-त्रेता-द्वापर-कलिरूपाः । उक्तञ्च विष्णुपुराणे—

**दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादि-संज्ञितम् ।**
**चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥**

इत्यादि । **कल्पभेदाः** = ब्राह्माद्याः 'तद्द युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः' इति मनूक्तेः । परमे व्योमनि=चिदाकाशे ब्रह्मपदे वा तिष्ठतीति परमेष्ठी ब्रह्मा तस्य '**परमे स्थः कित्**' ( उ० ४ । १० ) इत्यौणादिक इनिप्रत्ययः ॥

**परमेष्ठिनः** = ब्रह्मणः । 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः' इति (अमरः ) । **परार्धसंख्या** = सर्वस्याः संख्याया अन्तिमा संख्या ॥

**चर्कर्त्ति** = अतिशयेन पुनः पुनर्वाकरोतीति कृधातोः 'धातोरेकाचो'— ( ३ । १ । २२ ) इति इति यङि, 'यङोऽचि च' ( २ । ४ । ७४ ) इति यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वे, अभ्यासकार्ये ( गुणादौ ) 'चकृ' इति जाते 'सनाद्यन्ताः' ( ३।१।३२ ) इति धातुत्वे, लटि, 'शेषात्कर्त्तरि'—( १।३।७८ ) इति परस्मैपदे, लस्थाने तिबादेशे 'कर्त्तरि'—( ३।१।३८ ) इति शपि "चर्करीतम्" इति शपो लुकि "चकृति" इत्यवस्थायाम्—"यङो वा" ( ७ । ३ । ९४ ) इत्यनेन विकल्पेन इडागमे, तदभावपक्षे "ऋतश्च" (७ । ४ । २) इति अभ्यासस्य रुगागमे, उकि गते 'चर्कृति' स्थिते 'सार्वधातुकार्ध'— ( ७।३।८४ ) इति गुणे—'**चर्कर्त्ति**' इति रूपम् । एवमेव भृधातोः अतिशयेन पुनः पुनर्वा बिभर्त्तीति—"बर्भर्त्ति" । हृधातोः अतिशयेन पुनःपुनर्वा हरतीति— "जर्हर्त्ति" इति त्रीणि रूपाणि यङ्लुकि ज्ञेयानि । **वेदाः** = ऋगादयश्चत्वारः

एतस्यैव **वन्दिनः** = स्तुतिपाठकाः । ऋषिकृतस्तुतेर्वेदकर्तृकत्वमुपचारात् । उक्तञ्च **श्रीमद्भागवते**—द्वादशस्कन्धे 'सामर्ग्यजुर्भिस्तल्लिङ्गैर्ऋषयः संस्तुवन्त्यमुम्' इति ।

अथवा—'**अन्तस्तद्धर्मोपदेशात्**' (अ० १।१।२०) इत्यन्तराधिकरणन्यायेन सूर्योपाधिकस्य ब्रह्मण एव साक्षाद्वेदैः स्तूयमानत्वेन वेदानां वन्दित्वं मुख्यमेव । वेदस्तुतावप्युक्तम्—"जय जय जह्यजाम्—" इत्यादि । **गायत्री** = गायन्तं त्रायते इति । '**आतोऽनुपसर्गे कः**' (३।२।३) इति गैत्रातोः कप्रत्यये गौरादित्वात् (४।१।४१) ङीष् । अथवा गानं=गायः । भावे घञ् । गायेन गानेन त्रायते इति त्रैङ्धातोः "**सुपि**" (३।२।४) इति योगविभागात् क ङीषि रूपम् । "गायत्री त्रिपदादेवीच्छन्दोभित्खदिरेषु च" इति (मेदिनी) । सेयं गायत्री एव सावित्री "गायत्रीमेव सावित्रीमनुब्रूयात्" इति शतपथोक्तेः । 'गायत्री' शब्द-निर्वचनञ्च ग्रन्थान्तरेऽपि—

> "गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ।
> सवितृद्योतनात्सैव सावित्री परिकीर्तिता" ॥
> जगतः प्रसवितृत्वाद्वाग्रूपत्वात्सरस्वती ॥ इति ॥

'**ब्रह्मनिष्ठा**' इति । ब्रह्मणि समाधिभाजः वेदपारगा वा । **अमुमेव**=सूर्यमेव **अहरहः** = प्रतिदिने । **उपतिष्ठन्ते** = उपासते । 'उपाद्देवपूजासङ्गतिकरणमित्रकरण पथिष्विति वाच्यम्' (वा० १।३।२५) इत्यात्मनेपदम् । उक्तञ्च **षड्विंशब्राह्मणे** 'तस्माद्ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते' इति । ब्राह्मणपदं द्विजमात्रोपलक्षकं द्विजमात्रस्य मन्त्रैः सूर्योपस्थानाधिकारात् । "**भास्वन्त**" मिति । सूर्यम् । "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः । **निजपर्णकुटीरात्**=तृण-निर्मिताया ह्रस्वायाः कुट्याः पर्णशालाया इत्यर्थः । **निश्चक्राम**=निरगात् । **गुरुसेवने** गुरुशुश्रूषायां पटुः चतुरः गुरुसेवाभिज्ञः । **विप्रबटुः**=ब्राह्मणो ब्रह्मचारीत्यर्थः ।

**पृ० ५** ॥ निजनित्यकर्मकालातिपातं मत्वा—"अहो" इति सखेदमाह । **चिररात्राय**=चिरं दीर्घकालमित्यर्थः । चिराय चिररात्राय 'चिरस्याद्याश्चिरार्थका' इत्यमरः । आद्यपदेन चिरं, चिरेण, चिरात्, चिरे इति गृह्यन्ते । **स्वप्नजालपरतन्त्रेण**= स्वप्नं निद्रा एव जालमानायः तत्परतन्त्रेण तद्बद्धेनेत्यर्थः । "**महान्**" इति । ब्राह्मे मुहूर्त्ते शयनस्यार्थतो निषिद्धत्वात् प्रातःकालस्य पुण्यसमयत्वम् "ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्" इति मनूक्तेः । **अतिवाहितः**=यापितः । **सन्ध्योपासनसमयः** = सन्ध्यानुष्ठानकालः । उक्तञ्च—

**पूर्वां सन्ध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।**
**पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥**

( मनु० । १०२ ) इति । **अवचिनोमि**=एकत्रीकरोमि । चिञ् चयने । इत्यस्य लटि प्रथमपुरुषैकवचने रूपम् । **कदलीदलम्** = रम्भापत्रम् । "कदली वारणबुसा रम्भामोचांशुमत्फला, काष्ठीला" इति (अमरः) । **अकुञ्च्य** = "कुञ्च" कौटिल्ये । भौवादिकः । क्त्वो ल्यप् । भुग्नं विधायेत्यर्थः । **तृणशकलैः** = तृण-खण्डैः । **सन्धाय**=जोडयित्वा । **पुटकम्**=समुद्गः पुट एव पुटकः । स्वार्थे कन् । "स्यात्समुद्गः संपुटः पुट" इति (वैजयन्ती) ।

**पृ० ६ ॥ "बटुरसौ"** इति । 'आकृत्या सुन्दरः' 'वर्णेन गौरः' इत्यत्र **'प्रकृत्यादिभ्य उपसङ्ख्यानम्'** ( वा० २ । ३ । ४१ ) इति तृतीया । आकृतिः=आकारो मूर्तिरित्यर्थः । आकारे देह आकृतिः" इति (वैजयन्ती) । जटाभिः=सटाभिः । अत्र—**'इत्थम्भूतलक्षणे'** (२।३।२१) इति तृतीया । **षोडशवर्षदेशीयः**=ईषदसमाप्तषोडशवर्षः। **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** । इति **कम्बुकण्ठः**=कम्बुः शङ्खः स इव (वृत्तानुपूर्वः) कण्ठः गलो यस्य सः । धर्मवाचकलुप्तोपमेयम् । "कम्बु शङ्खोऽस्त्री" इति (वैजयन्ती) । उपमासामान्यलक्षणं "काव्यदर्शे" यथा—

**यथाकथञ्चित्सादृश्यं यत्रोद्भूतं प्रतीयते । "उपमा नाम सा ज्ञेया"** इति । **आयतललाटः**=आयतं विस्तृतं ललाटं मस्तकं यस्य सः । सु=मांसलौ दीर्घौ बाहू यस्य सः सुबाहुः । **विशाललोचनः**=विशाले(आम्रफालिके इवेत्यर्थः)लोचने नेत्रे यस्य सः आसीत्=बटुरासीदिति क्रियाकर्तृसम्बन्धः । **कदलीदलेति** । कदली= रम्भा । कुञ्जो निकुञ्जः । कुञ्ज इवाचरतीति कुञ्जायते । **'कर्त्तुः क्यङ् सलोपश्च'** ( ३ । १ । ११ ) इत्युपमानात् कर्त्तुः सुबन्तादाचारार्थे क्यङ् । अकुञ्जायिष्ट इति कुञ्जायितम् । भूते क्तः । कदलीदलैः=रम्भापत्रै-कुञ्जायितस्य । क्यङि लुप्तोपमेयम् । "निकुञ्जकुञ्जौ वा क्लीबे लतापिहितोदरे" इत्यमरः । इदम् एतत्कुटीरस्य विशेषणम् । **परितः**=समन्तात् **"पर्यभिभ्याञ्च"** ( ५ । ३ । ९ ) इति तसिल् । **पुष्प-वाटिकायाः**=गृहोपवनविशेषस्य **पूर्वतः**=पूर्वस्यां दिशि । **'तसिलादिष्वाकृत्वसुचः'** (६।३।३५) इति पुंवद्भावः । परमपवित्रं=निर्मलं पानीयं जलं यत्र तत् । **परःसहस्रेति** । परःसहस्राणां असङ्ख्यातानां पुण्डरीकाणां सिताम्भोजानां पटलेन समूहेन परितः समन्ततः लसितं भूषितम् । छर्दिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना" इत्यमरः । **पतत्त्रीति**=पतत्त्रिणां पक्षिणां कुलं समूहः तस्य कूजितेन रवेण मुखितं मण्डितम् ।

पय:पूरपूरितम्=जलप्रवाहभरितम् । 'सरः' इति कर्तृपदम् । **दक्षिणतः**=दक्षिणस्यां दिशि । "पर्वतखण्ड आसीत्" इति सम्बन्धः । निर्झरेत्यादीनि प्रथमैकवचनान्तानि तस्य विशेषणपदानि । * **निर्झरः**=वारिप्रवाहः । तस्य **झर्झरध्वनिना** † झर्झर-शब्देन ध्वानितानि नादितानि दिगन्तराणि दिशां प्रान्तभागा यस्य सः । **फल-पटलेति**—फलानां यानि पटलानि समूहाः तेषामास्वादेन चपलिता=कूजनपटवी ‡ चञ्चुः त्रोटिर्यस्य एवंभूतं यत् § पत्त्रिकुलम्=पक्षिगणः तस्य आक्रमणेन आक्षे-पेण अधिकमत्यन्तं विनताः नम्रीभूताः || शाखाः शिखा येषां तादृशा ये ¶ शाखिनो वृक्षाः तेषां समूहेन व्याप्तः । सुन्दराः ** कन्दराः गुहा यस्य सः । "कदलीदल" इत्यरभ्य "पर्वतखण्ड आसीत्" इत्यन्ते गद्ये **प्रायोऽनुप्रासः** शब्दालङ्कारः । तल्लक्षणमाह "दण्डी"—

**वर्णावृत्ति रनुप्रासः पादेषु च पदेषु च ।**
**पूर्वानुभवसंस्कार–बोधिनी यद्यदूरता ॥ ( काव्यादर्शे )**

एतल्लक्षणानुसारमत्रानेकव्यञ्जनवर्णसादृश्यप्रतीतिरनुप्रासः । अयञ्च गौडसम्मत इत्यहं काव्यादर्शटीकयां "कुसुमप्रतिमायां" स्फुटमकार्षम् । तेन चात्र **गौडी** रीतिः ।

**पृ० ७** ॥ "यावद्देष" इति । **ब्रह्मचारी** = ब्रह्म वेदः । तदध्ययनार्थं व्रतमप्युपचारात् ब्रह्म । ब्रह्म चरितुं शीलमस्य । "**व्रते**" ( ३ । २ । ८० ) "**सुपि**—" इति वा णिनि प्रत्ययः । यद्वा—ब्रह्म तपो ज्ञानं वाऽवश्यं चरति अर्जयतीति—"**आवश्यकाधमर्ण्ययोर्णिनिः**" (३।३।१७०) इति णिनिः । ब्रह्मचारिणो व्रतं मनुस्मृतौ द्वितीयाध्याये विशेषतः प्रपञ्चितम् । **अलिपुञ्जम्** = भ्रमरगणम् । **उद्धूय**=निवार्य । **कुसुमकोरकान्**=पुष्पकलिकाः । **सतीर्थ्यः**= सहाध्यायी । "**समानतीर्थे वासी**"(४।४।१०७) इति यप्रत्यये "**तीर्थे ये**" ( ६।३।८७ ) इति समानस्य सादेशः । कस्तूरिकेति—†† कस्तूरिकायाः मृग-

---

* "उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः ।

† "झर्झर" इति जलशब्दानुकृतिः ।

‡ "चञ्चु स्त्रोट्यां स्त्रियां पुंसि गोनार्डाके व्यडम्बके" इति कोषः ।

§ "पतत्रिपत्रिपतगपतत्पत्त्ररथाण्डजा" इत्यमरः ।

|| "शिखाः शाखाः शिफा लता" इति अभिधानचिन्तामणिः ।

¶ "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः ।

** "दरी गुहा कन्दरो स्त्री" इति वैजयन्ती ।

†† "मृगनाभिर्मृगमदो नगः कस्तूरिकापि च" इति वैजयन्ती ।

नाभेः रेणुना रजसा ( रजःकणैरित्यर्थः ) रूपितः चर्चितः व्याप्त इति यावत्। "—इव श्याम" इति । **अत्रोत्प्रेक्षालङ्कारः** । स्वभावत एव तस्य वटोः श्यामत्वे सत्यपि तद्रूपेण सम्भाव्यमानत्वात् । उत्प्रेक्षालक्षणमुक्तं काव्यादर्शे—

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥ इति ।**

अस्यार्थस्तु मत्कृत 'कुसुमप्रतिमायां' द्रष्टव्यः। ***चन्दनचर्चितभालः**=गन्धसार लेपितललाटः । कर्पूरो=घनसारः । अगरुः=नृपार्हकम् ('अगर' इति यस्य भाषा) तयोः क्षोदेन=चूर्णेन छुरिताः=रूपिताः वक्षोबाहुदण्डाः उरःस्थलं भुजयुगलं च यस्य सः । **सुगन्धपटलैः** = सौरभसमुदायः । **निद्रामन्थराणि**=निद्रासालसानि । **कोरकनिकुरम्बकान्तरालसुप्तानि**=कलिकासमूहाभ्यन्तरे शयानानि । **मिलिन्दवृन्दानि**= भ्रमरगणान् । उन्निद्रयन्निव=जागरयन्निवेति अन्वयः । **अत्रायमाशयः**—श्यामवटुशरीरे अनेकेषां कस्तूरिकादिसुगन्धद्रव्याणां समवायः अतः कविना तदीयसुगन्धपटलैः कृत्वा भ्रमरगणजागरीकरणमुत्प्रेक्षितम्। **अवादीत्** = अगादीत्। **"वदव्रज हलन्तस्या चः"** (७।२।३) इति सिचि वृद्धिः । "अलं भो अलम्"—इतः परं प्रायः चूर्णकगद्यम्। **"अनाविद्धपदं चूर्णम्"**(वा०सू० ३।२४) इति तल्लक्षणात् एतदेव "छन्दोमञ्जर्यां" वृत्तकनाम्ना कथितम् । लक्षितञ्च—"**अकठोराक्षरं स्वल्पसमासं वृत्तकं मतम्**" इति । **सप्तवर्षकल्पाम्** = सप्तवर्षदेशीयाम् । **यावनत्रासेन** = यवनानामिदं यावनम्। **"तस्येदम्"**(४।३।१२०) इति **अण्** प्रत्ययः । अथवा **"तत आगतः"** (४।३।७४) इत्यण् । यवनेभ्य आगतो यावनः सचासौ त्रासो भीतिः तेन । **कलितेति**—कलितो रचितो मानवो देहो यया ताम् मानवावतारभूतां सरस्वती**मिवेत्युत्प्रेक्षा** । **सान्त्वयन्** = "सान्त्व" आनुकूल्यकरणे चौरादिकः । शत्रन्तोऽयम् **सान्त्वयन्** = प्रियालापादिना क्रोधादिकमुपशमयन् । **मरन्दमधुराः** = मकरन्दसंसर्गेण हृद्याः । **अपः** = जलानि । मकरन्दः पुष्परसः । मरन्दमकरन्दौ पर्यायौ । प्रायुङ्क्त च **कविराजः**—"अयि ! दलदरविन्दस्यन्दमानं मरन्दं तव किमपि लिहन्तो मञ्जु गुञ्जन्ति भृङ्गाः" इति । **पाययन्** = आचामयन् । "पा" धातोर्णिचि शतरि रूपम् । † **कन्दं** = मूलसस्यम् ।

---

* "चन्दनोऽस्त्री मलयजो भद्रश्रीः रोहणद्रुमः । श्रीखण्डो गन्धसारश्च" इति ( वैजयन्ती ) ।

† "कन्दमस्त्री मूलसस्यम्" "शालूकं कन्दमौत्पलम्" इत्युभयत्र ( वैजयन्ती ) ।

शालूकं वा । *त्रियामायाः = क्षपाया रात्रेरित्यर्थः । **परिमार्गणीयौ** = गवेषणीयौ **पितरौ** = माता च पिता च पितरौ । " **पिता मात्रा** " (१ । २ । ७०) इति सूत्रेणैकशेषः । " मातापितरौ " इत्यपि भवति । " अन्यतरस्याम् " इति पूर्वतोऽनुवृत्तेः । **संश्रुत्य**=आकर्ण्य । श्रुधातोः क्त्वो ल्यपि रूपम् । **महान् कन्दरः**= विशाला—† दरी । **महामुनिः** = योगी । **समाधौ** = योगे । उक्तञ्च—

" यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः ।
स नष्टसर्वसङ्कल्पः समाधिरभिधीयते ॥ इति ।

‡ **ग्रामणीग्रामीणग्रामाः** = ग्रामण्यो ग्रामाधिपाः । (चौधरी, लम्बरदार इति भाषायां प्रसिद्धाः ) ग्रामीणाः ग्रामे भवाः ग्राम्याः हालिकप्रभृतयः तेषां ग्रामाः समूहाः ।

अस्मिन् पदे श्रुतिकटुर्दोषः । परुषवर्णप्रायत्वात् । यद्यपि रौद्रादौ रसे व्यङ्ग्ये, नीरसे च काव्ये श्रुतिकटोर्न दोषत्वम्, तथापि प्रकृते—योगिविषयक-रतिभावे व्यङ्ग्ये अस्यास्ति भावापकर्षकत्वं तेन दोष एव । अतोऽत्र श्रुत्यनुप्रासोऽपि न भावोपकारीत्यलम् । " तं केचित् " इति—अत्र उल्लेखालङ्कारः । तल्लक्षणन्तु—

क्वचिद्भेदाद् ग्रहीतॄणां विषयाणां तथा क्वचित् ।
एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥ इति ॥

दण्डिमते तु रूपकविशेष एव **उल्लेखः** । तदेतत् प्रपञ्चितमस्माभिः "कुसुम-प्रतिमायाम् " । **ब्रह्मचारिवटुभ्यामदर्शि** = विलोकितः । " अदर्शि " इत्यत्र कर्मणि प्रत्ययः ।

पृ० ६ ॥ **सम्भ्रान्तौ** = हर्षोद्रेकेण कर्मसु त्वरावन्तौ । **अथेति**—समापिता विधिवदनुष्ठिता सन्ध्यावन्दनादिक्रिया व्यापारो येन सः तस्मिन् । **छात्रगणसह-कारेण** = विद्यार्थिसमूहसाहाय्येन । " समायाते गुरौ " इत्यादिषु " **यस्य च भावेन भावलक्षणम्** ( २ । ३ । ३७ ) इति । भावे सप्तमी । **प्रस्तुतासु** = प्रक्रान्तासु । **स्वागतसामग्रीषु** = अर्घ्यपाद्यादिषूपकरणेषु । **सनाथ्यताम्** = स्वायत्तीक्रियताम् । ( तन्निर्दिष्ट ) **काष्ठपीठम्** = दारवीं चतुष्पादिकाम् । **भास्वान्** = सूर्यः **उदयगिरिम्** = उदयाचलमिव **आरुरोह** = अधिशिश्रिये । ( अधि-श्रितवान् ) । **उपाविशच्च** = स्थितिमकरोत् ।

---

* " त्रियामा क्षणदा क्षपा " इति ( अमरः ) ।

† " दरी तु कन्दरो वा स्त्री " इति ।

‡ ग्रामणीः स्वामिनि श्रेष्ठे ग्रामेशे नापिते तु ना" इति ( वैजयन्ती ) ।

भास्वानिवेति वाक्ये **पूर्णोपमालंकारः** । उपमानोपमेयवाचकधर्माणां चतुर्णामप्युपादानात् । काष्ठपीठोदयागिर्यारोहणयोः परस्परं विम्बप्रतिविम्बभावेन समानधर्मता नेया ॥

**तस्मिन्निति । सुघटितम्** = सुन्दरावयवसंस्थानम् * **सान्द्राम्** = निविडाम् । घनामिति यावत् । **अङ्गारप्रतिमे** = अङ्गारतुल्ये स्वतोरागेण देदीप्यमाने इत्यर्थः । **मधुराम्** = श्रवणप्रियाम् । **गम्भीराम्** = सारार्थवतीम् । **चकिता इव सञ्जाताः** = कुतूहलिनो बभूवुः । अथ योगिराजमिति । **ईहितम्** = चेष्टितम् । **आलपितुम्** = वक्तुम् । **अश्रयत** = समाकर्ण्यत तत्रस्थैरितिशेषः ॥

**पृ० १०॥** † **पृच्छापरवशे** = जिज्ञासापराधीने ॥ 'भगवन्' इति । **कुतूहलम्**=श्रोतुमिच्छायां कौतुकम् । **ह्यः**=अतीतदिवसे । **सम्पादितं**=साधितं सायन्तनं कृत्यं सान्ध्यो विधिर्येन तस्मिन् । **कुशास्तरणम्**=कुशासनम् । **अधिष्ठिते**=आश्रित्य-स्थिते । "**अधिशीङ्स्थासां कर्म**" ( १ । ४ । ४६ ) इति अधिकरणस्य कर्मसञ्ज्ञा । **धीरः** = मन्दगतिः । **समीरः**=पवनः । **आन्दोल्यमानासु** = कम्पायमानासु । **व्रततिषु** = लतासु । "वल्ली तु व्रततिर्लता" इत्यमरः । यामिनी रात्रिरेव कामिनी नायिका तस्या चन्दनविन्दौ ललाटतिलके इव **इन्दौ** = चन्द्रे । "यामिनी कामिनी" इत्यत्र **रूपकालङ्कारः** । "उपमैव तिरोभूतभेदा रूपकमिष्यते" इत्याह **दण्डी । कौमुदीकपटेन**=ज्योत्स्नाव्याजेन । **सुधाधाराम्**=अमृतधारां वर्षतीवेति **उत्प्रेक्षा** । "वर्षतीवाञ्जनं नभ" इत्यादिवत् । लक्षणमुक्तं प्राक् । **शुश्रूषुषु** = श्रोतुमिच्छुषु । "**सनाशंसभिक्ष उः**" (३।२।१६८) इत्युप्रत्ययः । अत्रापि **उत्प्रेक्षा । मौनम्**=तूष्णीम्भावम् । **पतगकुलेषु** = पक्षिसंघेषु । **कैरवाणां**=रात्रिविकाशिनां कमलानां विकाशेन प्रफुल्लनेन यो हर्षप्रकाशः मोदाविर्भावः तेन मुखरेषु गुञ्जत्सु **चञ्चरीकेषु** = भ्रमरेषु । "इन्दिन्दिरो मधुकरश्चञ्चरीको मधुव्रत" इति ( वैजयन्ती ) । सायंकालवर्णनामिदम् । **अस्पष्टाक्षरम्** = अस्पष्टवर्णम् । **कम्पमाननिश्वासम्** = कम्पमानः एजमानः निश्वासो यत्र तत् । **श्लथत्कण्ठम्**=रुद्धगलमित्यर्थः । **घर्घरितस्वनम्** = पेषणीस्वनसममित्यर्थः, अत्यवधानश्रव्यत्वात्=समधिकतत्परतायां सत्यामेव श्रोतुं योग्यत्वात् । **अनुमितदविष्ठतम्**—अतिशयेन दूरमिति "दविष्ठम्" । दविष्ठस्य भावः दविष्ठता । अनुमिता दविष्ठता अतिदूरता यस्य तत् । **क्रन्दनम्** = रोदनम् । **अश्रौषम्** । श्रुधातोर्लुङि उत्तमैकवचने रूपम् ।

* "घनं निरन्तरं "सान्द्रम्" इति अमरः ॥

† "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः ।

"अस्पष्टाक्षर" मित्यारभ्य 'क्रन्दनम्' इत्यन्ते गद्ये **स्वभावोक्ति**रलङ्कारः। आह च दण्डी—

**नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा॥** इति।

**आदिश्य** = आज्ञप्य।

**पृ० ११॥** निश्वसती मृगीव **व्याघ्राघ्राता**=व्याघ्राक्रान्ता। अत्रोपमालङ्कारः। **सवेपथुः** = सकम्पा। "**ट्वितोऽथुच्**" (३।३।८९) इति टुवेपृधातोरथुच्। "ताभ्र" इति। "चन्द्रकलयेव निर्मिताम्। नवनीतेन = हैयङ्गवीनेन इति निर्मिताम् इत्युभयत्राप्युत्प्रेक्षा। **मृणालगौरीम्**="मृणालमिवगौरीम्" इत्यत्र '**उपमानानि सामान्यवचनैः**' (२।१।५५) इत्युपमानसमासः। लुप्तोपमा। **कुन्दकोरकः** = कुन्दकलिका तस्याग्रमिव दन्ता यस्याः सा ताम्। '**अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च**' (५।४।१४५) इति दन्तस्य 'दतृ' इत्यादेशः '**उगितश्च**' (६।३।४५) इति स्त्रियां ङीप्। **सक्षोभम्** = ससाध्वसम्। "मा भैषीः" इत्यत्र "**माङि लुङ्** (३।३।१७५) **न माङ्योगे**" (६।४।७४) इत्यट् न। भयं मा विधेहीत्यर्थः। "मारोपयः" इत्यत्र "**स्मोत्तरे लङ् च**" (३।३।१७६) इति लङ्। अडिनषेधश्च पूर्ववत्।

**पृ० १२॥ शोकज्वालावलीढम्**=चिन्तातुरामित्यर्थः। **क्रोडे**=अङ्के। **मुग्धतया** = बालिशतया। **अपरिकलित—वाक्पाटवा** = अपरिकलितमज्ञातं वाक्पाटवं भाषणचातुर्यं यया सा। **भयने** = यावनत्रासेन। विशेषेण शिथिलः स्खलन् वचनविन्यासो वाक्यरचना यस्याः सा। **अबोधयत्**=व्यशामयत्। **चकितचकिता**= अतिचकिता। "**आबाधे च**" (८।१।१०) द्वित्वभावः। एतेन बालायाः पीडा व्यज्यते। **नेदीयसी**=अतिसमीपवर्त्तिनि। '**अन्तिकबाढयोर्नेदसाधौ**' (५।३।६३) इति अन्तिकस्य नेदादेशः। **ब्राह्मणस्य*तनया**=पुत्रीं। **सुन्दरीम्**=रम्याम्। **आकलय्य** = निश्चित्य। **यवनतनयः**=मुसलमानः। **क्रन्दन्तीम्**=विलापं कुर्वाणाम्। **अपससार** = पलायाञ्चक्रे। **अध्वानम्** = मार्गम्। **अतिक्रम्य** = उल्लङ्घ्य। **असिधेनुकां**=छुरिकाम्। "छुरिका चासिधेनुका" इत्यमरः। **सन्दर्श्य**=पुनःपुनर्दर्शयित्वा। **विभीषिकया** = भीतिप्रकटनेन **अस्याः** = बालिकाया एव। **क्रन्दनको-**

* "वस्तुतस्तु—नेयं ब्राह्मणतनया किन्तु क्षत्रियकन्या, नवां मात्रा सह स्नातुं गता किन्तु दास्या, तथापि पुरोहितमेव पितरं दासीमेव मातरं मन्यमाना तथाऽबूबुधत्" इति विजयपताकानामटिप्पण्याम्।

लाहलम्=रोदनकलहम् । **कालकम्बलः**=कालस्य यमस्य कम्बल इति कालकम्बलः इव । **भल्लूलः** = ऋक्षः ।

**पृ० १३ ॥ पलाशपलाशिश्रेण्यां** = पलाशः किंशुकः, पलाशी तरुः । श्रेणी = राजिः । किंशुकतरुपङ्क्तौ इत्यर्थः । **घुणाक्षरन्यायेन** = घुणः काष्ठवेधकः कृमिविशेषः । तेन काष्ठानुवेधे क्रियमाणे यथा अकस्मात् अक्षरमिवाभाति तथैव तत्कार्यमवितर्कितमेवोपनतं भवति, तस्मिन् सति घुणाक्षरन्याय उच्यते अकस्मादित्यर्थः ।

**यावद्द्वयेन** । "पुना रोदितुम्" इत्यत्र "**रोरि**" (८।३।१४) इति रेफलोपे "**ढ्रलोपे**"—( ६।३।१११ ) इति पूर्वस्याणो दीर्घः । "कोपज्वालाज्वलितइवे" ति योगिनः ससम्भ्रता व्यज्यते । **भारतभुवम्** = भारतवर्षमित्यर्थः । गतस्य = परलोकं प्राप्तस्य । "सप्तदशशतकानी"ति कथनेन " शिवराज " महाराजकालः सूचितः । "काऽधुना" इत्यादिगद्येन यावनराज्यकाले यावनाः अत्याचाराः वर्ण्यन्ते । "जयजयध्वनिः तीर्थे तीर्थे घण्टानादः" इत्यादिषु "**सर्वस्य द्वे**" (८ । १ । १) इत्यधिकारे "**नित्यवीप्सयोः**" ( ८।१।४ ) इति वीप्सायां द्विर्भावः । " मठावसथ्यौ छात्रादिवासे" इति ( वैजयन्ती ) । **वेदाः** = ऋगाद्याः चत्वारो हिन्दूनामादिमं धर्मपुस्तकमित्यर्थः । **विच्छिद्य** = बलादादाय । **वीथिषु** = मार्गेषु । " वीथीपङ्क्त्यध्वनोरपि " इति ( वैजयन्ती ) । **धर्मशास्त्राणि** = मन्वादिमहर्षिप्रणीताः स्मृतिग्रन्थाः । **धूमध्वजेषु** = वन्हिषु ।

**पृ० १४ ॥ ध्मायन्ते** = भस्मसात्क्रियन्ते । **पुराणानि** = श्रीमद्भागवतादीनि । **पिष्ट्वा** = चूर्णीकृत्य पाटयित्वेत्यर्थः । **भाष्याणि** = व्याकरणमहाभाष्यादिग्रन्थाः **भ्राष्ट्रेषु** =, चणकादिभर्जनपात्रेषु । 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः । **भर्ज्यन्ते** = दाह्यन्ते इत्यर्थः । **दाराः** = भार्याः । "भार्या जाया अथ पुंभूम्नि † दाराः स्युः" इत्यमरः । **अपह्रियन्ते** = चौर्यन्ते बलात् छिद्यन्ते वा । **चूर्णकं** गद्यमेतत् । लक्षणमुक्तं प्राक् । **वैदर्भी** रीतिः । **प्रसादो** गुणः । दण्डिमते तु—" समता " नाम गुणोऽपि । यत उक्तं तेनैव—

> **समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।**
> **बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ इति ।**

---

† हेमचन्द्रमते तु टाबन्तोऽपि " दारा " शब्दः । उक्तञ्च तेन—

> **क्रोडा हारा तथा दारा त्रय एते यथाक्रमम् ।**
> **क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः ॥ इति ।**

एवम्—"क्वाऽधुने" त्यादि आरभ्य "परित" इत्यन्ते स्फुटबन्धनिर्वाहात् "समता" नाम गुणो ज्ञेयः।

योगिराडिति—पार्वतीयान् = पर्वतप्रदेशनिवासिनः शकान्। स्वराजधानीम् = उज्जयिनीम्। आदित्यपदेति—वीरविक्रमादित्यनामेत्यर्थः। तद्विजयपताकाः = तदीयविजयवैजयन्त्यः।

पृ० १५ ॥ "मम चक्षुषोरग्रत एव समुद्धूयन्ते" = कम्पमाना भ्राजन्ते। **पटहगोमुखादीनाम्**=वाद्यविशेषाणाम्। **निनादः** = ध्वानः। "कथं कथयथ" इति सविस्मयोक्तिः। अत्र **भाविकालङ्कारः**—"अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम्" इति तल्लक्षणात्।

बद्धसिद्धासनैः = बद्धं वशीकृतं सिद्धासनम् = योगाङ्गाष्टकवर्त्तिसाधनविशेषो यैः अष्टसङ्ख्यानां योगसाधनानां मध्ये तृतीयमासनं नाम साधनम्। आस्यतेऽस्मिन् अनेनेति वा आसनम्। तच्च द्विविधम् वाह्यशारीरभेदात्। तत्र वाह्यम्—चैलाजिनकुशोत्तरम्" इत्यादि गीताद्युक्तम्। शारीरञ्च-पद्मस्वस्तिकादिभेदेन नानाविधम्। तेषु सिद्धासनमपि। तल्लक्षणन्तु—

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत्—
मेढ्रे पादमथैकमेव हृदये कृत्वा हनुं सुस्थिरम्।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्भ्रुवोरन्तरं
ह्येतन्मोक्षकपाटभेदजनकं * "सिद्धासनं" प्रोच्यते ॥

निरुद्धनिश्वासैः = निरुद्धा वशीकृता निश्वासाः प्राणा यैः आसनस्थैर्यानन्तरं प्राणायामनामकसाधनपरैरित्यर्थः। वाह्यकोष्ठ्यवायोरन्तर्बहिर्गतिविच्छेदः प्राणापानयोरैक्यलक्षणः "प्राणायामः"। अयमेव "हठयोग" इत्युच्यते। तदुक्तम्—

हकारेण तु सूर्योऽसौ ठकारेणेन्दुरुच्यते।
सूर्याचन्द्रमसोरैक्यं "हठ" इत्युच्यते बुधैः ॥

---

* सिद्धासनस्य महिमा तु—
चतुराशीति पीठेषु सिद्धमेव सदाऽभ्यसेत्।
द्वासप्ततिसहस्राणां नाडीनां मलशोधनम् ॥
आत्माध्यायी मिताहारी यावद् द्वादशवत्सरं
सदा सिद्धासनाभ्यासाद्योगी निष्पत्तिमाप्नुयात् ॥ इत्यादिर्बहूक्तः।

अयमनेकविधो योगग्रन्थेषु वर्णितः सद्गुरूपासनासुलभः प्रकृते बहूपयोगाभावान्न मया प्रपञ्च्यते । **प्रबोधितकुण्डलिनीकैः** = प्रबोधिता उद्योतिता कुण्डलिनी नाम्ना प्रसिद्धा पराशक्तिरूपा ब्रह्मणो मूर्त्तिः सप्ताहिसमानाकरा नाडीरूपा यैः । उक्तञ्च **योगशिखोपनिषदि**—

**गुदमेढ्रान्तरालस्थं मूलाधारत्रिकोणकम् ।**
**यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ॥**
**यस्मादुत्पद्यते वायुर्यस्माद्वन्हिः प्रवर्त्तते ।**
**यस्मादुत्पद्यते हंसो यस्मान्नादः प्रवर्त्तते ॥**

इत्यादि । इयञ्च कुण्डलिनी शक्तिः—मूलप्रकृति-महत्तत्वाहङ्कार-पञ्चतन्मात्रात्मिकाऽष्टप्रकृतिरूपा इत्यादि शाण्डिल्योपनिषदादिग्रन्थेषु स्पष्टम् । **विजितदशेन्द्रियैः** = विजितानि वशीकृतानि दश इन्द्रियाणि यैः । शान्तैः दान्तैरित्यर्थः । **अनाहतनादतन्तुम्** = अनाहतनादः हृदयस्थितद्वादशदपद्मवर्त्तिनः अनाहताख्यात् पद्मात् समुत्थितो ब्रह्ममयः शब्दोऽनाहतनादःतस्य तन्तुमिव तन्तुं सूक्ष्मावस्थालतिकाम्। **अवलम्ब्ये** = आश्रित्य । **आज्ञाचक्रम्**=भ्रुवोर्मध्ये द्विदलात्मकं चक्रम् "आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम्" इत्युक्तेः । **संस्पृश्य** = तत्र ध्यानावलम्बं कृत्वा । **चन्द्रमण्डलं**=ततः परवर्त्तिषोडशकलात्मकं षोडककलोपेतं दयादिसिद्धिप्रदं सोमचक्रं **भित्वा** = प्रविध्य । **तेजःपुञ्जम्** = सोमचक्रवर्त्तिनि महामहसि आसक्तिम् **अविगणय्य**=उपेक्ष्य । **सहस्रदलकमलस्य** = ब्रह्मरन्ध्रवर्त्तिसहस्रारचक्रस्य (यत्र स्थितिभाजा योगिनः सुधासारधाराभिस्तनुर्वर्धते यच्चानन्दकारणं दिव्यमार्गमुच्यते ) अन्तःप्रविश्य, **परमात्मानम्** = परब्रह्म साक्षात्कृत्य । **तत्रैव** = परब्रह्मणि **रममाणैः** क्रीडद्भिः । **मृत्युञ्जयैः** = वशीकृतकालवेगैः । **आनन्दमात्रस्वरूपैः** = अस्मिताध्यानात्परवर्त्तमानैः धर्ममेघनामकसमाधिस्थैरिति यावत्। अत्र गद्ये **अप्रतीताख्यो** दोषः । आसन—कुण्डलिनी- अनाहतनादादिशब्दानां योगशास्त्रमात्रप्रसिद्धत्वात् अस्य बीजं तु—योगशास्त्रानभिज्ञस्यार्थानुपस्थितिरेव । तच्छास्त्रविज्ञस्य प्रतिपाद्यत्वे स्वयं वा परामर्शे नैव दोषः । प्रत्युत्त व्युत्पत्तिसूचकत्वेन गुणत्वमेवेति साहित्यविदां परामर्शः । **कालवेगः** = कालगीतिः पञ्चाशत्तमः = पञ्चाशत्सङ्ख्यापूरकः ॥

**पृ० १६ ॥ यौधिष्ठिरे** = युधिष्ठिरसम्बन्धिनि । युधिष्ठिरे राज्यं शासति स तीत्यर्थः । कलितसमाधिः = आश्रितसमाध्यवस्थः । **तत्** = योगिराजवचः । **सश्रुत्य** = आकर्ण्य "ब्रह्मचारिगुरुः = प्रवक्तुमारभत" इत्यन्वयः । कीदृशः—
भारतवर्षीयानां दशा अवस्था तस्याः संस्मरणं ... ...

हृदयस्थः मनसि वर्त्तमानः यः प्रसादः प्रसन्नता, तस्याः संभारोऽतिशयः तस्य उद्गिरणश्रमेण वमनप्रयासेनेवेत्युत्प्रेक्षा । **अतिमन्थरेण**=मन्दतरेण स्वरेण । "योगिराजस्य धैर्यं माऽवधीरय" इति सम्बन्धः । **धर्मध्वंसनघोषणैः** = धर्मोन्मूलनडिण्डिमैः । **कातराभ्याम्** = दीनाभ्याम् । **दम्भोलिघटिता** = दम्भोलिर्वज्रं तेन घटिता रचिता वज्रमयीत्यर्थः । **दारुणेति**—दारुणा भयङ्कराः ( धर्मध्वजित्वात् ) ये दानवाः म्लेच्छा एव तेषामुदन्तस्य = वृत्तस्य उदीरणैः आख्यानैः । "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः । **न दीर्यते** = न द्वैधीभवति । दृङ् विदारणे इत्यस्मात् कर्मणि तङ् । **लोहसारमयम्**=अयसा घटितम् । **यावनान्**=यवनेभ्य आगतान् । **परःसहस्रान्**=सहस्रसंख्यातोऽपि परान् "**राजदन्तादिषु परम्**" इति सहस्रशब्दस्य परनिपातः । पारस्करादित्वात्सुडागमः । विशेष्यनिघ्नत्वाद्वाच्यलिङ्गत्वमिति ।

**पृ० १७ ॥ उपक्रमम्**=उत्थानिकाम् । **विमनायमानम्**=विगतं स्वावस्थातः प्रच्युतमनवस्थितं मनो यस्य सः विमनाः । विमना इवाचरतीति विमनायते । "**कर्त्तुः क्यङ् सलोपश्च**" ( ३ । १ । ११ ) अनेन सूत्रेण "विमनस्" प्रातिपदिकात् क्यङ् । पश्चात् लटः शानचि कृते "**आनेमुक्**" ( ७ । २ । ८२ ) इति **विमनायमानम्** = दुर्मनायमानम् । अत्र **लुप्तोपमा** । **हरिद्रेति**—हरिद्रया रजन्या द्रवेण रसेन क्षालितं धौतमिव **वदनम्**=मुखम् । **उत्प्रेक्षालङ्कारः** । निपतन्तः स्खलन्तो वारिबिन्दवः अस्रकणाः याभ्यां । नयने= नेत्रे । **अञ्चितरोमकञ्चुकम्** = सरोमाञ्चमित्यर्थः । सकलानर्थमयः=सकलानर्थ प्रचुरः । "**तत्प्रकृतवचने मयट्**" ( ५ । ४ । २१ ) इति मयट् । एवमन्यत्रापि । * **जिग्लापयिषामि** = ग्लापयितुमिच्छामि इत्यर्थः । एवम्— **चिखेदयिषामि** = खेदयितुमिच्छामि । **सकलकलाकलापकलनः**= सकलकालासमूहरचयिता । **सकलकालनः** = सकलस्य जरयिता । **करालः**= भयङ्करः "स कालकाल" इति श्रुतेः । **पयःपूरपूरितानि** = अगाधजलभरितानि । **अकूपारतलानि**=समुद्रतलानि । "समुद्रोब्धिरकूपार" इत्यमरः । **मरूकरोति** = मरुदेशसमानि स्थलानि करोति । अमरुः मरुः सम्पद्यते तं करोतीति "मरूकरोति" "**कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः**" ( ५ । ४ । ५० )

---

* एकः ( देवदत्तादिः ) ग्लायति । तमन्यः प्रेरयतीति—ग्लापयति । णिच् । ग्लापयितुमिच्छतीति—जिग्लापयिषति । णिजन्तात् सन् । उत्तमपुरुषैकवचने— जिग्लापयिषामि = मिम्लापयिषामि ।

"अभूततद्भाव इति वाच्यम्" इत्यनेन अभूततद्भावे च्विः । **सिंहव्याघ्रेति**— सिंहः = पञ्चास्यः । व्याघ्रः = शार्दूलः । भल्लूकः = ऋक्षः । गण्डकः = खड्गी । फेरुः = शृगालः । शशः = रोमकर्णः एतेषां सहस्रैर्व्याप्तान् । **अरण्यानि**= जङ्गलान् । जनपदीकरोति = अजनपदः जनपदः सम्पद्यते तं करोतीति पूर्ववत् च्विप्रत्ययः । **तडागगोष्ठमयानि** = तटाकगोव्रजप्रचुराणि नगराणि = पुरः **काननीकरोति** = जङ्गलीकरोति ।

**पृ० १८ ॥ यायजूकैः** = इज्याशीलैः । **'यजजपदशां यङः'** (३। २। १६६) इत्यूकः। 'इज्याशीलो यायजूकः' इत्यमरः। राजसूयादियज्ञाः । आदिना अश्वमेधान्तग्रहणम् । **'राजसूयसूर्यमृषोद्यरुच्यकुप्य—'** (३ । १ ११४) इत्यनेन साधुः । **व्ययाजिषत** = कृतानि । **मन्दुरीक्रियन्ते** = वाजिशाली-क्रियन्ते । 'वाजिशाला तु मन्दुरा' इत्यमरः । **सत्यः** = पतिव्रता नार्यः । बलात्कारेण व्यभिचार्यन्ते । **धौरधौरेयः**=धीराग्रणीः । **विधुरयसि**=विकलयसि । **शुश्रूषते** = श्रोतुमिच्छति। **'ज्ञाश्रुस्मृदृशां सनः'** (१।३।५७) इत्यात्मनेपदम् । **'अथ स मुनि'** रिति । धैर्येण सममेव परलोकं सनाथितवति' इत्येवं सर्वैः तृतीयान्तैः सम्बन्धो ज्ञेयः । **सहोक्तिरलङ्कारः** । "सहोक्तिः सहभावेन कथनं गुणकर्मणाम्" इति दण्डिलक्षणात् । * **पारस्परिकेति**—पारस्परिकेण = परस्परं समुत्थितेन विरोधेन कलहेन विशेषेण शिथिलीकृतानि स्नेह-बन्धनानि यैः तेषु ।

**पृ० १९ ॥** भामिनीनां प्रणयकोपवतीनां कामिनीनां ये भ्रूभङ्गाः सकटाक्ष-मीक्षणानीत्यर्थः भूरिभावाः = हावाद्याश्चेष्टाविशेषाश्च तेषां प्रभावेण वशीकरणरूपेण पराभूतं तिरस्कृतं वैभवमैश्वर्यं येषाम्, एवंभूतेषु भटेषु शूरेषु। **स्वार्थेति**—स्वार्थस्य या चिन्ता सिद्ध्यपायसरणम् तस्य सन्तानः = परम्परा एव वितानम् उल्लोचः तदेक-तानेषु तन्मात्रैकपरेषु **अमात्यवर्गेषु** = मन्त्रिसमूहेषु । **प्रशंसामात्रप्रियेषु** = 'त्वमिन्द्रोसि वरुणोऽसि भीमोसि, कर्णोऽसि' इत्याकारकशुष्कस्तुतिमात्रलोलुपेषु **प्रभुषु** = राजसु । **बुधजनेषु** = पण्डितेषु । **गजिनीस्थानवासी महामदः** = 'महमूदगजनवी' इति नाम्ना प्रसिद्धः यवनः = म्लेच्छः । **ज्ञातास्वादः** = अभ्यासपरिचयी सन् । † **अलुलुण्ठत्** = धाटीमारमाचक्राम । **गूर्जदेशचूडायितम्** = गुर्जरदेशशिरोभूषणम् । **धूलीचकार**=अनीनशत् ।

---

* परस्परस्मिन् भवः **पारस्परिकः** । अध्यात्मादित्वात् ठञ् ।

† लुठिधातोः स्वार्थे णिचि लुङ् ।

महावैडूर्याद्या मणिविशेषाः । **एतैर्जटितानि** = संहितानि । 'जट झट' संघाते इत्यस्य धातोः रूपम् । कपाटानि = अरराणि । 'कपाटमररं तुल्ये' इत्यमरः । 'कपाटश्च कवाटश्च त्रिपु स्यादररं न ना' इति (वाचस्पतिः) **गृहावग्रहणीः** = देहलीः । **भित्तीः** = कुड्यानि । **वलभीः** = गोपानसीः । 'गोपानसी तु वलभीः छादने वक्रदारुणि' इत्यमरः । **विटङ्कानि** = कपोतपालिकाः=गृहनिर्मितान् पक्षिगृहान् इत्यर्थः । 'कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्' इत्यमरः । **निर्मथ्य** = मर्दयित्वा भञ्जयित्वेति यावत् । **रत्ननिचयम्** = हीरकादिमणिराशिम् । शतद्वयमणसुवर्णशृङ्खलाऽवलम्बिनीं चञ्चता समुच्छलता चाकचक्येन चमत्कृत्या चकितीकृतः विस्मेरीकृता अवलोचकलोचनानां द्रष्टृजननयनानां निचयः समूहो यया ताम् । **अनुप्रासः** । एवंभूतां महाघण्टाम् । **प्रसह्य** = बलात्कृत्य **महादेवमूर्त्तौ** = त्र्यम्बकप्रतिमायाम् ।

पृ० २० ॥ **गदाम्**-नाम शस्त्रम् **उदतूतुलत्**=प्राहिणोत् । चौरादिकात् मानार्थकात् उत्पूर्वात् 'तुल' धातोः कर्त्तरि स्वार्थे णिचि लुङि रूपम् । **मास्प्राक्षीः** = माङ्योगे लुङ् । अटो निषेधश्च । **त्रायस्व** = अवशेषय इत्याशयः । **पूजकवर्गेषु** = देवलकगणेषु । **विक्रीणे** = विक्रयं करोमि । **भिनद्मि**= छिनद्मि । भिदिर् विदारणे रौधादिकः । **जनतायाः** = जनसमुदायस्य । जनानां समूहो जनता । "**ग्रामजनबन्धुभ्यस्तल्**" (४ । २ । ४३) इति सामूहिकस्तल् । **अतुत्रुटत** = अभिनत् । **मूर्त्तिमध्यात्** = प्रतिमामध्यात् । **उच्छलितानि**=उत्पतितानि । **परितः**=समन्ततः । **अवाकीर्यन्त**=व्यशीर्यन्त विकीर्णानि अभूवन् इत्यर्थः । **दग्धमुखः**=हतको दुष्ट इति यावत् । **क्रमेलकपृष्ठेषु** = उष्ट्रपृष्ठेषु ॥

पृ० २१ ॥ **गोरदेशवासी** = अयं देशः सिन्धुनद्याः पश्चिमायां दिशि म्लेच्छप्रधानः गजिनीसमीपवर्त्ती च । **शहाबुद्दीननामा** = शहाबुद्दीनगोरी इत्याख्यातः । **महामदकुलम्** = महमूदवंशम् । **धर्मराजलोकाध्वनि** = यमराजलोकमार्गे । **अध्वनीनम्**=पान्थं । **विधाय**=कृत्वा । अत्र **सौकुमार्यं** नाम गुणः । एतल्लक्षणं **जयदेव** इत्थमाह—'सौकुमार्यमपारुष्यं पर्यायपरिवर्त्तनात्' इति । अमङ्गलशब्दपरित्यागेन तत्पर्यायशब्दप्रयोगः सौकुमार्यमिति सारः । प्रपञ्चितश्चायमस्माभिः काव्यादर्शे 'कुसुमप्रतिमायाम्' । चतुरङ्गिण्या = **अनीकिन्या** चतुराङ्गिणीसेनया । 'हस्त्यश्वरथपादातं सेनाङ्गं स्यात् चतुष्टयम्' इत्यमरः **शीतलशोणितान्**=युद्धेच्छारहितान् क्षीणानित्यर्थः । '**असयन्**'=खण्डयन्

**अश्वयाम्बभूव**=अश्वैरतिचक्राम । **'तेनातिक्रामति'** इति गणसूत्रेण णिच् । **विस्मृतराजनीतिम्** = विस्मृता * राजनीतिर्येन तम् । **विशस्य** = घातयित्वा अकण्टकम् = निःशत्रु । **अकीटकिट्टम्**=कीटकिट्टवर्जितम् महारत्नमिवेत्युपमा **अस्थिगिरयः**=कीकसपर्वताः । अनेन महान् हिन्दुहत्याकाण्डो व्यज्यते । **रिङ्गत्तरङ्गभङ्गा** = रिङ्गत्तः सञ्चलन्तः तरङ्गाणामूर्मीणां भङ्गा रचनाविशेषाः यस्यां सा । **शोणितशोणा** = रुधिराक्ता । **शोणीकृता** = शोणनदसादृश्यं नीता । **भूमिसात्कृतानि** = धूलिसात्कृतानि ध्वस्तानीत्यर्थः । " **विभाषा साति कार्त्स्न्यें** ( ५ । ४ । ५२ ) इत्यनेन भूमिशब्दात् स्वार्थे सातिप्रत्ययः कार्त्स्न्यें गम्ये । कृत्स्नं ( देवमन्दिरं ) भूमिः सम्पद्यते इति **भूमिसात्** ।

**पृ० २२** ॥ **राक्षसाः** = निर्दयाः हिंसाप्रियाश्च । **अदीदलन्** = घातयामासुः । **गूढशत्रुः** = राजपुत्रवंशीयैः सह विवाहादिसम्बन्धसञ्चालनेन अन्तरतः सर्वान् म्लेच्छान् विधित्सुरिति युक्तं तस्य गूढशत्रुत्वम् । " मूर्त्तिमानिव कलियुगः ॥ इत्यादौ **उत्प्रेक्षा** । **अवरङ्गजीवः** = ' औरङ्गजेब ' नाम्ना ख्यातः ।

**दक्षिणदेश** इति । **अरण्यानी** = महत् अरण्यमरण्यानी । **'हिमारण्ययोर्महत्वे'** ( वा० ४ । १ । ४९ ) इति वार्त्तिकेण आनुगागमः ङीप् च ।

**महाराष्ट्रकेसरिणः** = महाराष्ट्राः केसरिण इव इत्युपमितसमासः । **हस्तयितुम्** = वशीकर्त्तुमित्यर्थः । **दक्षिणदेशशासकत्वेन** = दक्षिणदेशशासनायां प्रतिनिधित्वेन । **यवनेति**- यवनानां माहम्मदानां शोणितस्य रुधिरस्य पिपासायामाकुलः कृपाणोऽसिर्यस्य सः । **वीरतेति**—वीरस्य भावो वीरता शौर्यम्-सैव **सीमन्तिनी** = सुभगाङ्गना, तस्याः सीमन्ते = केशवेशे सुन्दरं हृद्यं यत्सान्द्रं घनं **सिन्दूरदानम्** = † सिन्दूरस्य नागकेसरस्य दानं चर्चनम् तेन देदीप्यमानोऽतिशयेन भ्राजमानो दोर्दण्डो बाहूदण्डो यस्य सः । अत्र **श्रुत्युप्रासः** शब्दालङ्कारः । **रूपक**ञ्चार्थालङ्कारः । **मुकुटमणिः** = शिरोमणिः ।

---

* सा चेयम्—

> **वयं पञ्च वयं पञ्च वयं पञ्च शतञ्च ते ।**
> **परैः साकं विवादे तु वयं पञ्चाधिकाः शतम् ॥**

इत्येवं रूपा यौधिष्ठिरी नीतिः ।

† ' **सिन्दूरं** नागकेसरम् ' इत्यमरः ।

**सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके ॥**

**सिन्दूरी** रोचनारक्तचोलिकाधातकीषु च ' इति ( मेदिनी )

पृ० २३ ॥ **स्वधर्माग्रहग्रहग्रहिलः** = स्वधर्मस्य = सनातनधर्मस्य यः आग्रहग्रहः हठादपि पालनं तत्र ग्रहिलो दृढतर इत्यर्थः 'शिव इवे' ति **उपमा उत्प्रेक्षा** वा। पुण्यनगरात्=पूनानामकपुरात्। **नेदीयसि** = अतिनिकटवर्त्तिनि। अतिशयेनान्तिक इति 'नेदीयान्'। '**अन्तिकबाढयोर्नेदसाधौ**' (५। ३ ६३) इति सूत्रेण अन्तिकस्य ने दादेशः। **योगबलेति**—योगबलेन योगसामर्थ्येन '**भुवनज्ञानं सूर्ये संयमात्**' (यो०) इति पातञ्जलप्रतिपादितसंयमविशेपलब्धेन सकलज्ञानहेतुभूतशक्तिविशेषेणेत्यर्थः अवगतो ज्ञातः सकलो निखिलो गोप्यतमः रहस्यात्मको वृत्तान्तो यैः तेषु।

पृ० २४ ॥ **उरीकृतम्** = स्वीकृतम्। ऊरीक्रियते स्म इति व्युत्पत्तिः। क्तः (३। २। १०२) प्रत्ययः। **उदतीतरत्** = उत्तरमदात्। **उपत्यकाम्**= अद्रेरासन्नां भूमिम्। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। अधित्यकाम्= अद्रेरूर्ध्वां भूमिमित्यर्थः। **निर्मक्षिके** = निर्जनत्वे। अत्ययेऽव्ययीभावसमासः। **अन्यमनस्के** = अन्यस्मिन् मनो यस्य।

पृ० २५ ॥ **मर्मरः**=शुष्कपर्णरवः। 'अथ मर्मरः—स्वनिते वस्त्रपर्णानाम्' इत्यमरः। **पादक्षेपः**=पादध्वनिः। **एकतानेन**=दत्तचित्तेन। **कुटीरेति**= कुटीरस्य निकटस्थाः समीपवर्त्तिनो ये **निष्कुटकाः** = गृहारामाः तेषां कदलीकटे रम्भाराजौ। **द्वित्राः** = द्वौ वा त्रयो वा। '**सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्या सङ्ख्येये**' (२।२।२५) इति सूत्रेण सङ्ख्यावाचिनोर्बहुव्रीहिः। कुटीरवलीके = कुटीरपटलप्रान्ते। 'वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः' इत्यमरः। **असीनाम्** = खड्गानाम्। **रिक्तहस्तेन**=शून्यहस्तेन। कपोलतल—**विलम्बमानान्** = गण्डस्थलचारिणः। **चक्षुश्चुम्बिनः** = नेत्रस्पृशः। **कुटिलकचान्** = वक्रान् शिरोवालान्। **वामकरेण**=दक्षिणेतरेण पाणिना।

पृ०२६॥ **किञ्चिदिति**—किञ्चित् कोपेन कषायिते कलुषिते नयने चक्षुषी यस्य सः। करे कम्पितः सञ्चलन् कृपाकृपणः दयाशून्यः दुर्धरः कृपाणः खड्गो यस्य सः 'महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररसद्वयस्नातः' इत्यत्र **पूर्णोपमा**। **लताप्रतानेति**—लतानां वल्लीनां प्रतानवितानैः विविधसंवलनैः वेष्टितं वलयितं यत् रम्भास्तम्भत्रितयं तस्य। नीलवस्त्र-**खण्डवेष्टितमूर्धानम्** = नील्या रक्तं नीलम्, नीलञ्च तत् वस्त्रखण्डम्, तेन वेष्टितो मूर्धा यस्य तम्, कृष्णोष्णीषधारिणमित्यर्थः। **हरितकञ्चुकम्**=हरिद्वर्णचोलकम्। **श्यामेति**=श्यामवसनेन कृष्णवस्त्रेण नद्धं कटितटं येन तादृशं कर्बुरं विचित्रवर्णम् अधोवसनं कट्यरुजानु-

जङ्घाच्छादकं परिधानं ( 'तहमत' इत्याख्यम् ) यस्य तम् । **काकासनेन** = चिबुकार्पितजानयुगलं यत्र तादृशेनासनेनेत्यर्थः । **रम्भालवालेति**—रम्भायाः कदल्या आलवालम् आवापः ('स्यादालवालमावापः' इत्यमरः) तत्र लग्नम् अधोभागे मुखं यस्य तादृशो यः खड्गः=असिः तस्य त्सरौ = मुष्टौ न्यस्त = स्थापितं विपर्यस्तं न्युब्जीभूतं = हस्तयुगलं करद्वयं यस्य तम् । लशुनगन्धिभिरित्यादौ **लुप्तोत्प्रेक्षा । नवाङ्कुरितेति**—नवा अङ्कुरिता स्फुरिता या श्मश्रुश्रेणी तस्याः छलेन व्याजेन । **कन्यकेति**—कन्यकायाः कुमार्या अपहरणमेव पङ्कं कर्दमः तदेव कलङ्कं तेन पङ्कलितं श्यामाननं मुखं यस्य सः **विंशतिवर्षकल्पम्** = विंशतिवर्षदेशीयम् । **युयुत्सुः** = युद्धं कर्तुमिच्छुः ।

**पृ० २७ ॥ अवतस्थे** = स्थितः । **"समवप्रविभ्यः स्थः"** ( १ । ३ । २२ ) इत्यात्मनेपदम् । 'रे' इति नीचसम्बोधने । यवनकुलकलङ्क ! नीचयवनेत्यर्थः । **भारतीयकन्दरिकन्दरेषु** = भारतवर्षीयपर्वतगुहासु । आखेटक्रीडया = व्याधखेलया **रमामहे** = क्रीडामः । स्वाङ्क आगतानि प्राप्तानि सत्त्वानि जीवा एव वृत्तयः प्राणपारणा येषां तादृशाः । **दीर्घदावदहने** = प्रज्वलितवनहुतभुजि । **पतङ्गायितः** = शलभायितः । **असिभुजङ्गिन्या** = असिरेव भुजङ्गिनी सर्पिणी तया । **संवर्त्स्यथ** = भविष्यथेत्यर्थः । कलकलम् = कोलाहलम् । **अपजिहीर्षुः** = अपहर्तुमिच्छुः । **वलीकात्** = छदेः ।

**पृ० २८ ॥ त्सरौ** = खड्गमुष्टे । **तदध्युषितकुटीरनिकटे** = तत्सेवितकुटीसमीपे । **कवोष्णेति**—कवोष्णम् ईषदुष्णं यत् शोणितं रुधिरं तस्य तृषिते पिपासिते अर्थात् तव कर्त्तनेऽद्यते । **चन्द्रहासे** = खड्गे । "कूर्दनं वा उत्पाल वा' इति देश्युक्तिः । **व्यालीढमर्यादया** = युद्धावस्थानविशेषेण ( पैंतरा जमाकर इति भाषा ) । **दिनकरेति**—दिनकरः—सूर्यः, तस्य कराः मयूखाः, तेषां स्पर्शेन चतुर्गुणीकृतं वर्धितं चाकचक्यं प्रतिभासविशेषो येषां तैः । **चञ्चच्चन्द्रहासचमत्कारैः** = सञ्चरत्खड्गचमत्कारैः । **चक्षूंषि** = नेत्राणि **मुष्णतः** = चोरयतः । 'स्वासिना शिरः चिच्छेद' इत्यन्वयः । कीदृशं शिरः इत्याह—**कलितेति** = कलितेन व्याप्तेन क्लेदेन श्रमविशेषेण सञ्जातं स्वेदजलस्य जालं यत्र तत् । विशेषेण शिथिला चेष्टाशून्या कचकुलस्य वालसमूहस्य माला यस्य तत् । भग्नया भ्रुवा भयानलं भालं ललाटं यस्य ।—जालम्—मालं, भालम्' इति **यमकालङ्कारः । चिच्छेद** = चकर्त्त । दाडिमेति— ***दाडिमस्य** = करकस्य

*'समौ करकदाडिमौ' इत्यमरः।'**दाडिमस्तु** त्रिलिङ्गः स्यादेलायांकरकेऽपि'इति (मेदिनी)

कुसुमानां पुष्पानाम् आस्तरणेन आच्छन्नायामावृतायामिव, गाढरुधिरदिग्धायाम् = घनशोणितलिप्तायाम्। ज्वलद्भिरिति—ज्वलद्भिः भस्मीभवनोन्मुखैः अङ्गारैः **चितायां** व्याप्तायां। वसुधायाम्=धरायां शयानम्=स्वपन्तम्। वियुज्यमाना परिह्रियमाणा या भारतभूः ताम् आलिङ्गन्तमिव क्रोडीकुर्वाणमिव। **निर्जीवीभवन्ति**=निष्प्राणीभवन्ति यानि अङ्गानि तेषां बन्धेषु = सन्धिषु **चालनपरं** = चेष्टापरम्। शोणितस्य रुधिरस्य संघातः पूरः तद्व्याजेन तत्कैतवेन अन्तःस्थितो यौ रजोराशिः रजोगुणगणः तमिव उद्गिरन्तं = वमन्तम्। कलितः सायन्तनस्य सन्ध्याकालीनस्य घनाडम्बरस्य मेघविडम्बनाया विभ्रमो विलासो येन तम्। सततं निरन्तरं यत्ताम्रचूडभक्षणं चरणायुधकवलीकरणं तस्य पातकेनैव ताम्रीकृतं = रक्तीकृतम्। **छिन्नकन्धरम्** = उत्कृत्तशिरोधरम् हर्षेण सह सहर्षमित्यादि 'आश्लिष्य' इति क्रियाविशेषणम्। **मृतकस्य** = तस्यैव यवनस्य। **कञ्चुकम्** = चोलकम्। **कटिबन्धः** = जघनपट्टिका। **उष्णीषम्** = शिरस्त्राणम्।

इति (नूतन) शिवराजविजयपताकायां प्रथमो निश्वासः ॥

---

# अथ द्वितीयो निश्वासः।

यो मन्दबुद्धिर्बहुधापि जालं
वितत्य रोद्धुं यतते शिवाय।
ध्रुवं स वह्नौ शलभायमानो
* यमेक्षणानां विषयं प्रयाति ॥ १ ॥

पृ० ३० ॥ 'रात्रि'रिति। **अपजलखानः** कपटेन शिवं हन्तुं, जयं प्राप्तुं, यशो लब्धुं नानामनोरथपरम्पराकुल आसीत् परमसौ स्वयमेव पञ्चत्वमगात् इति वर्ण्यमाननिश्वासविषयस्योपक्षेपणायायं श्लोक आदौ धृतः। श्लोकार्थस्तु निगदव्याख्यातः। **द्विरेफो** = भ्रमरः। 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति (अमरः)। वृत्तान्तमुत्थापयितुमाह—'**इतस्तु**' इति। 'अपजलखानः सेनानीः प्रपतापदुर्गाद्विदूर एव तिष्ठति' इति सम्बन्धः। कथंभूतः—इति प्रथमान्तैः पदैः तं विशिनष्टि—**स्वतन्त्रेति**। स्वतन्त्रं स्वच्छन्दं यत् यवनकुलं तेन भुज्यमानस्य अधिष्ठितस्य

---

* 'यमेक्षणानाम्' इति बहुवचनेन शिवद्रोहिणो भोगायाऽनेका याम्या यातना व्यज्यन्ते। विषयमिति भावप्रधानो निर्देशः।

विजयपुरस्य अधीशेन '**खान**' इति प्रसिद्धेन प्रेषितः (शिवं निगृहीतुं) **पुण्यनगरम्** = पूना इति प्रसिद्धम् । तस्य समीपे = सन्निधावेव । भीमानदीं वर्णयति—**प्रक्षालितेति** । प्रक्षालितानि जलेन धौतानि गण्डशैलानां गिरेः च्युतानां स्थूलोपलानां मण्डलानि यया तस्याः । 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इति (अमरः)। **निर्भरेति— निर्भराणां** = जलनिर्गमस्रोतोबिलानां वारिधारापूरः जलधारासञ्चारैः पूरितः भरितः प्रबलः वेगवान् प्रवाहो यस्याः । पुनः कथंभूतायाः—पश्चिमो यः पारावारः सागरः (समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरः) तस्य प्रान्ते = निकटवर्त्तिनि प्रदेशे प्रसूताः = निर्गता ये गिरयः = पर्वताः तेषां ग्रामाः संघाः तेषां गुहागर्भात् कन्दरामध्यात् निर्गतायाः प्रवहितायाः अपि—प्राच्यपयोनिधि—चुम्बने=पूर्वीयसमुद्रप्रवेशे चञ्चुरायाः=चपलायाः ( या पश्चिमीयसमुद्रगिरिगुहाभ्यो निर्गत्य पूर्वसमुद्रं प्रविवेशेत्यर्थः ) **रिङ्गदिति**—रिङ्गतां सञ्चलतां तरङ्गाणामूर्मीणां भङ्गैः उद्भूतैः सञ्जातैः * आवर्त्तशतै**र्भीमायाः** = भयङ्करायाः **भीमायाः** = भीमाख्यायाः **नद्याः** = सरितः । **अनवरतमिति**-अनवरतं निरन्तरं निपतन्ति प्रच्यवन्ति † वकुलकुलानां केसरवृक्षसंघानां कुसुमानि पुष्पाणि तेषां कदम्बैः समूहैः सुरभीकृतं सौरभायितमपि अवगाहमाना जलक्रीडां कुर्वाणाः स्नान्तो वा ये मत्ता मातङ्गाः गजाः तेषां मदधाराभिः दानवारिपूरैः **कलुषयन्** = मलिनयन्निवेत्यर्थः । **ह्येति**—हयानामश्वानां हेषाध्वनिप्रतिध्वनिभिर्बधिरीकृतः श्रुतिसामर्थ्यविकलीकृतः गव्यूतिमध्यगः क्रोशयुगमध्यवर्त्तिनाम् पान्थानां वर्गः संघो येन सः । 'गव्यूतिः स्त्रीक्रोशयुगम्' इत्यमरः ।

**पृ० ३१ ॥ पटकुटीरेति**—पटकुटीरकूटैः = शिविरसमुदायैः विहिता शारदाम्भोधराणां शरत्कालभवानां निर्जलानां मेघानां विडम्बना अनुकृतिर्येन सः । **निरपराधेति**—निरपराधो निर्दोषो यो भारताभिजनः=भारतदेशः तस्य पीडनेन सन्तप्तीकरणेन यानि पातकानि पापानि तेषां पटलैः समुदायैरिव समुद्धूयमाननीलध्वजैः = समुत्कम्पमानकृष्णवर्णपताकाभिरुपलक्षितः ।

अत्राऽचेतनानां प्रकृतानां ध्वजानां स्वभावसिद्धेन नीलप्रकारेण स्थितो व्यव-

---

* 'आवर्त्तोऽम्भसां भ्रमः' इत्यमरः । † केचित् 'बकुल' इत्यौष्ठ्यादि लिखन्ति पठन्ति च तदयुक्तमाभाति उच्यते वर्ण्यते कविभिरिति मुकुटादिकृतव्युत्पत्तिदर्शनात् । न च बवयोरभेद इति युक्तम् सर्वत्र तथासति द्वयोरैकान्तिकविवेकाभावात् इत्याहुः । वयन्तु—बवयोर्विवेकोऽद्यापि न पारित इति स्वसम्प्रदाय एव शरणमित्याचक्ष्महे बहुलेखभयात् ।

हार: भारतदेशपीडाजनितपापपटलरूपेण अप्रकृतेन सम्भावितत्वात् **स्वरूपोत्प्रेक्षा** ज्ञेया । 'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा' इति तल्लक्षणात् ।

**आहवद्यूतेन** * आहवः संग्राम एव द्यूतं तेन युद्धक्रीडयेत्यर्थः । **चिक्रीडिषुः** = दिदेविषुः ( युद्धं कर्त्तुमिच्छुरिति विवक्षितम् ) तिष्ठति स्म = अस्थात् । 'लट् स्मे' ( ३ । २ । ११८ ) इति स्मयोगे भूते लट् ।

## ( सायङ्कालवर्णनम् )

'अथ भास्वान् चक्षुषामगोचर एव सञ्जात' इति सम्बन्धः । जगतः=संसारस्य प्रभाजालम्=दीप्तिपुञ्जम् **संमुद्य**=सङ्कोचयित्वा । **कोकान्** = चक्रवाकान् । 'कोकश्चक्रश्चक्रवाकः' इत्यमरः । 'चक्रवाको रथः कोकश्चक्रश्चक्राह्वयाह्वयः' इति ( वैजयन्ती ) । सशोकीकृत्य = वियोज्येत्याशयः । सायंसमये तेषां वियोगो भवतीति नियतिः । सकलेति—सकलानां विश्वेषां चराचराणां स्थावरजंङ्गमानां चक्षुःशक्तिं नेत्रदर्शनसामर्थ्यम् । **शिथिलीकृत्य** = मन्दीकृत्य । अन्धकारे—सतोरपि चक्षुषोर्दर्शनशक्तेरनुद्भवात् । **कुण्डलेनेव** = कर्णभूषणेनेव निजमण्डलेन पश्चिमाशां भूषयन् = मण्डयन् ।

अत्र अस्तमयनकाले सूर्यमण्डलस्य स्वतःसिद्धोपि भूष्यभूषणभावः प्रकृतः, अप्रकृतेन कुण्डलेन सम्भावितः । सत्र निजमण्डले कुण्डलत्वारोपपूर्वकत्वात् रूपकानुप्राणित*इति **रूपकानुप्राणितोत्प्रेक्षा** । समासोक्तिरपि—अत्र प्रस्तुते सूर्यास्तमनसम्बन्धे अप्रस्तुस्य कुण्डलकरणककामुककर्तृकनायिकामण्डनात्मकवृत्तान्तस्यापि प्रतीतिसद्भावात् समासोक्तावप्रस्तुतव्यवहारसमारोपस्य चारुताहेतुत्वादिति दिक् ।

† **वारुणी**=वरुणाधिष्ठिता पश्चिमा दिक् सुरा च । 'सुरा प्रत्यक् च वारुणी' इति (अमरः) । 'वारुणी गण्डदूर्वायां प्रतीचीसुरयोः स्त्रियाम्' इति च ( मेदिनी ) । **माञ्जिष्ठेति** । **मञ्जिष्ठा**=मण्डूकपर्णी 'मजीठ' इति प्रसिद्धा । तस्या अयं माञ्जिष्ठः स चासौ **मञ्जिमा**=रक्तिमा तेन रञ्जितः = शोणित इवेत्यर्थः । **अनवरत**भ्रमणपरिश्रमश्रान्तः=अनारतपर्यटनखेदखिन्नः इव **सुषुप्सुः**=स्वप्तुमिच्छुः । अत्र सूर्यस्य स्वाभाविकगतिकरणपूर्वकास्ताचलप्राप्तिरूपोऽर्थः खेदहेतुकशयनेच्छावत्त्वेनोत्प्रेक्षितः । **म्लेच्छेति** । म्लेच्छगणस्य=यवनगणस्य

---

* अत्र तिरोभूतभेदत्वादुपमायाः **रूपकालङ्कारः** ।

† वरुणस्येयम् । '**तस्येदम्**' ( ४ । ३ । १२० ) इत्यण् । ततो ङीप् ॥

दुराचारैः लुण्ठनमारणप्रभृतिभिर्दुष्कर्मभिः दुःखेन=कष्टेन आक्रान्ता आपीडिता या **वसुमती**=पृथ्वी तस्या वेदनां पीडाम् **समुद्रशायिनि**=श्रीविष्णौ **निविवेदयिषुरिव**=निवेदयितुमिच्छुरिव । अत्रापि—अस्तमयनं विष्णोरग्रे निवेदनरूपत्वेन सम्भावितमित्युत्**प्रेक्षैव** । **वैदिकेति**—वैदिकधर्मस्य सत्यसनातनधर्मस्य ध्वंसो नाशः तस्य दर्शनेन सञ्जातो यो निर्वेदः वैराग्यं यस्य स तथाविधः **गिरिगह्वनेषु**=पर्वतकन्दरेषु तपश्चिकीर्षुरिवेति पूर्ववदुत्**प्रेक्षा** । **सिस्नासुः**=स्नातुमिच्छुः । "अन्योऽपि तापतप्तो जलं प्रविशति" इति वस्तुध्वनिः । **विधित्सुः**=चिकीर्षुः ।

॥ पृ० ३२ ॥ **मत्कुले**=मदीयवंशे यः=सूर्यवंशीय इत्यर्थः । **यज्ञियात्**=यज्ञार्हात् । '**यज्ञर्त्विग्भ्यां घखञौ**'(५।१।७१) इति यज्ञमर्हतीति 'यज्ञियः' तस्मात् **भारतगर्भात्**=भारतमध्यात् भारतभुवः इत्यर्थः । **चिन्ताक्रान्तः**=शोकाकुलः **कन्दरिकन्दरेषु**=गिरिगुहासु । **प्रविविक्षुः**=प्रवेशं कर्तुमिच्छुः । अत्रापि भास्वतः स्वतःस्थितमस्तमयनं चिन्ताकुलत्वनिमित्तेन पर्वतकन्दराप्रवेशत्वेन रूपेणो**त्प्रेक्षितम्**

क्रूरकरान्—तीक्ष्णान् किरणान् । 'श्वेतीभूय' इत्यादि **स्वभावोक्तिः** । **कलिकौतुककवलीकृतम्**=कलिकुतूहलनिगलितम् ' इति 'सदाचारप्रचारम्' इत्यस्य विशेषणम् । **पातकपुञ्जपिञ्जरितम्**=कल्मषसमूहविध्वस्तम् **अन्धतमसे**=गाढेऽन्धकारे । 'ध्वान्ते गाढेऽन्धतमसम्' इति (अमरः) । 'धूपधूमेनेव'† इत्युत्**प्रेक्षा** । **हरित्सु**=दिशासु । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इति (अमरः) । 'आगतप्रत्यागतञ्च विदधानः' इति प्राहरिकाणां **स्वभावोक्तिः** । **विदधानः**=कुर्वाणः । **प्रतापदुर्गदौवारिकः**=प्रतापदुर्गद्वारपालः । **दौवारिकः**=द्वारे नियुक्तः । '**तत्र नियुक्तः**' (४।४।६९) इति सूत्रेण द्वारशब्दात् ठक् । '**द्वारादीनाञ्च**' (७।३।४) इत्युभयपदवृद्धिः । **पादक्षेपध्वनिम्**=चरणचङ्क्रमणशब्दम् । **अवतमसवशात्**=क्षीणध्वान्तहेतोः '**अवसमन्धेभ्यस्तमसः**' (५।४।७९) इति समासान्तोऽच् ।

॥ पृ० ३३ ॥ **अश्रावि**=आकर्णितः । श्रु श्रवणे । कर्मणि लुङ्लङ् 'चिण् भावकर्मणोः' (३।१।६६) इति च्लेश्चिण् । **मुमूर्षुः**=मर्तुमिच्छुः ।

---

† गाढेनान्धकारेण स्वतः सिद्धाऽपि दिशां व्याप्तिः धूपधूमव्यापनत्वेन रूपेणोत्प्रेक्षिता चेत् **क्रियारूपोत्प्रेक्षा**; धूमे धूपत्वेनोत्प्रेक्षितं चेत् **स्वरूपोत्प्रेक्षा** । अत्र बहुवक्तव्यमपि बालमतेर्विशेषाऽनुपयोगं मत्वोदास्यते ।

वधिरः = श्रुतिसामर्थ्यवर्जितः । **अपश्यता** = अनालोकमानेन । **आकर्णि** = अश्रावि । **मन्द्रस्वरमेदुरा** = गम्भीरस्वरस्निग्धा । काषायवासाः = काषायं = कषायेण रक्तं वासो यस्य, कषायशब्दात् **'तेन रक्तं रागात्'** (४।४।१८) इत्यण् । **भस्मच्छुरितललाटः** = भस्मरमितमस्तकः । **रुद्राक्षेति** = रुद्राक्षमालिकया सनाथितः सहितः कण्ठो यस्य सः । **आलापः**=परस्परभाषणम् । **तुरीयाश्रमसेवी** = चतुर्थाश्रमस्थः संन्यासीत्यर्थः ।

**पृ० ३४ अन्तरायाणाम्** = विघ्नानाम् 'विघ्नोऽन्तरायःप्रत्यूहः' इति (अमरः) । **हन्ता** = निवारयिता । अलमालप्यापि = इदमालपनीयमपि नैव । 'लप्' धातोः **'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा'** ( ३ । ४ । १८ ) प्रतिषेधार्थे क्त्वा । क्त्वो ल्यप् ।

**पृ० ३५ । राजनीतिनिष्णातः** = राजनीतौ प्रवीणः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । **निरीक्षस्व** = पश्य । **न प्रातिरुन्धेः** = न प्रतिहस्तयेः । प्रतिपूर्वकस्य 'रुधिर आवरणे' इत्यस्य धातोः विधिलिङि मध्यमपुरुषैकवचने रूपम् । **परिष्कृतम्** = वैद्यकशास्त्रविधिना साधितम् । **जाम्बूनदम्** = सुवर्णम् । 'स्वर्णं सुवर्णम्—जाम्बूनदमष्टापदोऽस्त्रियाम्' इति (अमरः

**पृ० ३६ ॥ उत्कोचलोभेन** = अन्यायतोधनग्रहणलोभेन 'रिशवत' इति ख्यातेन ।

**पृ० ३७ ॥ भुशुण्डीति**—भुशुण्ड्याः यत्समुत्तोलनमुत्थापनं तेन यः किणोऽङ्कविशेषः तेन कर्कशः कठोरो यः करः तस्य ग्रहम् = ग्रहणम् । **अपहाय**= त्यक्त्वा । **स्वाङ्गरक्षिका** = लघुकन्चुकः ॥

**पृ० ३८ ॥ मेचकान्** = नीलान् । **अट्टालिकाम्** = इष्टकादिनिर्मिते राजादिगृहे 'तलिन्यट्टालिके समे' इति ( वैजयन्ती ) । 'शिववीरस्तु अट्टालिकायामुपविष्ट आसादि'ति सम्बन्धः । **चन्द्रचुम्बिन्याम्** = अत्युच्चायामित्यर्थः । अत्र—अट्टालिकायाश्चन्द्रेण सहाऽसम्बन्धेऽपि सम्बन्धवर्णनात् **अतिशयोक्तिरलङ्कारः** । तल्लक्षणमुक्तं दण्डिना—

> **विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी ।**
> **असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥**

* ग्रन्थान्तरेत्त्वियं 'सम्बन्धातिशयोक्ति' रुक्ता—'सम्बन्धातिशयोक्तिः स्यात्तदभावेऽपि तद्वच' इति तल्लक्षणात् ।

---

*चन्द्रालोके ।

**सान्द्रेति**—सान्द्रेण = घनेन सुधासारेण चूर्णद्रव्येण लिप्ताः उपचिता भित्तिकाः कुड्यानि यस्याः सा तस्याम् । धूपधूपितायाम् = धूपसन्तापितायाम्। **गजदन्तिकेति**—गजदन्तिकायाम् = एङ्के शङ्कुविशेषे अवलम्बिताः विविधाः नानाप्रकाराः छुरिकाखड्गारिष्टिका यस्या सा तत्र । **छुरिका**=कृपाणी । **खड्गः** असिः । **रिष्टिका**—शस्त्रविशेषः । **सुवर्णेति**—सुवर्णस्य पिञ्जरे परिलम्बमाना शुकाः = कीराः । पिकाः = कोकिलाः । चकोराः = जीवञ्जीवाः । 'जीवञ्जीवः खगान्तरे । द्रुमभेदे चकोरे च' इति (हैमः) । सारिकाः = शारिकाः तासां कलकूजितेन मधुररवेण पूजितायां सत्कृतायां सज्जितायामित्यर्थः ।

**पृ० ३८, ३९ ॥ परितः** = समन्ततः । ' **तस्य** = ( शिववीरस्य ) एव मूर्त्ति दर्शं दर्शं परं प्रसादमासादयन्तः तस्य वयस्याः ( माल्यश्रीकादयः ) कटान् अध्यवसन्' इति सम्बन्धः। दर्शं दर्शं = दृष्ट्वा दृष्ट्वा । 'दृश्' धातोः '**आभीक्ष्ण्ये णमुल् च**' (३।४।२२) इति सूत्रेण णमुल् । '**नित्यवीप्सयोः** (८।१।४) इति द्वित्वम् । **प्रसादम्** = हर्षम् । **आसादयन्तः** = प्राप्नुवन्तः । **वयस्याः** = सखायः । कथम्भूतां मूर्त्तिम् इति ' खर्वामप्यखर्वपराक्रमा ' मित्यारभ्य ' कलितगौरवामपि कलितलाघवाम्' इत्यन्तं विरोधाभासालङ्कारेण परतः स्वभावोक्त्या उत्प्रेक्षया च वर्णयति—**खर्वाम्** = ह्रस्वाम्। अपि **अखर्वपराक्रमाम्** = अखर्वस्य पराक्रमो यस्याः तामिति विरोधः। या खर्वा सा कथमखर्वपराक्रमा स्यात् । परिहारस्तु—अखर्वः अनल्पः पराक्रमो बलं यस्याः सा ताम् । **श्यामाम्** = कृष्णाम् । यशः समूहेन कीर्त्तिपुञ्जेन श्वेतीकृतं धवलीकृतं त्रिभुवनं यया ताम् । या श्यामा सा कथं श्वेतीकरणे समर्थेति विरोधः । परिहारस्तु—त्रिलोक्यां प्रख्यातयशसमित्याशयेन ज्ञेयः । **कुशासनाश्रयामपि** = कुत्सित शासनं आश्रयो यस्याः सा तामिति विरोधपक्षे । **सुशासनाश्रयाम्** = सु = सुष्ठु शासनं राष्ट्रस्थितिराश्रयः कर्त्तव्यत्वेन आधारो यस्याः । या कुत्सितशासना सा कथं सुशासना इति विरोधप्रतीतौ परिहारस्तु—कुशाया आसनं कुशासनं तदेव आश्रयोऽवस्थानं यस्याः सा ताम्। पठनपाठनादीत्यत्र विरोधपरिहारौ स्फुटौ । ( एवं हि ऐतिहासिका आमनन्ति **शिववीरः** आकृत्या खर्वः रूपेण श्यामः स्थूलः पठनरहितश्चेति) **स्थूलदर्शनाम्** = स्थूलं दर्शनं यस्याः सा । सूक्ष्मदर्शनाम् = या स्थूलदर्शना सा कथं सूक्ष्मदर्शनेति विरोधः । परिहारस्तु—सूक्ष्मं दर्शनं कर्त्तव्याकर्त्तव्यविचारो यस्याः सा कुशाग्रबुद्धित्वादिति भावः । हत्याकाण्डव्यसनिनीमपीति या हत्याकाण्डव्यसनिनी सा कथं धर्मधौरेया इति विरोधे म्लेच्छानां हत्याकाण्डव्यसनेन सनातनधर्मरक्षकाग्रणीत्वेन

च परिहारः । **कठिनाम्** कठोरामपि **कोमलां** = मृद्वीमिति विरोधः । परिहारस्तु, सङ्ग्रामादिभारसहाम् । **उग्रामपि शान्ताम्** = योग्रा सा कथं शान्तेति विरोधः दुर्धर्षत्वादुग्रा, अधिकारिणि दयावत्त्वात् शान्तेति परिहारः । शोभितो म्लेच्छदलनकारित्वात्सुन्दरो विग्रहो विरोधः सङ्ग्रामो यस्याः सा ताम् सङ्ग्रामकुशलामित्यर्थः । दृढः अकाट्यः सन्धिबन्धः सङ्ग्रामविरोधी राज्ञां परस्परं सङ्गतिकरणं यस्याः तामिति विरोधः । परिहारस्तु—शोभितशरीराम् दृढशरीरबन्धामित्यर्थः । **कलितेति**=गुरोर्भावो गौरवम् या कलित (रचित) गौरवा सा कथं कलितलाघवा इति विरोधः । गृहीतगाम्भीर्याम् रचितचातुर्याञ्च इति तत्परिहारः । **विशालललाटाम्**=चतुरस्रमस्तकाम् । शोणापाङ्गाम्=रक्तनेत्रप्रान्तभागाम् । सुनद्धा स्नायवो यस्याः, वर्त्तुला श्यामा श्मश्रुर्यस्याः ताम् । **धारितेति** = उत्प्रेक्षा । समासादिता समरे सङ्ग्रामे स्फूर्तिर्यया ताम् ।

**न्यवीविदत्** = निवेदितवान् । स्वार्थे णिच् । **दिदृक्षते**=द्रष्टुमिच्छति । **ज्ञाश्रुस्मृ दृशां सनः**' (१।३।५७) इत्यात्मनेपदम् । कुसुमानीवेत्यादावुत्प्रेक्षा ।

**पृ० ४०** ॥ **त्रिः** = त्रिवारम् । क्रियाविशेषणमेतत् । '**द्वित्रिचतुर्भ्यः सुच्**' ( ५।४।१८ ) इति क्रियाभ्यावृत्तिगणने सुच् । **अन्तरायः** = विघ्नः । **भूतनाथः** = पशुपतिर्महादेवः । **प्रत्नः** = पुराणः । 'पुराणे प्रतन-प्रत्न-पुरातन-चिरन्तनाः' इति ( अमरः ) । **स्वच्छन्देत्यादौ** अनुप्रासः । उच्छिन्नं विनष्टं सच्छीलं सदाचारो येषाम् अत्यन्ताऽसभ्यानामित्यर्थः । **गव्यूतिः** = क्रोशयुगम् । **उञ्छस्य** = कणादानस्य 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' (यादवः) **इङ्गुदी** = तापसतरुः । **भूर्जपत्रम्** = चर्मिपत्रम् । 'भूर्जे चर्मिमृदुत्वचौ' इति (अमरः) ।

**पृ० ४१** ॥ **जाल्माः** = असमीक्ष्यकारिणः । **वारणवारेषु** = गजवृन्देषु । 'आर्यवंशीयाः' 'भारतवर्षीयाः' इत्यत्र भावार्थे 'वृद्धाच्छः' ( ४।२। ११४ ) इति छः । गद्यमिदं * चूर्णकम् । वैदर्भी रीतिः । प्रसादो गुणः ।

**पृ० ४२** ॥ **कन्यापहारकेति**—कन्याया अपहारकस्य आच्छेदकस्य

---

* चूर्णकस्य लक्षणमाह **वामनः** 'अनाविद्धललितपदं चूर्णम्' ( ३ । २४ ) अस्यायमर्थः—न विद्धानि अनाविद्धानि अदीर्घसमासभाञ्जि च तानि ललितपदानि अनुद्धतानि पदानि यस्मिन् तदनाविद्धपदं चूर्णमित्युच्यते । श्लेषादिसर्वगुणोपेता पदसङ्घटना **वैदर्भी** रीतिः । प्रसादगुणलक्षणमाह जयदेवः—

यवनयुवकस्य म्लेच्छतरुणस्य मृतं = शवीभूतं यच्छरीरं तस्य वस्त्रान्तात् वसनमध्यात् प्राप्तमिति पत्र विशेषणम् । 'शिवं युद्धे जेष्यसि चेत् पद्यां सिंहं जित वानसि' इति संस्ये' इत्यत्र **निदर्शनालङ्कारः** । तल्लक्षणमुक्तं 'जयदेवेन'— '**वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना**' = सदृशवाक्यार्थसंबंधी य ऐक्यारोपः अर्थात् उपमेयवाक्यार्थे उपमानवाक्यार्थाऽभेदारोपः स निदर्शनालङ्कारः प्रकृते च—'शिवं युद्धे जेष्यसि चेत्' इत्यस्य युद्धविषयकशिवकर्मकजयनरूपो वाक्यार्थः उपमेयवाक्यार्थः तस्मिन् पदवरणकसिंहजयनरूपोपमानवाक्यार्थस्याभेदारोपणान्निदर्शना * ।

पृ० ४३ ॥ **अरुणकौशेयजालनिबद्धौ**=अरुणं रक्तं यत् कौशेयस्य = पट्टवस्त्रस्य जालमानायः तेन निबद्धौ = आच्छादितौ **मीनौ** = मत्स्यौ इव नयने= नेत्रे सजाते = अभूताम् । क्रोधवशान्नेत्रयो रक्तिमा जातेत्यर्थस्यैव भङ्ग्यन्तरेण अभिहितत्वात् † **पर्यायोक्त**मलङ्कारः । **मुखमिति**—बालभास्करस्य यद्बिम्बं तस्य विडम्बनाम् = अनुकृतिम् । आललम्बे बभार । **अधरः** = निम्नोष्ठः **धीरताधुरम्**=धैर्यभारम् **अधरीचकार** = जहावित्यर्थः क्रोधवशादधरः फुस्फोरेति भावः । अलङ्कारस्तु पूर्ववत् ।

**विवक्षति** = वक्तुमिच्छति । **प्रतीहारः** = द्वारपालः **त्रिर्व्याहृत्य** त्रिवारमुक्त्वा । **दिदृक्षुः** = द्रष्टुमिच्छुः । **उपतिष्ठते** = संगतिकरणार्थं प्राप्तोऽस्ति 'उपाद्देवपूजा'—इति वार्तिकेन संगतिकरणेऽर्थे आत्मनेपदम् । **साम्रेडम्**

---

**यस्मादन्तःस्थितः सर्वः स्वयमर्थोऽवभासते ।**
**सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥**

प्रपञ्चस्तु मदीयकाव्यादर्शव्याख्यायां प्रथमे परिच्छेदे द्रष्टव्यः ।

* उदाहृतश्चायमलङ्कार **अप्पय्यदीक्षितैः**—

**अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं**
**स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।**
**श्वपुच्छमिव नामितं बधिर कर्णजापः कृतो—**
**धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥** इति

† **पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।**
**नमस्तस्मै कृतो येन मुधा राहुवधूकुचौ ॥** इति (कुवलयानन्दे)

यदेव गम्यं विवक्षितं तस्यैव भङ्ग्यन्तरेण विवक्षितरूपादपि चारुतरेण केनचिद्रूपेणाभिधानं पर्यायोक्तम् ।

पुनः पुनरित्यर्थः । **सतर्कम्** = ऊहासहितम् । **सोत्साहम्** = सहर्षम् । **व्याहृतवत्सु** = कथयत्सु ।

॥ पृ० ४४ ॥ **व्याहन्मि** = विध्वंसयामि । **नीतिमार्गान्** = चराणां विद्या इत्यर्थः । **अत्यन्तनिर्दयाः**=करुणाशून्याः **अतिकदर्याः**=नीचकर्मकरणे निर्भयाः । कूटनीतयः=( कपटचाल ) कपटाचारचतुराः । 'कूटं पूर्द्वारयन्त्रयोः । मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः ' निश्चलेऽयोघने राशौ ' इति (हैमः) । **इङ्गितेन**=चेष्टितेन । इङ्गितं हृद्गतो भावः । **प्रसाधनिकया**=कङ्कत्या । **उष्णीषिकाम्** = शिरस्त्राणिकाम् 'टोपी' इति प्रसिद्धाम् ।

॥ पृ० ४५ ॥ **अधोवसनम्**=कटिवस्त्रम् पादायामं ' पायजामा ' इति ख्यातम् । **तानपूरिकाम्** = वाद्यविशेषम् 'तानपूरा' ( तम्बूरा ) इति प्रसिद्धिः । **गुप्तच्छुरिकाम्** = गुप्ता छुरिका कृपाणी यस्यां ताम् । **दन्तावलदन्तमुष्टिकाम्** = अतिशयितौ दन्तौ अस्येति दन्तावलः । 'दन्तशिखात् सञ्ज्ञायाम्' (५।२।११३) इति दन्तशब्दात् वलच् प्रत्ययः । 'वले' (६।३।११४) इति दीर्घः । दन्तावलस्य यो दन्तः, तस्य = गजदन्तस्य मुष्टिका यत्र तां यष्टिकाम् । **पटवासैः** = सुगन्धनिर्यासैः । **दिगन्तम्** = दिशामन्तम् । **दन्तुरयन्** = उन्नतयन् सौरभयन्नित्यर्थः । **करस्थपटखण्डेन** = कर्पटेन । **प्रतस्थे** = प्रचचाल । **परःशतश्वेतपटकुटीरैः** = शतसङ्ख्यातीतशुभ्रपटभवनैः **शारदमेघमण्डलायितम्** = शरत्कालिकमेघमण्डलमिवाचरितम् ( लुप्तोपमा ) अतिश्वेतमित्यर्थः **कोकनदेति**—कोकनदच्छवि शोणं यत् वस्त्रम् तस्य खण्डेन वेष्टितो मूर्धा यस्य येन वा । ' शोणः कोकनदच्छविः ' इत्यमरः । कोकनदं रक्तोत्पलमिव छविर्यस्य । **कटीति**—कटिपर्यन्ता सुनद्धा सुबद्धा काकश्यामा अतिकृष्णवर्णा अङ्गरक्षिका चोलिकाविशेषो येन सः । **कर्बुराधोवसनः** = चित्रिताधोवासाः । **शोणश्मश्रुः** = शोणं रक्तं श्मश्रु पुंमुखवर्त्तिलोमदाढिका यस्य सः । **विजयपुरेति**—विजयपुराधीशस्य नाम्ना अङ्किता मुद्रिता या वर्त्तुला पित्तपट्टिका ' चपडास ' इत्याख्या तया परिकलितं व्याप्तं वामवक्षःस्थलं यस्य सः चपडासीसंज्ञकआहर्तिकवेषं दधान इत्यर्थः । **सावष्टम्भम्** = सोद्वेगम् । **समार्दवम्** = सकोमलम् । **व्याख्यायि** = उत्तारितम् । ' घृतेन स्नातु भवद्रसना' इति **लोकोक्तिर**लङ्कारः । आह च **जयदेवः**—

> **लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते ।**
> **सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥** इति ।

**पृ० ४६** ॥ 'तत्र च' इत्याद्यारभ्य ४६ पृ० ४६ पर्यन्तं साङ्ग्रामिकभटानालोकयन्, 'प्रधानपटकुटीरद्वारमाससाद' इति दूरेऽभिसम्बन्धः।

**पृ० ४६** ॥ **ताम्रकधूमम्** = तमाकू—इति प्रसिद्धम्। **मुखादिति**—अत्रोत्**प्रेक्षा**ऽलङ्कारः।

ताम्रकधूमध्वजायाः स्वरूपेण श्यामलत्वेऽपि अप्रकृतकालसर्परूपत्वेन सम्भाव्यमानत्वात्। इयञ्च **स्वरूपोत्प्रेक्षा**. ऐन्द्रजालिकोऽपि मुखात्सर्पानुद्गिरतीति **वस्तुध्वनिः**। अनेन वस्तुध्वनिना (वस्तुना व्यङ्ग्येन) शिवं मोहयितुमैन्द्रजालिकानिव स्थितानिति उपमालङ्कारो व्यङ्ग्यः इति वस्तुनाऽ**लंकारध्वनिः**। **स्वहृदयकालिमानम्** = स्वान्तर्वर्त्तिकालुष्यमिव। मरणोत्तरमतिदुर्लभं मुखाग्निसंयोगम् = यवनानां शवा निखन्यन्ते नत्वग्नौ हूयन्ते यतः। (अत्र—सर्वत्रोत्प्रेक्षैव यथायथं लापनीया ग्रन्थगौरवभयादस्माभिर्बहु न लाप्यते)। प्राप्ताधिकारकलिताखर्वगर्वान् = प्राप्तेन (तेन तेन) अधिकारेण अखर्वोऽनल्पो गर्वो दुरभिमानो येषां तान्। **हरिद्रा** = (रजनी) पीता। 'निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः। **लशुनम्** = रसोनकः। रसे आस्वादने ऊन्यते पातकहेतुत्वादिति व्युत्पत्तेः। 'लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः' इत्यमरः। **चुक्रम्** = तितिण्डीकम् इम्बलीतिप्रसिद्धम्। "तिन्तीडीकञ्च चुक्रञ्च वृक्षाम्लम्' इत्यमरः। **वितुन्नकम्** = छत्रा। अथ छत्रा वितुन्नकम् इत्यमरः। **श्रृङ्गवेरम्** = आर्द्रकम्। 'आर्द्रकं श्रृङ्गवेरं स्यात्' इत्यमरः। **रामठम्** = हिङ्गु। 'सहस्रवेधि जतुकं वाह्लीकं हिङ्गु रामठम्' इत्यमरः। **मत्स्यण्डी** = फाणितम्। कुक्कुट्या अण्डम् कुक्कुटाण्डम्। **पललम्** = क्रव्यम्। आमं मांसमित्यर्थः। निद्रां **विद्रावयतः** = भञ्जयतः। **समीपेति**—**कुतूः** = चर्मरचितं तैलादिस्नेहाधारपात्रम्। 'कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्' इत्यमरः। **कर्करी** = गलन्तिका। 'कर्कर्यालुर्गलन्तिका' इत्यमरः। 'कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिपु'. इति (विश्वमदिन्यौ)। **कण्डोलः** = पिटः। वंशादिनिर्मितभाण्डविशेषः। 'कण्डोलपिटौ' इत्यमरः। **कटाहः**=कड़ाहः। **वटक-पूरिका**—पुटिकादिपाक (तलन) पात्रम्। **कम्बिः**= दर्वी। 'कम्बिः दर्वी खजाका च' इत्यमरः। **कडम्बः** = शाकनालविशेषः नाडीशाक इति प्रसिद्धः। 'अस्य तु नालिका कडम्बश्च कलम्बश्च' इत्यमरः। 'कलम्बः शाकभेदे स्यात्कदम्बशरयोः पुमान्' इति (मेदिनी)। एतेषां द्वन्द्वः। ततः—समीपे संस्थापिताः कुत्वादयो यैस्तानिति बहुव्रीहिः।

**पृ० ४७ ॥ उग्रगन्धीनि** = दुत्कटगन्धीनि । **शूलाकुर्वतः** = शूलेन संस्कुर्वतः '**शूलात् पाके**' ( ५ । ४ । ६५ ) इति डाच् । **नखम्पचाः** = मितम्पचाः । '**मितनखे च**' ( ३ । २ । ३४ ) इति खश् । यवागूः = विलेपीः 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इति ( अमरः ) । स्थालिकासु = 'थाली' इति नाम्ना प्रसिद्धेषु पात्रेषु प्रसारयतः = परिवेषयतः । **हिङ्गुगन्धीनि** = हिङ्गुनः गन्धः आधारणलेशो येषु तानि । '**अल्पाख्यायाम्**' (५।४।१३६) इति सूत्रेण गन्धस्येकारोन्तादेशः । 'गन्धो गन्धक आमोद लेशे सम्बन्धगर्वयो'रिति ( विश्वः ) **तेमनानि** = व्यञ्जनानि । **तिन्तिडीरसैः** = चुक्ररसैः **मिश्रयतः** = घाटयतः । **जम्बीरनीरम्** = दन्तशठरसम् । **निश्च्योतयतः** = क्षारयतः । **ताम्रचूडान्** = चरणायुधान् कुक्कुटानित्यर्थः **आरनालम्** = काञ्जिकम् । एतानि सर्वाणि द्वितीयाबहुवचनान्तानि 'सूदान्' इत्यस्य विशेषणम् । सूदान् = पाचकान् ( खानसामान् ) इत्यर्थः ।

**क्वचिदिति**—वक्रेण कङ्कत्या साधिताः स्फालिताः काकपक्षा यैः तान् । मदेन मद्यजनितेन व्याघूर्णितानि व्याघूरितानि शोणानि रक्तानि नयनानि येषां तान् । **यौवनचुम्बितशरीरान्** = यौवनेन चुम्बितं स्पृष्टं सम्बद्धमिति यावत् शरीरं येषां तान् । अत्र—'चुबि वक्त्रसंयोगे' इति धातोर्व्युत्पन्नस्य चुम्बितपदस्य वक्त्रसंयोगरूपो मुख्यार्थः स च बाधितः । कालात्मकस्याऽवस्थाविशेषस्य अमूर्त्तस्य मुखाभावात् तस्मात् चुम्बितपदस्य सम्बद्धेऽर्थे **लक्षणा** । सौन्दर्यातिशयश्च प्रयोजनम् । **स्वसौन्दर्येति—**अत्र **निमित्तोत्प्रेक्षा** । **अनवरतेति**—अनवरतमाक्षिप्ताः पतिताः कुसुमेषोर्मन्मथस्य वाणा येषु तान् इव **कुसुमैर्भूषितान्** = पुष्पैर्मण्डितान् । अत्र—कुसुमभूषितत्वे कुसुमेषुबाणाक्षिप्तमुत्प्रेक्षितम् । **वसनातिरोहिताङ्गच्छटान्**=वसनैः वस्त्रैः अतिरोहिता अङ्गच्छटा अवयवद्युतिर्येषां तान् । **विविधेति**—विविधैः पटवासैर्वासितानपि चिरमस्नानेन देहशुद्ध्यभावेन महामलिनः अत्यन्तं मलीनो महोत्कटश्च महानुग्रश्च यः स्वेदः=देहवारि, तस्य पूतिगन्धेन दौर्गन्ध्येन प्रकटीकृताऽस्पृश्यता यैः तान्, नययुवकान् = नवान् यूनः । क्वचिदित्यारभ्य 'इति व्याहरत' इत्यन्तं बहु स्पष्टम् ।

**पृ० ४९ ॥ साङ्ग्रामिकभटान्** = सङ्ग्राममर्हतीति साङ्ग्रामिकः । '**तदर्हति**' (५ । १ । ६३) इति ठक् । साङ्ग्रामिकाश्च ते भटाः इति समानाधिकरणसमासः । **प्रधानपटकुटीद्वारम्** = उपकार्याद्वारम् ।

**पृ० ५१** । निष्ठयतादानभाजनहस्तैः = पतद्ग्रहपाणिभिः । **लालाटिकैः**

प्रभुभालदर्शिभिः कार्याक्षमैरित्यर्थः । "लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः" इत्यमरः । **सुवर्णसूत्रेति** । सुवर्णसूत्रेण सूत्राकारेण सूक्ष्मतरेण सुवर्णेन 'कनारी' इत्याख्येन रचिताः या विविधाः नानारूपाः कुसुमकुड्मललताः=पुष्प-कलिका-वल्लयः तासां प्रतानैः आतानवितानरूपैः सङ्घैः अङ्कितः कञ्चुकश्चोलको यस्य तम् । महोपवर्हम् = महोपधानम् । **क्रोडे** = उरसि । **संस्थाप्य** = धृत्वा । **रजतपर्यङ्के** = राजते पल्यङ्के । **विविधेति** = विविधेन प्रचुरेण फेनेन डिण्डीरेण फेनिलो यः क्षीरधिः दुग्धसमुद्रः तस्य जलतलस्य छविं शोभाम् अङ्गीकुर्वत्याम्=धारयन्त्यां **तूलिकायाम्** = कूर्च्याम् । **उपविष्टम्** = स्थितम् = 'अपजलखानं' **ददर्श** = अवालुलोके । **किंदेशवास्तव्यः** = कुत्रत्यः । वसतीति वास्तव्यः । '**वसेस्तव्यत् कर्त्तरि णिच्च**' इति वार्त्तिकेण कर्त्तरि तव्यत् ।

**पृ० ५२** ॥ पर्याटयति—भ्रामयति । णिच् ।

**पृ० ५३** ॥ **अटाट्याम्** = पर्यटनम् । '**परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानम्**' ( वा० ३ । ३ । ११५ ) इति निपातनात् साधुः । **अवालूलुकत्** = 'अवालुलोकत्' इति युज्यते । "नाग्लोपिशास्वृदिताम्" ( ७ । ४ । २ ) इति ऋदितामपि चङ्परे णौ उपधाह्रस्वनिषेधात् । तस्मादत्र **च्युतसंस्कृति**र्वा लेखकप्रमादो वेति स्वयं विवेचनीयम् । **प्रान्तप्ररूढाम्**=तटोपान्तवर्त्तिनि प्रदेशे विद्यमानां । **पद्मावलीम्**=कमलवनीम् । **परिमर्दयन्ती**= उल्लोलयन्ती । **यत्र**=पूर्ववङ्गे । **ब्रह्मपुत्र इव**=विषविशेष इव । **शत्रुसेनानाशनकुशलः**=वैरिव्रातविध्वंसनसमर्थः । **साम्लेति**—आम्लेन सह वर्त्तते साम्लः स चासौ सुमधुरो रसः तेन पूरितानि=भरितानि । **फूत्कारेति**—फूत्कारेण उद्धूता उड्डायिता भूतिर्भस्म यस्य तादृशो यो ज्वलदङ्गारः=चमदङ्गारः तस्य विजित्वरः =तदाभातिरस्कारकारी वर्णो येषां तानि । '**नागरङ्गाणि**' इत्यस्य विशेषणम् । **आवर्त्तः**=' स्यादावर्त्तोऽम्भसां भ्रमः ' इत्यमरः । **स्रोतस्वतीषु**=नदीषु । "सहोहोकार" मिति शब्दानुकृतिः । **क्षेपणीः**=नौदण्डान् । 'नौकादण्डःक्षेपणी स्यादरित्रं केनिपातनः' इत्यमरः । **वडिशम्** = मत्स्यवेधनम् । **कुवेणीति**— कुवेण्यां मत्स्याधान्यां तिष्ठन्तीति कुवेणीस्था ये म्रियमाणा आसन्नमरणा मत्स्या मीनाः तेषां परीवर्त्तान् = कचवर्त्तनानि । आलोकमालोकम् = दृष्ट्वा दृष्ट्वा ।

**पृ० ५४ प्रनन्दन्तः** = हर्षयन्तः । कूष्माण्डफक्किकाकारया = कर्कारुफालिकासदृशया । ' कूष्माण्डकस्तु कर्कारुः ' इत्यमरः । ' भिन्नाञ्जनलिप्ता इव मसिस्नाता इव साकारा अन्धकारा इव काला ' इति सर्वत्र **उत्प्रेक्षा** । अभिनन्द्य=

इति कर्मणि तङ् स्तूये इत्यर्थः । **मूर्च्छनाप्रधानम्** = अविच्छेदं स्वरात्स्वरान्तर-प्राप्तिः **मूर्च्छना** । सविच्छेदं स्वरान्तरावृत्तिस्**तानः** । सोऽयं चतुरशीतिसङ्ख्याकः सङ्गीतशास्त्रे प्रसिद्धः । 'सप्तस्वरास्त्रयो ग्रामा मूर्च्छना एकविंशतिः' इति (वैजयन्ती)। उक्तञ्च ' सङ्गीतशास्त्रे—

**विस्तार्यन्ते प्रयोगाय मूर्छना ऽशेषसंश्रयाः ।**
**तालास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः ॥** इति
**स्वराः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते ।**
*** मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवाम् ॥** इति

**पृ० ५५ ॥ स्वरान्** = निषादादीन् सप्त ।

†'निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः' । इत्यमरः ।

**सम्मेल्य**=सन्तोल्य समीकृत्येति यावत् । पातितवामजानुः=पातितो वामजानुर्येन सः । ( इत्यवस्थानजातिर्गायकातनाम् ) तानपूरिकायाः तुम्बं=तुम्बिकाम् अधोभागम् **क्रोडे** = अङ्के । **दधेति**—दत्तहस्तस्य वामेतरकरस्य यः **कूर्परः** कफोणिः भुजमध्यग्रन्थिः ( ' कफोणिस्तु कूर्परः' ) इत्यमरः । तस्य स्थापनं धरणं तत्पुरःसरं तत्पूर्वकमिति सर्वा **स्वभावोक्तिः** । **रणयन्** = सन्नादयन् । **ग्रामान्**=स्वरसंदोहान् । उक्तञ्च—

---

* ' सङ्गीतदर्पणे ' तु—

**क्रमात् स्वराणां सप्ताना मारोहश्चावरोहणम् ।**
**मूर्च्छनेत्युच्यते ग्रामत्रये ताः सप्त सप्त च ॥**
**स्थानत्रयसमायोगे मूर्च्छनारम्भ-सम्भवः ॥**

' स्फुटीभवद्ग्रामविशेषमूर्च्छनाम् '. इति **माघः** ।

† उक्तञ्च ' सङ्गीतरत्नाकरे '—

**श्रुतिभ्यः स्युः स्वराः षड्ज-र्षभ-गान्धार-मध्यमाः ।**
**पञ्चमो धैवतश्चाऽथ निषाद इति सप्त ते ॥**
**तेषां सञ्ज्ञाः स-रि-ग-म-प-ध-नीत्यपरा मताः ।**
**श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः ।**
**स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥** इत्युक्तम् ।

' सङ्गीतदर्पणे 'तु—

**स्वयं यो राजते नादः स स्वरः परिकीर्त्तितः ।**

यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि ।
तथा स्वराणां सन्दोहो *ग्राम इत्यभिधीयते ॥
षड्जग्रामो भवेदादौ मध्यमग्राम एव च ।
†गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम् ॥ इति ।

समधात्=समयोजयत् । 'सखि' इति स्थायिवाक्यमिदम् । 'यत्रोपविश्यते रागः स्वरः स्थायीति कथ्यते' इत्युक्तेः ।

हे सखि ! आलि ! नन्दतनयः श्रीकृष्ण आगच्छति इत एवायातीति सोल्लासमुक्तिः । मुरलीरणनैः=वंशीस्वनैः समाधिकसुखम्=सम्यगधिकं सुखं ब्रह्मानन्दमेव प्रयच्छति तदीयवेणुरणनश्रवणेन ब्रह्मादीनामपि तदेकमात्रलयस्य पुराणादिप्रसिद्धेः तमेव वर्णयति—'भैरवरूप' इति—पापिजनानाम् = दुष्टानां तमःप्रकृतीनां राक्षसावताराणामपजलखानप्रभृतीनामिति गूढोऽभिसन्धिः भैरवरूपः = भयङ्करः कालभैरव इत्यर्थः । सताम् = पुण्यात्मनां धर्मावताराणां शिवप्रभृतीनां सुखकरः सङ्कटनिवारयिता आनन्दप्रदश्चेत्यर्थः । धार्मिकाणामेव परमार्थसुखलाभ इति ध्वनिः । उल्लेखालङ्कारोऽप्यत्र, लक्षणमुक्तं प्राक् । किञ्च भैरवाद्याः शब्दाः रागाणां नामानि तत्र-भैरवलक्षणमुक्तं 'सङ्गीतदर्पणे'—

धैवतांशग्रहन्यासो रिपहीनत्वमागतः ।
भैरवः सतु विज्ञेयो धैवतादिकमूर्च्छनः ।
विकृतो धैवतो यत्र औडवः परिकीर्त्तितः ॥ इति ॥

रिपहीनत्वमागतः = ऋषभपञ्चमवर्जितः इत्यर्थः । औडवः=पञ्चभिः स्वरैर्गीतः

---

* 'ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रयः' इति सङ्गीतरत्नाकरः ।

† एतल्लक्षणमुक्तं 'सङ्गीतदर्पणे'—

'षड्जग्रामः' पञ्चमे स्व-चतुर्थश्रुति संस्थिते ।
स्वोपान्त्यश्रुति संस्थेऽस्मिन् 'मध्यमग्राम' इष्यते ॥
यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ।
रिभयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रयेत् ।
प-श्रुतिं धो निषादस्तु ध-श्रुतिं स-श्रुतिं श्रितः ।
गान्धारग्राममाचष्ट तदा तं नारदो मुनिः ।
प्रवर्त्तते स्वर्गलोके ग्रामोऽसौ न महीतले । इति ।

'ध-नि-स-ग-म-ध' इति भैरवस्योदाहरणम् । अस्य ध्यानन्तु—

गङ्गाधरः शशिकलातिलकस्त्रिनेत्रः
सर्पैर्विभूषिततनुर्गजकृत्तिवासाः ।
भास्वन्त्रिशूलकर एष नृमुण्डधारी
शुभ्राम्बरो जयति भैरव आदिरागः ॥

एवं देव-ललितलक्षणादिकमपि सङ्गीतग्रन्थेषु सप्रपञ्चं तत एवाऽवलोक्यं, ग्रन्थ-वृद्धिभयाद्दिङ्मात्रन्तु दर्शितम् । पुनः कीदृशो नन्दतनयः इत्याह—**कलितललितेति** । कलिता ललिता = मनोहरा चासौ मालतीमाला अस्याऽस्तीति तादृशः । पक्षान्तरे कलितः उपक्रान्तो यो ललितः = (a) 'ललिता' इत्याख्यो रागः स एव मालतीमाला अस्य । ललितारागस्य माल्यधारित्वेन रागसमाधौ तद्भेदभावो व्यज्यते। सुरवरैः:=इन्द्रादिभिः (अपि) वाञ्छिता इष्टा । (कृतेत्यर्थः) सेवा यस्य सः । **सारङ्गैः** = तन्नामभिः पक्षिभिः सारङ्ग इव सुन्दरः पक्षे सारङ्गाख्यरागालापेन हृदयङ्गमः । **दृग्भिः** = नेत्रैर्निपीयमानः = सादरमीक्ष्यमाणः । **चपलेति**—चपला इव विद्युदिव चपलचमत्कृति = चञ्चलचाकचक्यं वसनम् = अम्बरं यस्य सः पीताम्बर इत्यर्थः । विहितं मनोहरं श्रोतृणां हृदयवशीकरं गानं येन सः । श्रीवत्सेन लाञ्छितः श्रीरिति रागोऽपि **गवीशः** = वेदाऽऽविर्भावकः 'तेने ब्रह्म हृदा य आदिकवये' इत्युक्तेः । **गौरीपतिना** = महादेवेन सदा भावितः = ध्यातः गौरीति गौडीनामको रागोऽपि । बर्हिणबर्हकिरीटः = मायूरपिच्छकृतमुकुटः । **कनककशिपुकदनः** = हिरण्यकशिपुसंहारी नृसिंहोऽपि स एवेत्यर्थः । **बलिमथनः** = बलिध्वंसी स एव वामनः । **विहतदशाननकीटः** = विहतो नाशितो दशाननो रावणः कीट इव स 'एवम्भूतालौकिकमहिमा सर्वथोपास्य इति सखीम्प्रति सख्या उक्तिः । **पारिषदेषु** = परिषदि साधुषु सभ्येष्वित्यर्थः । **'तत्र साधुः'** ( ४ । ४ । ९८ ) इत्यधिकारे—'परिषदोण्यः' (४।४।१०१) इत्यत्र योगविभागात् णोऽपि तेन 'पारिषद्यः' 'पारिषदः' इति रूपद्वयं सिद्ध्यति **ससाधुवादम्** = साधुवादपूर्वकं **वितीर्णकङ्कणे** = दत्तकङ्कणे च अपजलखाने इति भावे सप्तमी । **गुणग्राहिताम्** = गुणज्ञतां **प्रशशंस** = अस्तौत् ।

**सैन्धवारोहविद्यासिन्धुः** = अश्वारोहणकर्मज्ञानसागरः । **चन्द्रहासचालने** = खड्गमारणे । **वीरवारवरः** = शूरसमूहश्रेष्ठः ।

'समूहनिवहव्यूहसन्दोहविसरव्रजाः । स्तोमौघनिकरव्रातवारसंघातसञ्चयाः' इति ( अमरः ) ।

**पृ० ५७ ॥ दीनदुःखदावदहनः**=अनाथजनदुःखध्वंसनकारीत्यर्थः **मादृशेति**—अत्र प्रायोऽनुप्रासालङ्कारः ।

**पृ० ५७ ॥ दक्षिणपूर्वस्याम्**=दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा । '**दिङ्नामान्यन्तराले**' ( २ । २ । २६ ) इति समासः । '**विभाषादिक्समासे बहुव्रीहौ**' ( १ । १ । २८ ) इति सर्वनामसंज्ञा । '**महेन्द्रमन्दिरखण्डमिव**' इति कथने शत्रुभिरजेयता व्यज्यते । डमरुडुडुक्कारेण तोपितो भर्गः शिवो यत्र । **तपनीयभित्तिकेति—तपनीयं**=सुवर्णं तस्य भित्तिकासु भित्तिषु जटितानि खचितानि यानि महारत्नानि तेषां किरणावलीभिः मयूखमालाभिः वितन्यमानं=विस्तार्यमाणं यत् महावितानं महोल्लोचः तस्य वितत्या विस्तारेण विरोचितः उद्योतितो यः प्रतापः शिवप्रताप इत्यर्थः तेन तापिताः ज्वालिता परिपन्थिनां शत्रूणां निवहः समूहो येन तमिति 'प्रतापदुर्गम्' इत्यस्य विशेषणम् । अत्र शिवविभूतेर्वर्णनात् **उदात्तालङ्कारः** । उक्तञ्च 'दण्डिना'—

**आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् ।**
**उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥ इति ॥**

**चन्द्रचुम्बनचतुरचारुशिखरनिकरम्**=अत्युच्चमनोहराशिखरसमूहोपेतम् । अत्र चरयोर्वर्णयोः असकृत्साम्यात् **अनुप्रासः । सम्बन्धातिशयोक्तिश्च** चन्द्रचुम्बनाऽसम्बन्धेऽपि सम्बन्धवर्णनात् । **भुशुण्डिकेति**—भुशुण्डिकानां किणैः अङ्किताः चिह्निताः प्रचण्डाः कर्कशाः भुजा एव दण्डा येषाम्—एवंविधाः ये रक्षकाः रक्षाभटाः तेषां कुलेन संघेन विधीयमानाः परःसहस्राः परिक्रमाः मण्डलानि यस्य तम् । **धमद्धमदिति**—धमद्धमदिति शब्देन दोधूयमाना अनेका ध्वजाः तेषां पटलैर्निर्मथितः विलोडित इव महान् आकाशो यत्र तम् ।

**पृ० ५८ ॥ खपुष्पायितः**=खपुष्पमिवाचरितः । यथा आकाशस्य पुष्पं, शशस्य शृङ्गं, कमठ्याः=कच्छप्याः स्तन्यं दुग्धं, सरीसृपस्य=सर्पस्य श्रवणं भेकस्य=मण्डूकस्य रसना न भवति तद्वदत्यन्तमसम्भावितः कोऽस्ति शिव इति सगर्वोक्तिरफजलखानस्य ।

**पृ० ५६ ॥ सादीनाम्**=अश्वारोहाणाम् । पत्तीनाम्=पदातीनाम् । 'पदातिपत्तिपदगपादातिकपदाजयः' इत्यमरः । **मदावेशस्त्विति** । मदस्य विवेकनाशकता सुप्रसिद्धैव वर्णिता च बहुशः कविभिः । तथाहि—

हसति नृत्यति गायति वल्गति
भ्रमति धावति मूर्च्छति शोचते ।
पतति रोदिति जल्पति गद्गदं
धमति धाम्यति मद्यमदातुरः ॥ इति ।
( सुभाषितरत्नसन्दोहे )

**तदवधार्य** = तन्निश्चित्य ।

समस्तकूर्चान्दोलनम् = समग्रदाढिकाहिल्लोलनम् । पारिषदेषु = सभ्येषु । अदुर्मना दुर्मना भवतीति दुर्मनायमानः तेषु । '**भृशादिभ्योभुव्यच्वेर्लोपश्च हलः**' ( ३ । १ । १२ ) इति सूत्रेण अभूततद्भावविषये दुर्मनस्-शब्दात् क्यङि शानच् । '**यस्य च भावेन भावलक्षणम्**' ( २ । ३ । ३७ ) इति भावे सप्तमी । **व्यत्येति** = उल्लङ्घ्य यातीत्यर्थः । 'सोत्प्रास' मित्यादि **स्वभावोक्तिः** । **निववृत्ते** = निरियाय निरगादित्यर्थः ॥

**पृ० ६१** । यदिचाहमाहवे म्रियेय, वध्येय ताड्येय' इत्यत्र **क्रियादीपकम्** । दीपकलक्षणमाह दण्डी—

**जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना ।**
**सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा** ।। इति ।

**पृ० ६३** ॥ दुर्गप्राचीरान्तरालेषु=दुर्गस्य यत्प्राचीरं प्रान्तन्तो वृतिः तन्मध्येषु । **अरुणश्मश्रवः** = यवनाः । **विजेष्यामहे**= '**विपराभ्यां जेः**' ( १ । ३ । १९ ) इत्यात्मनेपदम् ।

**पृ० ६४** ॥ चञ्चतश्चन्द्रहासस्य चमत्कारचाकचक्येन चिल्लीभूतानि क्लिन्नानि चक्षूंषि येषां ते । **विकचताम्** = विकाशभावम् । 'चाटकैर'—इति । चटकायाः पुमपत्यं चाटकैराः तेषां चकचकमिवाचरत्सु **कवचचकत्कारेषु** = कवचानामुरच्छदानां चकत्कारेषु शब्दविशेषेषु । 'उरच्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः । 'भ्रमरालिष्विव' **इत्युत्प्रेक्षा** । लोहवर्म=लोहनिर्मितं तनुत्रं कवचमित्यर्थः । 'अथ तनुत्रं वर्म दंशनम्' इत्यमरः ।

**पृ० ६५** ॥ आयसम्=अयोनिर्मितं शिरस्त्राणम्=शिरोरक्षकं जालविशेषम् **झञ्झया** = झञ्झावातेन । 'झञ्झावातः सवृष्टिक' इति (वैजयन्ती) । 'सूक्ष्मवसनपरिधानः' इति शिवापेक्षया तस्यापजलस्य महज्जाड्यं व्यज्यते । **वज्रकेति**— वज्रकेण हीरकेण जटिता या उष्णीषिका तस्यां मुक्तागुच्छैः मौक्तिकगुलुच्छैः चोचुम्ब्य-

मानं अतिशयेन स्पृश्यमानं भालं ललाटं यस्य सः । निश्वासप्रश्वासाभ्यां परिमथितः सम्मर्दितो यो मद्यगन्धः तेन परिपूरितं व्याप्तीकृतं पार्श्वदेशान्तरालं येन सः । शोणाभ्यां रक्ताभ्यां श्मश्रूकूर्चाभ्यां विजितः तिरस्कृतः नूतनः प्रवालः सद्योनिर्गतं पत्रं येन सः । **वल्गाम्**=अश्वरश्मिम् । **अवारुधत्**=अस्तम्भयत् ।

**पृ० ६६ ॥ जत्रुणी** = स्कन्धसन्धी । महाध्वजः = महती पताका । **अग्निसात्** = वह्निसात् । **समपप्तन्** = सम्पातमकार्षुः **रोदसी** = द्यावापृथिव्यौ शतशः **सादिनः** = अनेकशतसंख्याः अश्वारोहिणः । 'ज्वालामाला अवलोक्य सहाहाकारं तदभिमुखं प्रयाता' इति सम्बन्धः । कीदृश्यो ज्वालामाला इति विशिनष्टि- 'गगनं चोचुम्ब्यमानाः' इत्यादि विशेषणैः । कडकडाध्वनिना धर्षिताः = उद्वेजिताः प्रान्तप्रजाः समीपवर्त्तिन्यः प्रजा याभिः ताः । **उड्डीयमानेति**—उड्डीयमानानि दन्दह्यमानानि च यानि परःसहस्राणि पटखण्डानि तैर्विहितो विहङ्गमानां पक्षिणां विभ्रमः खेदो याभिः । **ज्योतिरिङ्गणायितेति**—ज्योतिरिङ्गणः खद्योतः तद्वदाचरिता ये परःकोट्याः = कोटिसङ्ख्यातोऽपि अतीताः स्फुलिङ्गाः = अग्निकणाः तेषां रिङ्गतैः = उड्डयनैः पिङ्गीकृताः पिञ्जरीकृताः प्रान्ताः परिसरभूमयो याभिः । दोधूयमाना अतिमात्रमेजमाना या धूमघटाः धूमलेखाः तासां पटलेन समुदायेन परिपात्यमानं समन्ततो विकीर्यमाणं यद् भसितं=भस्म तेन सितीकृताः=श्वेतीकृता अनोकहा वृक्षा याभिः ।

**पृ० ६७ ॥ अपरे** चेति—महाराष्ट्राणां असयः एव भुजाङ्गिन्यः सर्पिण्यः ताभिः दंदश्यमानाः नितरां पीड्यमानाः । पलायन्त = अधाविषत । जपासुमनःसमाच्छन्नामिवं = जवापुष्पप्रावृतमिव । रणाङ्गणम्=समरभूमिरित्यर्थः । अन्यत् मदीय व्याख्याशैल्या लापनीयम् ।

इति ( नूतन ) शिवराजविजयपताकायां द्वितीयो निश्वासः ।



* ॐ *

# अथ तृतीयो निश्वासः ।

यः संयुनक्ति भूतानि वियुनक्ति विहन्ति च ।
नमस्तस्मै महाभूत-स्वामिनेऽचिन्त्यशक्तये ॥ १ ॥
स्मारं स्मारं महावीरं ध्यायं ध्यायं शिवं तथा
निश्वासस्य तृतीयस्य व्याख्या सन्तन्यतेऽधुना ॥ २ ॥

उदयपुरभूमिप्रदेशान्यतमप्रदेशस्वामिनः **खड्गसिंहस्य** पुत्रयोर्गौरबद्धश्यामवडुनाम्नाऽत्र प्रसिद्धयोः भूयसा कालेन स्वावियुक्तसौवर्णीनामकभगिनीपुरोहिताभ्यां सह काकतालीयन्यायेन जातस्य समागमस्योपक्षेपकं स्फुटं श्लोकप्रतीकमादत्ते उपन्यासविन्यासनयनिपुणो महाकविर्व्यासः—'**जीवन् नर**' इति ।

विचित्रप्रपञ्चचरित्रापेक्षया नान्यत् किमपीन्द्रजालमिति साश्चर्यं घटनावैलक्षण्यं द्योतयितुं भर्तृहरिप्रतीकमभ्युद्धरति—'**संसारेऽपी**'ति ।

**पृ० ६६ ॥ 'कथं कथमपि' इति**—सौवर्णी शोकस्य किञ्चिन्मार्जनं सूच्यते । **दाडिमाद्यास्वादनतत्पराम्** = 'दाडिमः करको दन्तबीजो लोहितपुष्पक" इति (निघण्टुः) । दाडिमः = दाडिम्बोऽपि स एव—तथा च—"दाडिम्ब सारपिण्डीरस्वाद्वम्लशुकवल्लभाः" इति (रभसः) । कुसुमगुच्छैः = कुसुमानां पुष्पाणां गुच्छैर्गुलुञ्छैः । **मनोविनोदयन्तीम्**=चित्तमुल्लालयन्तीम् । अस्य 'कथं कथमपि' इत्यनेन सम्बन्धः । **समन्वेष्टुम्** = गवेषयितुम् । **अन्तरिति** । अन्तरभ्यन्तरे गोपिता आच्छादिता क्षुरप्रा क्षुरधारा छुरिका कृपाणी यस्याः तां यष्टिम् । 'गुच्छगुच्छै' रित्यादौ '**नित्यवीप्सयोः**' ( ८ । १ । ४ ) इत्यनेन आभीक्ष्ण्ये द्विर्वचनम् । अत्यन्तं गुच्छाकारैः **लोललोलैः कुञ्चितकुञ्चितैः**= अनयोः—अत्यन्तलोलैः अत्यन्तं कुञ्चितैरिति यथाक्रममर्थः ।

**शूली** = भैरवावतारो महादेवः । **शूलाकरोति** = शूलेन पचतीत्यर्थः । '**शूलात्पाके**' ( ५ । ४ । ६५ ) अनेन शूलशब्दात्पाकविषये कृञोयोगे डाच् । **खड्गिनी** = काली । **खड्गेन** = असिना । **चक्री** = विष्णुः । **चक्रेण** =

सुदर्शनाख्येन । **चूर्णयति** = चोदयति । **पाशी** = वरुणः । **पाशैः** = स्वैःपा-शकसञ्ज्ञकैरस्त्रैः । **पाशयति** = बन्धयति । **हली** = हलधरो बलदेवः । **अव-हेलयति** = कर्षयति । **जम्भारातिः**=इन्द्रः । **दम्भोलिघातैः**=वज्राहतिभिः **दम्भिनः** = कपटिनः= **अम्भोधिः**=समुद्रः तस्य जलस्तम्भानां मेघमण्डलान्त-र्जलविकाराणामारम्भेषु=उद्गमेषु । न **पातयति**=नैव परिणामयति । **अहह**= महान् खेद इत्यर्थः । अत्र—असकृत् मभयोरावृत्तिदर्शनात् **अनुप्रासालङ्कारः** ।

**पृ० ७०** ॥ धर्मादपि **निर्भीकान्** = त्यक्तधर्मभयानित्यर्थः । 'अध्य-यनात्पराजयते' इत्यादिवत् पञ्चमी । **अभीकान्** = कामुकान् '**अनुकाभि-काभीकः कमिता**' ( ५ । २ । ७४ ) इति सूत्रेण अन्वभिभ्यां कन् अभेः पाक्षिको दीर्घश्च । अभिकामयते इत्यभीकः । "अभीकः कामुके क्रूरे निर्भये त्रिषु ना कवौ इति ( कोपः ) । **चिन्तासन्तानवितानैकतानः**=शोक-प्रवाहस्थगितचित्तवृत्तित्यर्थः । **न्यविशत** = प्रविष्टः । "**नेर्विशः**" (१।३।१७) इत्यात्मनेपदम् । "**सतु**" इति । वाष्पेन नेत्रवारिणा क्षालितं उपनयनमुपनेत्रं यस्य सः तादृशः । शोकेन अधिका कम्पिता वेपमाना गात्रयष्टिः शरीरं यस्य स तथाविधः । "सोपि रुरोद" इति सम्बधः । "वृद्धोऽपि च— सकरुणं रुरोद" इति सम्बन्धः । "मुक्तकण्ठ"मिति क्रियाविशेषणम् मुक्तोऽप्रतिहतः उत्पाटित इति यावत् कण्ठो यस्यां क्रियायां तत् यथा स्यात् तथा **म्लेच्छहतकैः**= दुष्टैर्यवनैः । **धर्मराजनगराध्वनि** = यममार्गे । **अध्वन्यः**=पान्थः मारित इत्यर्थः । **यमलौ** = सहोदरौ । **आखेटव्यसनिनौ**=मृगयारसिकौ । "मृगव्यं मृगयापि च । आखेटश्च वराधिश्च" इति ( वैजयन्ती ) ॥

**पृ० ७१** ॥ **वाष्पेति**—वाष्पानामस्त्राणां व्रजस्य समूहस्य उद्गमेन यद् दुर्दिनमिव दुर्दिनम्, ( 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः ) तेन ग्लपितं म्लानं मुखमाननं यस्य सः । **अवदधे**=सावधानो बभूव । अवोपसृष्टात् 'डुधाञ्' धातोर्लिट्येकवचने प्रथमपुरुषस्य रूपम् । 'गौरवट्टः (एव) अचकथत्' इत्य-न्वयः । कथंभूतः—**परिपक्वेति**—परिपक्वा परिणता या ताली तद्वत् दलीभूता रक्तपल्लवीभूता कपोलपाली = गण्डस्थलं यस्य सः '**शेषाद्विभाषा**' ( ५ । ४ । १५४ )—इति सूत्रेण समासान्तः कप् । **उदञ्चितरोममाली** = उद्भिन्नरोमराजिः । त्वरिताभ्यां कोष्णाभ्यां ईषदुष्णाभ्यां श्वासप्रश्वासाभ्यां शालते शोभत इति तथाविधः । **शारदेति**—शरदि भवः शारदः । भवार्थेऽण् । शारदी

चासौ शर्वरी रात्रिः तस्या यः शर्वरीसार्वभौमः रात्रिचक्रवर्त्ती अर्थात् चन्द्रः, तस्य किरणानां=मयूखानां यत् किरणं=क्षेपणं प्रसरणमिति यावत् तेन उद्भूतोद्भूता = अतिमात्रं निर्याता या कीलाली=नीरराजिः ( पयःकीलालममृतम् ' इत्यमरः ) पानीयप्रवाह इत्यर्थः तया व्यालीढो=व्याप्तो यश्चन्द्रकान्तः=तदाख्यो मणिविशेषः तद्वत् जालीभूते = आनायीभूते समन्ततो व्याप्ते लोचने नेत्रे यस्य स तथाविधः । उच्छलितरोदनबिन्दुप्रवाह इत्यर्थः ।

अत्र लकारशकारयोरसकृदावृत्तेरनुप्रासः । शारदशर्वरीशर्वरीत्यादौ तु—" आवृत्तिं वर्णसंघातगोचरां यमकं विदुः " इति दण्डिलक्षणात् **यमकालङ्कारः** । अन्तरा **लुप्तोपमापि । प्रासादो** गुणः। **गौडी** रीतिः । अत्र प्राचां "अर्थस्य ओजः प्रौढि" रिति लक्षणात् प्रौढिरपि गुणः । रोदं कुर्वन्निति समस्ते (संक्षिप्तेऽर्थे) व्यासकरणात् । गद्य**मुत्कालिका । करुणो** रसः । गद्यकाव्यत्वात् क्वचित्करुणादावपि दीर्घसमासकरणं न दोषाय । ' शर्वरी ' इत्यत्र ' **षिद्गौरादिभ्यश्च** ' ( ४ । १ । ४१ ) इति ङीष् ।

**कातरेण** = दीनेन । **भज्यमानेन** = त्रुट्यता **कम्पमानेन**=वेपथुमता स्खलतेत्यर्थः । सर्वभूमेरीश्वर इति सार्वभौमः। ' **तस्येश्वरः** ' ( ५। १ । ४२ ) इति सूत्रेणाऽण् ॥

**पृ० ७२** । सा = देवशर्मा पुरोहितः । तौ = श्यामगौरौ खड्गसिंहस्य तनयौ । स्वनयनवारिधाराभिः = स्वाश्रुप्रवाहैः । अभ्यसिचत् = ' **प्राक्सितादड्व्यवायेऽपि** ' ( ८ । ३ । ६३ ) इति षत्वे सति ' अभ्यषिचत् ' इति भाव्यम् । करुणोद्गारप्रवाहैः = करुणरसधाराभिरिवेत्यु**त्प्रेक्षा** । पर्यपूर्यत = साविताऽभूत्। कर्मणि तङ् । ' अथ कुटीराध्यक्षः गौरश्यामौ समुवाच ' इति सम्बन्धः । कस्मिन् सति गौरे श्यामे च कोशलामङ्के संस्थाप्य समुविष्टे सति । कथंभूते गौरे श्मामे च—रिङ्गदित्यादिना सप्तम्यन्तेन विशेषयति—रिङ्गन् = सञ्चरन् यस्तुङ्गो महान् * तिमिङ्गिलगिलः = मत्स्यविशेषः तस्य यः परिवर्त्तः पार्श्वविवर्त्तनम् तस्य प्रसङ्गोऽवसरः, तस्य सङ्गेन सम्बन्धेन अवसरप्राप्त्येति यावत् सभङ्गाः = समुच्छलिता ये तरङ्गाः वीचयः अर्थात् क्षुब्धा या लहर्यः तेषां ( तरङ्गाणाम् ) यद् रङ्गप्राङ्गणं सञ्चरणपर्यन्तचत्वरं तस्य सोदरीभूतं = समानं

* अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः ।
तिमिलिङ्ग गिलोऽप्यस्ति तद्गिलोप्यस्ति राघवः ॥ इति
( हनुमन्नाटके )

हृदयं = स्वान्तम् अत्यन्तं क्षुब्धं हृदयम् वशीकृत्य = कथञ्चित् स्तम्भयित्वा । अत्रापि—प्रौढिरर्थगुणः, **अनुप्रास**श्चेति पूर्ववत् ज्ञेयम् । किञ्च—' अथ ' इत्यारभ्य ' समुवाच ' इत्यन्ते गद्ये—

**"अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते ।**
**बन्धशैथिल्यदोषस्तु दर्शितः सर्वकोमले ॥"**

इति दण्डिकृतलक्षणानुसारं सौकुमार्यमपि गुणः । सच प्रकृते करुणरसं परिपोषयति । **सुवर्णवर्णाम्** = गौरीम् । **क्रियासमभिहारेण** = भृशं पुनः पुनश्चेत्यर्थः ।

**पृ० ७३ ॥ पटान्तेन** = वस्त्रकोणेन । **अतन्द्रितौ** = अनलसौ । **सनातनधर्मस्य** = वैदिकहिन्दुधर्मस्य विप्लवो विध्वंसः तस्य—असहनौ=अदान्तौ **नीतिकुशलौ**=क्षत्रियत्वादेव राज्यव्यवहारपण्डितौ । **परोपकारव्यसनिनौ** परहितकरणस्वभावौ ।

**दुर्बलात्कारेति**—दुर्बलात्कारपरायणानां प्रसह्यकारिणां तुच्छानां हतहृदयानां यवनानां म्लेच्छानां छेदे समुन्मूलने या इच्छा कामः तया उच्छलन्ती उद्गच्छन्ती या छटा अर्थात् हृदयस्यैवाऽप्रतिरुद्धप्रसरावस्था तया आच्छन्नौ प्रावृतौ= एकमात्रयवनध्वंसकामनाचुम्बितमनसौ इत्यर्थः । **अबालपराक्रमौ**=महाबलौ **वर्वर्त्ति**=अतिशयेन जायते । **इन्दीवरयोः**=कमलयोः उपरि भ्रमतः सञ्चरतः **भ्रमरानिव**=द्विरेफानिवेत्युपमा । **मेचकान्**=कृष्णवर्णान् **कचान्**=वालान्

**पृ० ७४ ॥** ' अस्ति कश्चन क्षत्रियवर्यैः आर्यवर्यैः अर्यवर्यैः व्याप्तो राजपुत्र प्रदेशः ' इति सम्बन्धः । ' अर्यः स्वामी वैश्ययो ' रित्यमरः । तान् विशिनष्टि तृतीयान्तैः **धैर्ये**त्यादिपदैः । **धैर्यधारिधुरन्धरैः** = महाधीरताशालिभिः । **धर्मोद्धारधौरेयैः** = धर्मोद्धरणाग्रेसरैः । **सोत्साहेति**—उत्साहेन हृदयसत्त्वेन सह यत् साहसम् बलकर्म तेन चञ्चन् चमत्कुर्वन् चन्द्रहासः खड्गो येषाम् तैः । **सुशक्तिशक्तिभिः** = सुशोभना अकुण्ठिता या शक्तिः कृपाणी तस्याः तया वा शक्तिः सामर्थ्यं येषां तैः कृपाणीसञ्चालनचतुरैरित्यर्थः । **"सद्य"** इति—सद्यः तत्कालं छिन्नाः कृत्ता ये परिपन्थिनां धाटीमारकाणां शत्रूणां गलाः कण्ठाः तेभ्यः गलत् स्रवत् यत् शोणितं रुधिरं तस्य छुरितैः बिन्दुकैः छन्नाः लिप्ताः छुरिकाः असिधेनुका येषां तैः । **भयोद्भेदनभिन्दिपालैः** = भयस्य उद्भेदनं = छेदनं यस्मात् तादृशः भिन्दिपालाः भिण्डिपालाः क्षेपणाः येषां तैः । भिन्दिं भेदनं पालयतीति ' भिन्दिपालः ' [illegible]

'घुमाणी' इति प्रसिद्धिरित्यन्ये । **स्वप्रतिकूलेति**—स्वप्रतिकूलानां शत्रूणां यानि कुलानि तेषामुन्मूलने = उद्ध्वंसने अनुकूल उचितो यो व्यापारो वेधनरूपः तत्र व्यासक्तानि शूलानि कुन्तास्त्राणि येषां तैः । 'हरितकुन्तशकुन्तकुलान्तभृत्' इत्यस्मद्गुरवो 'गुरुगोविन्दकाव्ये'। **घनेति**—घनानां प्रचुराणां विघ्नानां शत्रुकृतानामुपद्रवाणां विघट्टकः संघर्षकः प्रतीकारकारीत्यर्थः यो घर्घर इत्यनुकृतिर्घोषः शब्दः तेन घोरा भयावहाः शतघ्न्यः तोफाः तोभा इति यावत् येषां तैः । **प्रत्यर्थीति**—प्रत्यर्थिनां वैरिणां ये शुण्डिनो गजाः तेषां शुण्डानां कराणां आखण्डनेन उत्कर्त्तनेन उद्दण्डाः उद्भटाः लक्ष्यादप्रच्युता भुशुण्ड्यो येषां तैः । **प्रचण्डेति**—प्रचण्डः उद्धतो यो दोर्दण्डः = दण्डाकारो दीर्घो बाहुः तस्य यद् वैदग्ध्यं चातुर्यम् अर्थात् अवसरे बलकर्म तदेव भाण्डं भूषा येषाम् एवंभूताः । प्रकाण्डाः प्रशस्तफालाः काण्डाः वाणा येषां तैः । 'वणिङ्मूलधने पात्रे भाण्डे भूषाश्वभूषयोः' इति (**वैजयन्ती**)

**यत्र** = राजपुत्रदेशे । सानुमन्तः, जनाः, गृहाः, मार्गाश्च सन्ति इति शेषः तानुत्प्रेक्ष्य पृथक् २ विशिनष्टि—"**कोषपूरिता**' इत्यादिना। **कोषपूरिताः** नीवीधनोपेताः । **काञ्चनमयाः** = सुवर्णमया इव **सानुमन्तः** = पर्वताः । **जनाः** = लोकाः कीदृशः गन्धर्वा इव । गन्धर्वोदेवयोनिविशेषः तेच ते कीदृशः- **महार्हेति**—महार्हाणां बहुमूल्यानां मणीनां गणेन = समूहेन जटितानि संहितानि यानि भूषणानि तैर्भूषिता मण्डिताः । **विचित्रेति**—गवाक्षजालम् = वातायनम् अट्टालिका = इष्टकादिनिर्मितं राजगृहम् । अङ्गणम् = चत्वरम् । कपोतपालिका = विटङ्कम् सौधादिप्रान्ते काष्ठरचितं पक्षिवासस्थानम्। चत्वरम् = चतुष्पथः गोष्ठम् = गावस्तिष्ठन्त्यत्र । 'घञर्थे कविधानम्' इति । गवां स्थानम् । भित्तिकाः = कुड्यानि । विचित्राः = अलौकिका गवाक्षाद्या यत्र एवंभूता विश्वकर्मरचिता इव गृहाः । **सादीति** = सादिनोऽश्वारोहाः तेषां करेषु स्थिता या कशा अश्वचालनी तस्याः चालनसङ्केतेन सञ्चलितानां धावमानानां सप्तीनाम् = अश्वानां समूहस्य ये शफाः खुराः तेषां सम्मर्दन = संघट्टनेन समुद्धूता उच्छलिता या धूलिः रजःसंघः तया धूसरिता मृत्स्नावर्णा इव मार्गाः ।

**क्षत्रियकुलतिलकाः**=राजन्यवंशरत्नभूताः। **यवनराजवशंवदता**= म्लेच्छराज्याधीनता एव कर्दमः पङ्कः तेन सम्मर्दनैः लेपनैः कदापि आत्मानं न **कलङ्कयामासुः** = नैव संबिभिदुः न मिश्रयाम्बभूवुरिति यावत्।

**पृ० ७५** ॥ कमला इव विमलाः। अत्र—**उपमा** । **कमला** = लक्ष्मीः ।

'कमला श्रीर्हरिप्रिया' इत्यमरः । **विमलाः** = निर्मलाः । शारदा इव सरस्वतीव **विशारदाः** = विगगशारदाः मूर्खा इति विरोधः । परिहारस्तु–विशिष्टा शारदा सरस्वती विद्या यासामिति । विरोधानुप्राणितोपमालङ्कारः । अथवा द्वयोः **सङ्करः** । **अनसूया**=अगस्त्यपत्नीव अनसूया असूयाभिन्ना । या अनसूयाः ताः कथमनसूयाभिन्ना स्वास्मिन् स्वभेदाभावादिति विरोधः । न असूया ईर्ष्या यासामिति तत्परिहारः । पूर्व एवालङ्कारः । 'यशोदा इव' इत्यारभ्य 'सवर्णा इव च सुवर्णा' इत्यन्तं **शुद्धोपमैव** । **सती** = पार्वती । **सत्या**=सत्यभामा । **रुक्मिणी** = कृष्णपत्नी । **रुक्मिण्यः** = सुवर्णभूषणवत्य इत्यर्थः । **सवर्णाः** = समानवर्णाः **वर्णाः** क्षत्रियाद्याः **सुवर्णाः** = शोभनवर्णवत्यः सुन्दर्य इत्यर्थः ।

**सम्भाव्यमानेति**—सम्भाव्यमानः कलिप्रतापहेतोर्भवन्नेव यो बलात्कारः हठाकरणं तस्य धिक्कारे = तिरस्कारे ऊर्जस्वलं बलवत् तेजो यासां तास्तथाभूताः **योगाग्निनेवेति** । योगात् = योगसामर्थ्यात् उत्पन्नोऽग्निर्योगाग्निः तेनेवेति **उत्प्रेक्षा** । एवम्—'पतिविरहाग्निना इव । स्वक्रोधाग्निना इव' अत्रापि सैव । योगाग्निधारणया सत्या देहत्यागश्च *श्रीमद्भागवतस्य चतुर्थस्कन्धे व्यासेन वर्णितः । तथाहि–'योगाग्निनेव सन्दीपितासु चितासु' इत्यन्वयः ।

अत्र–प्रसिद्धाग्निनैव चितासन्दीपनरूपार्थस्य–अचेतनवस्तुनः स्थितस्य योगाग्नित्वेनाऽप्रस्तुतेन रूपेण यदुत्प्रेक्षणं सम्भावनं तदुत्**प्रेक्षालङ्कार** इति लक्षणसङ्गमनं बोध्यम् । एवमेव 'स्वक्रोधाग्निनेव' इत्यादावपि ज्ञेयम् । उत्प्रेक्षालक्षणम् 'अन्यथैव स्थितावृत्ति' रित्यादि दण्डिनोक्तं प्रागुक्तं न विस्मरणीयम् ।

**ज्वालाजालाञ्चितासु** = वन्हिकीलमालाव्याप्तासु । पतङ्गताम् = शलभताम् । अङ्गीकृत्य=स्वीकृत्य । **गङ्गाधरः**=महादेवः । तस्य **अङ्गभूषणताम्** भूतिभावं भस्मत्वम् । **अगमन्**=प्रापुः शिवं धाम जग्मुरित्यर्थः । अत्र **सौकुमार्यं** नाम गुणः । मरणात्मकाऽमङ्गलशब्दपरिहारेण 'वन्हौ प्रविश्य मृता' इत्यर्थस्य पर्यायेण कोमलरीत्या वर्णनात् । आह च **जयदेवः**–'सौकुमार्यमपारुष्यं पर्यायपरिवर्त्तनात्' इति ।

---

* एवं स्वदेहं महतां महीयसा
मुहुः समारोपिमङ्कमादरात् ।
जिहासती दक्षरुषा मनस्विनी
दधार गात्रेष्वनिलाग्निधारणाम् ॥ इति

**तदाकर्ण्यैति**—' करुणाया ' इत्यादिसन्दर्भे **गुणदीपक**मलङ्कारः । तदुक्तम्—

**जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना ।**
**सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं बुधाः ॥** इति

करुणादिपदं यथायथं गुणक्रियावाचि ज्ञेयम् । ' करुणया क्षालितहृदयेषु ' इत्येवं प्रत्येकं तृतीयान्तेनाभिसम्बन्धः । करुणादिना व्याप्तहृदयेष्वित्यर्थः । **अत्र** क्षालितपदं लाक्षणिकम् । व्यापनं सम्बन्धः । करुणाद्यतिशयबोधनञ्च प्रयोजनम् ।

**विरहयाम्बभूव** = परित्यक्तवती ममारेत्यर्थः । **विशालभल्लेन** = महता भल्लाख्येन शस्त्रेण ' भल्लः स्यात्पुंसि भल्लूके शस्त्रभेदे तु न द्वयोः ' इति ( मेदिनी ) । **वीरगतिम्** = स्वर्गतिम् । तथाच शास्त्रम्—' हतो वा प्राप्स्यसि स्वर्गं मृतो वा भोक्ष्यसे महीम् ' इति । **तुरगौ** = तुरङ्गमौ अश्वाविति यावत् । **मार्गभ्रष्टौ** = पथात् परिच्युतौ ।

**पृ० ७६ ॥ काम्बोजीयदस्युचारेण** = काम्बोजदेशीयतस्करसमूहेन ।

' तैरेव वनाद्वनमनायिष्वहि ' इति सम्बन्धः । ' नी ' धातोः कर्मणि प्रत्ययः । **समयम्** = कालम् । **अयापयाव** = अगमयाव । **पान्थसार्थम्** = पथिकसंघम् । **लुलुण्ठयिषया** = लुण्ठयितुमिच्छया । 'लुलुण्ठयिष' इत्यस्य धातुसञ्ज्ञाया ' **अप्रत्ययात्** ' (३।३।१०२) इति सूत्रेण स्त्रियामकारप्रत्ययः । **अलब्ध**=लब्धः कर्मणि तङ् । **परिकरे** = गात्रिकाबन्धे । **असिधेनुकाम्** = छुरिकाम् । **निस्त्रिंशम्** = खड्गम् । **चर्म** = फलम् । ढाल इति प्रसिद्धम् । फलकोऽस्त्री फलं चर्म ' इत्यमरः । **आत्मोत्तलनयोग्याम्** = स्वशक्त्यर्हामित्यर्थः **सज्जाम्** = धृतगोलिकाम् । **उपकारिकायाः** = उपकार्यायाः पटभवनादित्यर्थः ।

**पृ० ७७ ॥ परेतेति**—परेतपतिर्यमः तेन पालिता पुरी यमलोकः तस्याः पान्थम् पथिकं **विधास्यावः** = करिष्यावः । त्वां हनिष्याव इत्यर्थः । ' **अश्वानाम्** ' इति निर्धारणे षष्ठी । **चण्डवेगौ** = वरचालौ महारंहसौ । **आजानेयौ** = प्रशस्तजातिकौ । उक्तञ्चाश्वशास्त्रे—

**शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदे पदे ।**
**आजानन्ति यतः संस्था माजानेयास्ततः स्मृताः ॥** इति

**वल्गाम्** = अवक्षेपणीम् ' लगाम ' इति प्रसिद्धिः । ' वल्गाऽवक्षेपणी

कुशा ' इति ( वैजयन्ती ) * **प्रान्तरात्** = दूरशून्यात् अध्वनः। **उल्लङ्घमानौ** = उत्क्रम्य यान्तौ । **गव्यूतिपञ्चकम्** = दशक्रोशपर्यन्तमित्यर्थः । ' गव्यूतिः स्त्रीक्रोशयुगम् ' इत्यमरः। ' **अध्वपरिमाणे च** ' (वा० ६।१।७६) इति सिद्धम् । **ग्रामटिकाम्** = अल्पं ग्रामम् ।

**पृ० ७८ ॥** ' **अवास्थिष्वहि** ' इत्यत्र ' **समवप्रविभ्यःस्थः** ' ( १ । ३ । २२ ) इति सूत्रेण स्थाधातोरात्मनेपदम् लुङि उत्तमस्य द्विवचनम् । ' ततश्च ' इत्यादिगद्येन चन्द्रोदयवर्णनां प्रसञ्जयन् अग्रेतनं वृत्तान्तं ग्रथ्नाति । ' समुदिते चैत्रचन्द्रखण्डे ' इत्यन्वयः । दुग्धधाराभिरिवेत्युत्प्रेक्षा । **संक्षाल्य** = संशोध्य । **भसितच्छुरिताम्** = भस्मना चर्चितामिव कृत्वा । **कुन्दकुसुमैः** = माघ्यपुष्पैः । **गगनसागरमीने** = गगनम् आकाश एव सागरः समुद्रः तस्य मीने मत्स्ये इव । रूपकानुविद्धेय**मुत्प्रेक्षा** । मनोजः कामः तस्य मनोज्ञे हृदयङ्गमे हंसे इव । विरहिणां = वियोगिनां निकृन्तनाय = तक्षणाय रौप्यस्य = रजतस्य कुन्तप्रान्ते कुन्तफाले इव । पुण्डरीकाक्षो विष्णुः तस्य पत्न्या लक्ष्म्याः करपुण्डरीकपत्रे = करस्थितकमलपत्रे इव । **शारदं** शरदि भवं यदभ्रं मेघः तत्सार इव स्थिते अतिश्वैत्यात् शारदमेघौपम्यं । **सप्तसप्तीति**— सप्तसंख्याः सप्तयोऽश्वाः यस्य स सप्तसप्तिः = सूर्यः तस्य सप्तिरश्वः तस्य पादात् अङ्घ्रेः च्युते गलिते राजतखुरत्रे रौप्यखुरत्रे इव । ' मनोहरता महिलाललाटे इव ' इत्यसङ्गतः पाठो भाति । ' मनोहरतया ' इति युज्यते । सौन्दर्येण महिलाललाटे = कामिनीमस्तके इव । सुन्दर्या महिलाया मस्तकं चन्द्रार्धफलकसदृशं भवति । अत्र तूपमेयस्योपमानभावो गृहीतः । **अथवा**—मनोहरतैव महिलेति रूपकम् । तस्या ललाट इव स्थिते इति व्याख्येयम् । प्रजाजनानां यानि नयनानि नेत्राणि तेषां कर्पूरखण्डे = हिमवालुकाखण्डे इव । तमी=रात्रिः, तस्यां यत्तिमिरमन्धकारः तस्य कर्त्तनाय छेदनाय शाणेन=कषेण उल्लीढः=चोदितः तेजित इति यावत् यो निस्त्रिंशः तद्रूपे इव । 'शाणस्तु निकषः कषः' इत्यमरः । एवंभूते चैत्रचन्द्रखण्डे समुदिते सति । ' तत उत्तरस्यां दिशि शैलगण्डः आसीत् ' इति सम्बन्धः ।

**पृ० ७९ ॥ झरेति** । झरः वारिप्रवाहः तस्य झर्झरध्वानिना पूरितानि दिगन्तरालानि यस्य सः तथाविधः । महीरुहाणां वृक्षाणां समूहेन घनतया समा-

---

* प्रान्तरं दूरशून्योऽध्वा छायापानीयवर्जितः इति ' ' उज्जड़ उजाड़ ' इति पञ्जाबी भाषा ।

वृतः । तथा—उच्चावचानां नानाविधानां सानूनां शृङ्गाणां प्रचयैः संघैः सूचिताः प्रकटीकृता विविधा नाना कन्दरा दर्यो यस्य सः। **चन्द्रेति** । चन्द्रा तपच्युतेरित्यर्थः। **स्फुटम्** = प्रकटम् । **अवालोक्यन्त**=समैक्ष्यन्त । यस्य **उपत्यकाः**=अद्रेरासन्ना भूमयः । ततः **अनाहतध्वनिना** = अव्यक्तशब्देन **वसुधा** = धरित्री **अपूर्यत** = इत्यन्वयः अनाद्येतत्यर्थः ।

एवं **वनरात्रिध्वनिः**=शाँ शाँ इत्याकारः शब्दः । **कीचकध्वनिः**= वेणुध्वनिः। 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । **अवदधता** = अवधानं कुर्वाणेन । **साक्षात्कारि** = प्रत्यक्षतां नीतः । **समाकर्णि** = समश्रावि । **समन्वभावि**=सम्यगनुभूतम् । **समीरणेन** = पवनेन समीरितानां सञ्चालितानां किसलयानां **पारिप्लवतायाः** = प्रस्फुरमाणतायाः प्रभूतः प्रचुरः **स्वनः** = शब्दः । रात्रिकालवर्णनमेतत् ।

**तत्रापीति**—'कोकिलकुलकूजितं प्रत्यक्षीकृतम्' इत्यन्वयः । कीदृशं तत्—इत्याह—कलेति—कला मधुरा या **काकली** = सूक्ष्मो मधुरोऽस्फुटो ध्वनिः तस्य कलनेन नदनेन पूजितम् = सत्कृतम् । 'सुधाधारामपि **अधरी कुर्वत्** = हीनीकुर्वदित्यादीन्यस्यैव विशेषणानि । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे । कले' **इत्यमरः** ।

**पृ० ८०** ॥ **तारकितम्** = नक्षत्रसमूहभूषितम् । '**तदस्य सञ्जातं तारकादिभ्य इतच्**' (५।२।३६) इति इतच्प्रत्ययः। **स्मारं स्मारं** = स्मृत्वा २ । **महाचिन्तापारावारे** = चिन्ताया महति समुद्रे इत्यभिप्रेतार्थः । **न्यमाङ्क्षम्** = ब्रुडितोऽभूवम् ।

**साम्मुखीनशिखरिशिखरे** = पुरोवर्तिपर्वतपुरोभागे ।

**पृ० ८१ वज्रेण** = हीरकेण । **अत्रोत्प्रेक्षा** । 'प्रातरन्धकार इव' इत्यादौ **सर्वत्रोपमा** । **प्रकाशि** = प्रकाशवति लब्धसंज्ञे । **हृदये** = मनसि

**पृ० ८३** ॥ विस्फाटितनयने इत्यादि गद्ये **स्वभावोक्तिः** । 'अथ इति सचिन्तं निवेदितवति' इति सम्बन्धः । इतीति किमित्यपेक्षायां माध्यमिकं गद्यं भगवन् इत्यादि । **धुन्यः** = नद्यः ।

**भयानकेति**—भयानकानां = भीतिप्रदानां भल्लूकानाम् ऋक्षाणाम् अम्बूकृतैः सघूत्कारघोणानादैः संकुलानाम् = व्याप्तानाम् । सर्वेषां षष्ठ्यन्तानां बहुवचनानां 'पदे पदे साक्षात्कारसंभवः' इत्यन्वयः ।



**पृ० ८४** ॥ **मुस्तेति**—मुस्ता = कुरुविन्दः तस्य मूलोत्खनने व्यापृताः

टने घुर्घुरायिता घोणा नासिका येषां तेषां घोणिनाम् = शूकराणाम् । 'कुरुविन्दो-मेघनामा मुस्ता मुस्तकमस्त्रियाम्' इति 'वराहः सूकरः—दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि' इत्युभयत्रापि (अमरः)। **पङ्केति**—पङ्कस्य कर्दमस्य **परीवर्त्तेन**—उल्लोलनेन। **उन्मथिताः**—विलोडिताः कासाराः सरांसि यैः तेषां कासाराणाम् = अरण्यमहिषाणाम् । 'लुलायो महिषो वाहद्विषत्कासार-सैरिभाः' इत्यमरः। **नरमांसम्** = मनुष्यमांसम् । **बुभुक्षूणाम्** = खादयि-तुमिच्छूनाम्। **विकटेति**—विकटानां = स्थूलस्थूलानां प्रचुरमांसपेशिवतां कर-टिकटानां गजगण्डानां विपाटने = विदारणे यत् पाटवं = लाघवं झटित्येव विदार-णमित्यर्थः तेन पूरितानि भरितानि संहननानि = अवयवसंस्थानविशेषा येषाम् अनल्पबलिनामित्याशयः एवंभूतानां **सिंहानाम्** = मृगेन्द्राणाम्। 'सिंहो मृगेन्द्रः पञ्चास्य' इत्यमरः। **नासाग्रेति**—नासाग्रे=घोणाग्रे (विद्यमानं) यत् विषाणं शृङ्गं तस्य **शाणनच्छलेन**=तेजनव्याजेन विहितः सम्पादितः गण्डशैलानां खण्डः यैः तेषां **खड्गिनाम्** = गण्डकानाम् । 'गण्डके खड्गखड्गिनौ' इत्यमरः **दोदुल्येति**—दोदुल्यमानाः अतिशयेन पुनः पुनर्वा उत्क्षेप्यमाणाः ये द्विरेफा भ्रमराः तेषां दलेन सङ्घेन पेपीयमानाः = पुनः पुनरास्वाद्यमाना या दानधारा = मदसम्पातः तया धुरन्धराणाम् = अग्रेसराणाम् प्रमत्तानामितित्वाशयः। एव-म्भूतानां **सिन्धुराणाम्** = हस्तिनाम् । 'इभो मतङ्गजो हस्ती—सामजः सिन्धुरः कपिः' इति (वैजयन्ती)। **कृपाकृपणेति**—कृपायां = दयायां कृपणं = शून्यं यत् कृपाणं खड्गः (कृपाकृपणेत्यनेन खड्गस्य तीक्ष्णता व्यज्यते) तेन छिन्नानि कृत्तानि यानि दीनानां कातराणाम् अध्वनीनानां पान्थानां गलानि तेषां तलात् = स्थानात् (शिरोधराया मध्यभागादित्यर्थः) गलन्ती स्खलन्ती पीन-पीवरा = अति स्थूला धारा यस्य तादृशं यत् शोणितं रुधिरं तस्य बिन्दुवृन्दैः= कणगणैः रञ्जितानि रागवन्ति जातानि यानि वारवाणसारसनोष्णीषाणि = कञ्चुक—अधिकाङ्ग—शिरस्त्राणानि तेषां * धारणेन आकलितः सम्प्राप्तः—योऽखर्वः अनल्पः गर्वोऽहङ्कारः तेन बर्बराणां मूर्खाणाम् अथवा तादृशो गर्वो येषां ते च ते बर्बराः बर्बरदेशवासिनः तेषां **लुण्टकनिकराणाम्** = दस्युसंघा-नाम् सर्वथा = सर्वप्रकारेण साक्षात्कारसम्भवः = समागम इत्यर्थः। **अद्धा** =

---

* 'कञ्चुको वारवाणोऽस्त्री—यत्तु मध्ये सकञ्चुकाः बध्नन्ति तत्सारसनम् अधिकाङ्गः—इति अमरः।' 'शिरस्त्राणमथोष्णीषं तनुत्रं मस्तकाञ्च इति (वैज०)'

मार्गः । **दुर्ग्रहाणाम्** = दुष्टानां शन्यादिग्रहाणाम् । जनपदशून्यम् = उज्जट-मित्यर्थः । **प्रान्तरम्** = दूरशून्योऽध्वा ।

पृ० ८५ ॥ **दुःखाकुरुतम्**=आत्मानं दुःखिनं मा विधत्तम् । **सुखप्रियप्र दानुलोम्ये** ' ( ५ । ४ । ६३ ) इति डाच् । **निर्देक्ष्यामि** = वक्ष्यामि । **पीयताम्** = आस्वाद्यताम् । **एलेति**—एला = चन्द्रवाला **गोस्तनी** = द्राक्षा । **केसरम्** = काश्मरिजम् । **शर्करा** = सिता । एतासां सम्पर्कः=मिश्रणं यत्र तच्च तत् । **सुधाविस्पर्द्धि** = अमृततुल्यमित्यर्थः एवम्भूतं महिषीदुग्धम् । **दासाः** = भृत्याः । **समाश्वासयत्** = धैर्यमपादयत् । **अशयिष्वहि** = अस्वाप्स्व । **वितर्कविचारादिसम्पर्कशून्यया** = विविधस्तर्को वितर्कः ऊहा-विशेषः विचारः = वस्तुविवेकः इदंकर्त्तव्यमिदमकर्त्तव्यमितिनिश्चयः आदिना-वृत्त्यन्तराणां कामादीनां ग्रहणम् तेषां सम्पर्केण सम्बन्धेन शून्यया = रहितया गाढ-तरयेत्यर्थः ' निद्रया ' इत्यस्य विशेषणम् । तामुत्प्रेक्षते—**असम्प्रज्ञातेति** । असम्प्रज्ञाताख्यो यः समाधिः तत्सोदरया तत्तुल्यया । असम्प्रज्ञातोऽपि समाधिः वितर्कादिशून्यो भवति । उक्तञ्च 'योगशास्त्रे'—* **वितर्कविचारानन्दास्मि-**

---

* अयमनयोः सूत्रयोः संक्षिप्तोऽर्थः—सम्प्रज्ञायते सम्यक् ज्ञायते येन भाव्यं वस्तु स भावनाविशेषः सम्प्रज्ञातो नाम समाधिः । स च वितर्कादिरूपैश्चतुर्धा भवति । सवितर्कः । सविचारः । सानन्दः । सास्मित इति भेदात् । तत्र—भावनया भाव्यभूतेन्द्रियगोचरसाक्षात्कारः **सवितर्कः** । पञ्चतन्मात्रान्तःकरणगोचर-साक्षात्कारः **सविचारः** । रजस्तमोलेशानुविद्धसत्त्वप्रधानबुद्धिगोचरसाक्षात्कारः **सानन्दः** । शुद्धसत्त्वप्रधानमहत्तत्वगोचरसाक्षात्कारः **सास्मितः** । तत्र वितर्कविचारद्वयी समापत्तिर्ग्राह्यविषया । सानन्दो ग्रहणविषया । सास्मितः ग्रहीतृ-विषया । एवं ग्राह्यग्रहणगृहीतृषु भावनोत्कर्षः सम्प्रज्ञातो योग उच्यते । अयञ्च-समाधिरपरवैराग्यसाध्यः । परवैराग्यसाध्यस्तु असम्प्रज्ञातः तस्येदं लक्षणं विरामेति विरामः = वृत्तीनामुपरमः तस्य प्रत्ययो हेतुभूतो यः प्रयत्नः तस्याशेषवृत्त्युपरमा-र्थीयप्रत्ययस्य अभ्यासः पौनःपुन्येन सम्पादनम् तत्पूर्वः = तज्जन्यः सम्प्रज्ञातादन्यः संस्कारशेषः प्रशान्तसकलवृत्तिकस्य चित्तस्य दुर्लक्ष्यत्वात् संस्काररूपेणावस्थानं सोऽसम्प्रज्ञातः । तदुक्तम्—

**मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः ।**
**असम्प्रज्ञातनामासौ समाधिरभिधीयते ॥ इति ॥**

तानुगमात् सम्प्रज्ञातः' (यो० १। १७) 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' इति च। (यो० समा० १। सू० १७। १८) एवं सम्प्रज्ञातो वितर्कादिविशिष्टः। असम्प्रज्ञातो वितर्कादिविकलः। अयमेव निर्बीजः समाधिरिति चोच्यते।

**पृ० ८६, ८७, ८८, ८९ ॥ शर्वरीतमांसि**=राज्यन्धकाराः। **अम्बरं**=गगनतलम्। **विरावबहुलानि**=कृतबहुचुङ्कृतानि। **वयांसि**=पक्षिणः। **नीडाधानकुटान्**=कुलायवृक्षान्। 'अनोकहः कुटः शाल' इत्यमरः। व्यावर्त्तमानाः=भेदेन ज्ञायमानाः। जातीः=पिप्पलत्व—चूतत्व—जम्बूत्वादि—रूपान् स्वाऽसाधारणधर्मान्। **उत्तरोत्तरतः**=अधिकादप्यधिकम्। **तारतारतरैः**=अत्युच्चैः **रुतैः**=रवैः। **रत्तार्तिम्**=कामपीडाम् **ईरयन्ती**=प्रकटयन्ती अपि **तरुणातित्तिरी**=नवयौवना तित्तरी। वाचस्पतिस्तु—'कपोतलावतित्तिराः' इत्याह। अयं पक्षी एतन्नाम्नैव प्रसिद्धः मांसलोलुपा अस्य बहाखेटं कुर्वन्ति। वृष्यश्चास्य भोजनम्। अत्र **स्वभावोक्तिरलङ्कारः। अनुप्रासश्च।**

**आलोकेति**—आलोकस्य उपाया आलोकेन कृतः सञ्जातः किञ्चिच्छोकस्य मोकः परित्यागो यस्य स तादृशोऽपि कोकः चक्रवाकः। **वराकीम्**=तपस्विनीम् विरहित्वात्। **कोकीम्**=स्वास्त्रियं चक्रवाकीम्। नोपसर्पतीति सम्बन्धः। 'अथ ईदृशीमेव मनोहारिणीं शोभामवलोकयन्तौ मुहूर्त्तमयापयाव' इत्यन्वयः। **मनोहारिणीम्**=हृद्याम्। कथंभूतौ आवाम्—**समीरस्य**—स्पर्शसुखमनुभवन्तौ। कीदृशस्य समीरस्य इत्याह—**कम्पितेति**। काम्पितः दोलितः कुन्दकलापः माध्यवृन्दो येन तस्य। 'माध्यं कुन्दम्' इत्यमरः। पुनः—उन्मीलन्तीनां मालतीनां जातीनाम् यानि मुकुलानि=कलिकाः तेषां मकरन्दो रसः तस्य चौरस्य=अपहर्त्तुः मालतीसौरभभारितस्येत्यर्थः। 'सुमनाः मालती जातिः' इत्यमरः। पुनः—पाटलिपटलं अमोघावृन्दः तस्य परागपुञ्जेन धूलिसमूहेन पिञ्जरितस्य पीतवर्णस्य पुनः— शनैः शनैः=मन्दं मन्दं फरफरायमाणाः=(जातैः) स्वपक्षास्फोटनं कुर्वन्तो ये शुकपिकादयः कीरकोकिलादयः पक्षिणः तेषां पतत्रैः पक्षैः उन्मथ्यमानस्य=उच्छ्रोलितस्य द्विगुणीकृतस्येत्यर्थः। पुनः—पलाशिनां वृक्षाणां पलाशाग्रेषु पत्राग्रभागेषु विलुलतां=विलुठतां तुषाराणां अवश्यायानां या कणिकाः बिन्दवः तासामपहरणेन शीतलस्य शिशिरस्येत्यर्थः। **पौनःपुन्येन**=क्रियासमभिहारेण। **मुहूर्त्तम्**=घटिकाद्वयम्। **अयापयाव**=यापितवन्तौ। अतःकालमतिवाहितवन्तौ।

'तस्मिन्नेव समये—तदाकर्ण्य अमृतोदं नाम सरः समासादितवन्तौ' इति सम्बन्धः । प्रातःकाले पूर्वस्या दिशोऽवस्थां वर्णयति गौडीरीतिमनुसरन् *प्रसन्नगद्येन-षष्ठिसहस्रेति षष्ठिसहस्रं ये वालखिल्याः तदाख्या ऋषयः तेषां यानि काषायवसनानि=कषायेण, रक्तं काषायं '**तेन रक्तं रागात्**' (इत्यण्) काषायाणि च तानि-वसनानि वस्त्राणि धौताङ्गाच्छादीनि तैः विधूतायाम् विधूनितायामुत्कम्पितायामि-**वेत्युत्प्रेक्षा** 'प्राच्याम्' इत्यस्य विशेषणमिदम् । एवमग्रेऽपि । **मन्देहेति**—

मन्देहानां राक्षसविशेषाणां देहस्य शोणितेन = रुधिरेण शोणि-तायामिव रक्तविप्लुतायामिव **इत्युत्प्रेक्षा** । मन्देहा नाम राक्षसाः एषां वृत्तं **विष्णुपुराणे**—

**सन्ध्याकाले तु सम्प्राप्ते रौद्रे परमदारुणे ।**
**मन्देहा राक्षसा घोराः सूर्यमिच्छन्ति खादितुम ॥**
**प्रजापतिकृतः शापस्तेषां मैत्रेय रक्षसाम् ।**
**अक्षयत्वं शरीराणां मरणत्वं दिने दिने ॥**
**ततः सूर्यस्य तैर्युद्धं भवत्यन्तश्च दारुणम ।**
**ततो द्विजोत्तमास्तोयं प्रक्षिपन्ति महामुने !**
**ओङ्कार ब्रह्मसंयुक्तं गायत्र्याऽभिनियन्त्रितम् ।**
**तेन दह्यन्ति ते पापा वज्रीभूतेन वारिणा** ॥ इत्यादि ॥

अरुणः=सूरसूतः तस्य अरुणिम्ना रक्ततया रञ्जितायां कृतरागायामिव । पुनः—मोमुद्यमानाः = अतिहृष्यन्तः नरीनृत्यमानाः=अतिनृत्यन्तः ये परःकोटि-ताम्रचूडाः कोटिसङ्ख्यातोऽप्यधिका कुक्कुटाः तेषां चूडायाः=शिखायाः प्रतिबिम्बेन संवलितायां प्रावृतायामिव । पुनः—पोस्फुटयमानानाम्=अत्यन्तं विकाशभाजां स्वर्गङ्गायाः कोकनदानां=रक्तोत्पलानां पटलैः समूहैः व्याप्तायां छन्नायामिव । 'मोमुद्यमान–नरीनृत्यमान, पोस्फुटयमान' इत्येतानि पदानि यथाक्रमं मुद्, नृत्, स्फुट धातूनां यङन्तानां शानाच्चि साधनीयानि । पुनः—भक्तजनानां भागवतानां भक्त्याः सेवायाः प्रभावेण सामर्थ्येन भाविताः सम्पादितः आविर्भावो यया सा चासौ छिन्नमस्ता (नाम) देवी = महाविद्या तन्त्रशास्त्रप्रसिद्धा तस्याः कन्धराया ग्रीवाया उच्छलता उद्गच्छता शोणितेन रक्तेन स्नातायां धौतायामिव । पुनः—वसन्तोत्सवे = होलिकोत्सवे उच्छालितेन उत्फालितेन सिन्दूरेण योऽन्धकारः

* प्रसादगुणयुक्तगद्येन ।

अन्धकार इव अन्धकारः तेजःप्रावरकत्वसामान्यात् तेनान्धीकृतायामिव । पुनः—तातप्यमानं यत् ताम्रम् तस्य द्युतेः शोभायाः चौरायाम् अपहर्त्र्यामिव तद्वद्रक्तीभूतत्वात्तथोक्तिः ।

'तत्र—तास्ताः शोभाः पश्यन्तौ, मुनीनां दर्शनं कुर्वन्तौ, हनूमन्मन्दिराध्यक्षं प्रणतवन्तौ' इति सम्बन्धः । तथा च विशेषणपदसम्बन्धं व्याख्यायते—**वरटाभिः** = हंसयोषिद्भिः । 'हंसस्य योषिद्वरटा' इत्यमरः । अनुगम्यमानानां **राजहंसानाम्** = कादम्बानाम् ।

**'राजहंसास्तुते चञ्चु चरणैर्लोहितैः सिताः ।**
**मलिनैर्मल्लिकाक्षास्ते धार्त्तराष्ट्राः सितेतरैः ॥** इत्यमरः

**पक्षतीति**—पक्षमूलं पक्षतिः 'पक्षात्तिः' ( ५ । २ । २५ ) इति मूले तिप्रत्ययः । कण्डूत्या ( हेतुभूतया ) कषणेन घर्षणेन चञ्चलश्चपलः चञ्चुपुटः त्रोटिर्येषाम् एवंभूतानां मल्लिकाक्षाणाम् = हंसविशेषाणाम् । लक्ष्मणायाः सारस्याः 'सारसस्य तु लक्ष्मणा' इत्यमरः । कण्ठस्य स्पर्शेन यो हर्षवर्षः आनन्दवृष्टिरित्यर्थः तेन प्रफुल्लानि अङ्कुरुहाणि लोमानि येषां तेषां सारसानाम् । भ्रमताम् इतस्ततः ( पुष्पात् पुष्पम् ) सञ्चरतां भ्रमराणां द्विरेफानां झङ्कारभारेण समधिकझङ्काररवेण विद्राविता उत्सारिता निद्रा येषां तेषां कारण्डवानां तास्ताः शोभाः पश्यन्तौ ।

गङ्गातट एव **पम्फुल्यमानानाम्** = विशारारूणाम् । विशरणार्थकात् ञिफला धातोर्यङन्तात् शानचि रूपमिदम् । मकरन्दतुन्दिलानाम् = पुष्परसभरितानाम् प्रचुरमधुमतामित्यर्थः । एवंभूतानाम् **इन्दीवराणाम्** = कमलानां समीपत एव कलितानि=व्याप्तानि ललिततिलकेन मनोहरतिलकेन अलिकानि मस्तकानि येषां तेषाम् **व्यधिष्वहि** = अकृष्वहि । **सैन्धवौ** = अश्वौ । **समारुढव** = आरोहणमकार्ष्व । **अभाषिष्ट** = अकथयत् ।

**पृ० ६० ॥ निदिद्रासद्भिः** = निद्रातुमिच्छद्भिः । सन्नन्तात् 'निद्रा' धातोः शतरि रूपम् । कुटीरेष्वेव निद्रा **द्राघणीया**=दीर्घीकर्त्तव्या यायनीयेत्यर्थः । **दिनकतिपयैः**=कतिपयैः दिनैरित्यर्थः '**पोटायुवतिस्तोककतिपय**'—इति सूत्रेण कतिपयशब्दस्य परनिपातः । **चिञ्चावृक्षस्य** = तिन्तिडीतरोः । **आजानेयौ** = अश्वौ । **निकटस्थपूगतरुशाखायाम्** = समीपवर्त्तिक्रमकवृक्षशाखायाम् । जलम **गाहिष्वहि** = अस्नासिष्व ।

**पृ० ६१ ॥** तावदकस्मात् दृष्टं यत्—कश्चित् श्यामो युवा आयातीति सम्बन्धः । **निविवृत्सन्तम्** = निवर्त्तितुमिच्छन्तम् ।



*** इति (सूक्ष्म) शिवराजविजयपताकायां तृतीयो निश्वासः ***

॥ ॐ ॥

# चतुर्थो निश्वासः।

विजयन्ते महासत्त्वा विपदोऽभिभवन्त्यपि।
लभन्ते परमां सिद्धिं कार्याकार्यविचक्षणाः ॥ १ ॥

पृ० ६३ ॥ गौरवङ्गनाम्ना बहिःप्रसिद्धस्य महासत्त्वशालिनो **रघुवीरस्य** शिवाज्ञां धारयित्वा तोरणदुर्गं प्रति प्रस्थानोपक्षेपकं स्फुटं श्लोकमुद्धरति—**'कार्यम्'** इति।

**वर्षन्तौ** सायंसमयवर्णनमिदम्—'मासोऽयमाषाढ' इत्यादिना। **अस्तं** * **जिगमिषुः** = अस्तमितो बुभूषुः रित्यर्थः। **भास्करः** = सूर्यः। **सिन्दूरेति**। सिन्दूरस्य = नागोद्भवस्य। 'नागोद्भवन्तु सिन्दूरम्' इति (वैजयन्ती) द्रवेण = रसेन स्नातानां=धौतानामिव **वरुणदिगवलम्बिनाम्** = पश्चिमायामेव दिशि लम्बमानानाम् **अरुणवारिवाहानाम्** = रक्तमेघानाम्। 'भास्करो अभ्यन्तरं प्रविष्ट' इत्यन्वयः। अत्र सूर्यकिरणसम्बन्धे सति रक्तीभवनस्वभावानां मेघानां सिन्दूरद्रवस्नातत्वेन रूपेणोत्प्रेक्षणम्। **कलविङ्काः** = चटकाः। **चाटकैररुतैः** = चटकापोतचुङ्कारैः। **चटकाया ऐरक्** (४।१।१२८) इति सूत्रेण चटकाशब्दादपत्येऽर्थे ऐरक्। चटकाया अपत्यं चाटकैरः।

"चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः।
पुमपत्ये चाटकैरस्त्र्यपत्ये चटकैव सा" ॥

इत्यमरः।

† **नीडेषु** = कुलायेषु। **प्रतिनिवर्त्तन्ते** = प्रत्यावृत्य प्रविशन्ति **कलयन्ति** = प्राप्नुवन्ति। **मेघमाला** = वारिदराजिः। **पर्वतश्रेणीव** = महीधरपङ्क्तिरिवेत्युपमा 'मेघमाला गगनतले पर्यच्छदीत्' इत्यन्वयः। तां

---

* सनन्ताद् 'गम्' धातोः—**'सनाशंसभिक्ष उः'** (३।२।१६८) इत्युप्रत्ययः।

† 'कुलायो नीडमस्त्रियाम्' इति (अमरः) 'नीडं स्थानकुलाययोः' इति (मेदिनी) कुलं पक्षिसङ्घातोऽयते अत्र। अय गतौ। **'हलश्च'** (३।३।१२१) इति सूत्रेण घञ्। एमम्—नितरामीड्यते इति नीडम्। भावे घञ्।

विशिनष्टि—'सूक्ष्मविस्तारा' इत्यादिना । **प्रकटेति**—प्रकटितं शिखरिशिखराणां =पर्वताग्रभागानां विडम्बनं=सादृश्यं यया सा तथाभूता । **दर्शितेति**—दर्शित = उद्भावितः दीर्घेण = लम्बेन शुण्डादण्डेन दण्डाकारेण करेणेत्यर्थः मण्डितस्य भूषितस्य ( सज्जितस्येति यावत् ) दिगन्त * दन्तावलस्य = दिग्गजस्य भयानकः= भीतिप्रदः आकारः मूर्त्तिर्यया सा । वर्षर्त्तौ मेघाः नानावस्तूनामाकारेण प्रतिभासमानाः कदाचित् महागजाकारेणापि प्रतिभासन्ते । '**ततः**' इति । पारस्परिकसंश्लेषेण=अन्योन्यासक्त्या विहितः कृतः महान्धकारः सन्तमसं यया । '**पर्वतश्रेणी** रुपर्युपरि गच्छति स्म' इति । '**उपर्यध्यधसः सामीप्ये**' ( ८ । १ । ७ ) इति सूत्रेण द्वित्वम् । 'उभसर्वतसोः कार्याधिगुपर्यादिपु त्रिपु'—इत्युक्तेः उपरियोगे द्वितीया ।

**पृ० ६३, ६४** ॥ 'एष तोरणदुर्गं प्रयाति' इति कर्तृक्रियासम्बधः । **सुघटितदृढशरीरः**=सु=शोभनं घटितं सम्पन्नं दृढं शरीरं यस्य सः संहननाङ्ग इत्यर्थः । पुनः कीदृशः—**कचकलापैः**=कचनिचयैः कमनीया=मनोहरा कपोलपालिः=गण्डस्थलं यस्य सः तादृशः । कीदृशैः कचकलापैः—**श्यामश्यामैः**= अतिश्यामैः । **गुच्छगुच्छैः**=अत्यन्तं गुलुञ्छितैः । **कुञ्चितकुञ्चितैः**= अत्यन्तवक्रैः । पुनस्तमेव गौरं युवानं विशिनष्टि—'**दूरागमने**' त्यादिसन्दर्भेण—दूरागमनश्रमकारणेनेत्यर्थः **सूक्ष्ममौक्तिकपटलेन इव**=अणुमुक्ताप्रसरेणेवेत्युत्प्रेक्षा । **स्वेदबिन्दुव्रजेन**=स्वेदो घर्मः तस्य बिन्दूनां कणानां व्रजेन गणेन ( 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः ) आच्छादिताः व्याप्ताः ललाट—कपोल—नासाग्रोत्तरोष्ठाः यस्य सः । पुनः—प्रसन्नेन—विकासितेन वदनाम्भोजेन=मुखकमलेन प्रदर्शितः प्रकटीकृतः दृढः सिद्धान्तमहोत्साहः=कर्त्तव्यपरायणतामहाहर्षो येन स तथाविधः । पुनः—राजतसूत्रशिल्पेन रजतस्येदं राजतं यत् सूत्रं 'कनारी' इत्याख्यम् अर्थात् रौप्यसूत्रविकारेण कृतं बहुलं प्रचुरं चाकचक्यं= प्रतिभासना यस्य तादृशं वक्रम् = अनृजु हरितं=हरिद्वर्णं यत् उष्णीषं=शिरोवेष्टनं तेन शोभितः । हरितेनैव च कञ्चुकेन = चोलकेन प्रकटीकृतं व्यूढं शृङ्खलाबद्धं गूढं रहस्यभूतं चरतायाः स्पशतायाः गूढदूतभावस्य कार्यं येन सः तथाविधः ।

---

* '**दन्तशिखात्सञ्ज्ञायाम्**' ( ५ । २ । ११२ ) इति सूत्रेण मतुबर्थे 'दन्त' शब्दात् वलच् प्रत्ययः । 'वले' ( ६ । ३ । ११८ ) इत्यनेन दीर्घः । 'दन्ती दन्तावलोहस्ती'—इत्यमरः ।

चरतैव वा कार्यमिति **रूपकम्**। चरः = स्पशः। 'यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः। चारश्च गूढपुरुषश्च' इति (अमरः)। चरस्य भावः चरता। '**तस्य भावस्त्वतलौ**' (५।१।११९) इति सूत्रेण भावे तल्। 'तलन्तं स्त्रियाम्' इति स्त्रीत्वम्। अत्र गद्ये—**उदारता**लक्षणो गुणः। तदुक्तम्—'श्लाघ्यैर्विशेषणैर्युक्त मुदारं कैश्चिदिष्यते' इति। अयमेव परेषां 'परिकरालङ्कार' **इत्येके**।

**झञ्झावातः** = वार्षिको महावातः। **अनुद्वेदिनी** = सरला। **हयस्य** = अश्वस्य। **खुराः** = शफानि। 'शफं क्लीबे खुरः पुमान्' इति (अमरः)। **चिक्कणपाषाणखण्डेषु** = स्निग्धाश्मशकलेषु। **प्रस्खलन्ति** = प्रच्यवन्ति। **दोधूयमानाः** = अत्यन्तं वायुना सञ्चाल्यमानाः। **सम्मुखं** = पुरोभागम्। **आघ्नन्ति** = ताडयन्ति। '**आङो यमहनः**' (१।३।२२) इत्यनेन नात्रात्मनेपदं शङ्क्यम्। अकर्मकात्स्वाङ्गकर्मकादित्येव तद्विधानात्। **दृढ-सङ्कल्पः** = महासत्त्वः। **सादी** = अश्वारोहः। 'अश्वारोहास्तु सादिनः' इति (अमरः)। **न विरमति** = हतोत्साहो न भवतीत्यर्थः। **व्याङ्परिभ्यो रमः** (१।३।८३) इति सूत्रेण परस्मैपदम्।

**पृ० ६५॥ वाताघाते**ति। वाताघातेन सञ्जातः पाषाणपातो येषाम् तेषां **प्रपातानाम्** = पर्वतानाम्। 'प्रपातस्त्वतटो भृगुः' इति (अमरः)। **सत्त्वानाम्** = ऋक्षादीनाम्। **स्वनेन कवलीकृतमिव** = शब्देन निगलित-मिव **गगनतलम्** = अकाशमण्डलम्। सिंहादीनां शब्देनाकाशं सङ्कुलमासी-दित्यर्थः। अत्राकाशे शब्दव्याप्तिः स्वतःसिद्धापि कवलीकरणत्वेन रूपणो**त्प्रेक्षिता**।

**सैन्धवस्य** = अश्वस्य। **तावदिति—चञ्चलाभिः** = तडिद्भिरपि स्वचमत्कार आरब्ध' इत्यन्वयः। 'तडित् सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यमरः। कीदृशीभिः—चञ्चच्चञ्चलं=उद्भटचाकचक्यं यत् चामीकरं = सुवर्णं तस्य रेखाणामिवाकारो यासां ताभिः। भास्वरसुवर्णलेखासदृशीभिरित्यर्थः। **अत्र** चकारच्चकारादीनामदूरवर्त्तिनां व्यञ्जनवर्णानां सादृश्यप्रतीतिर**नुप्रासो** नाम अलङ्कारः। आह च **मम्मटाचार्यः**—'वर्णसाम्यमनुप्रासः' इति। मेघान् **सौवर्णकषयेव** = हैरण्यशाणेनेवेत्युत्प्रे**क्षा**। **ज्वालाजालेन** = वह्निकीला-समुदायेनेव। **बलाहकान्** = मेघान्। **आवृणोति** = आच्छादयति। **पर्यपूर्यत** = परिपूर्णा अक्रियत। सा **अरण्यानी** = महत् अरण्यम् अरण्यानी **हिमारण्ययोर्महत्त्वे** (४।१।४९) इति वार्त्तिकेन आनुक्

अत्र—एकेनैव शब्देन तथाविधार्थप्रतिपत्तेः सम्भवात् पुनः पुनस्तेनैव शब्देन तदर्थप्रतिपादनात्मा पुनरुक्तोऽर्थदोषः स्यादिति न शङ्क्यम् प्रकरणे पुनस्तस्यैव वाक्यस्यावृत्तेः अर्थस्यौजस्त्वविधानेन दोषाङ्कुशवत्त्वादित्याहुः ।

पृ० ६६ ॥ **समपीपतत्** = पातयामास । सम्पूर्वात् 'पत' धातोः णिचि लुङि, च्लेश्चङि, द्वित्वे, अभ्यासकार्ये, सन्वद्भावे, **दीर्घो लघोः** (७।४।९४) इति लघोरभ्यासस्य दीर्घे रूपम् । 'अश्वश्च समीहां समसूसुचत्' इति प्रेरणान्वयः । **फेनान्** = डिण्डीरान् । **कन्धराम्** = शिरोधराम् । **उद्धूनयन्** = कम्पयन् । **हेषारवैः** = अश्वजातीयैः हिन्हिनाशब्दैः । **प्रस्यन्देति** = प्रस्यन्दजलेन प्रस्वेदवारिणः सिक्तः आर्द्रतां नीतः भूभागो येन सः । **समुत्सृष्टपुरीषः** = समुत्सृष्टं त्यक्तं पुरीषं गूथं येन, लण्डं विसृजन् इत्यर्थः । **मुहूर्त्तार्धेनैव** = घटिकाद्वयार्धेनैव एकयैव घटिकयेत्यर्थः विस्मृतः परिश्रमो ग्लानिर्येन सः । **सगतिस्तम्भम्** = सगतिरोधम् । **खुराग्रैः** = शफकोटिभिः । **भूमिम्** = पृथिवीम् । **उत्खनन्** = उत्पाटयन् । **अश्वजाति**रियम् । **उत्तम्भयन्** । उत्तंसयन् । **लाङ्गूलम्** = पुच्छम् । **लोलयन्** = चालयन् ।

पृ० ६७ ॥ **सौदामिनी** = विद्युत् । **समदेदीप्यत** = अत्यन्तं चमदकरोत् । **स्थिरयति** = स्थिरं करोति । **तत्करोति तदाचष्टे** इति णिच् । **पूगस्थूलैः** = क्रमुकफलवत् स्थूलाकारैः । **मघवा** = इन्द्रः मेघ इत्यर्थः । **परम्** इति । **मारुतेन** = पवनात्मजेन हनूमता । अस्मिन् वाक्ये—पूर्णोपमाऽलङ्कारः । * उपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् । **वाहोऽयम्** = रघुवीरघोटकः । **शिलातलानि** = पाषाणचट्टकानि । **लताप्रतानानि** = वल्लीविस्तृतीः । **अलोक्यत** = अदृश्यत । **तोरणदुर्गदीपः** = तोरणनामा दुर्गः, तस्य दीपः । 'परीक्ष्य' इव **इत्युत्प्रेक्षा** । **प्रशशाम** = शान्ता बभूव । 'अम्लबलेन दुग्धमिव' **इत्युपमा** । **पूर्वस्याम्** = दिशि **कलानाथः** = चन्द्रः । **ददृशे** = दृष्टः कर्मणि तङ् । 'क्षणेनैव झञ्झावातोत्पातोऽपि निर्जगाम' इति सम्बन्धः । 'पार्वतनदीवेग इव' **इत्युपमा** ॥ 'ततः पलाशिनां शोभा समवालोक्यत' इति परत्राभिसम्बन्धः । सा कीदृशी—**लोचनरोचिका** नेत्रयोरासेचनकरी । कीदृशां पलाशिनाम्—**नूतनेति**—नूतनाऽभिनवा या वारि

---

* अत्र मारुतिरूपमानम् । शिववीरचरः = रघुवीरः उपमेयः । कार्यहानं सहनं समानो धर्मः । इवशब्दो वाचकः ।

धारा = पानीयासारपातः तया क्षालनेन शोधनेन प्रकटितं परमम् = अत्यधिकं हारित्यं = हरितभावो यैः । 'हारित्यम्' इत्यत्र **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (५।१।१२४) इति भावे ष्यञ् । पलाशिनां हारित्यमुत्प्रेक्षते— **परःकोटी**ति—परःकोटि = कोटिसंख्यातीतं यत् कीराणां शुकानां पटलं समुदायः तेन परीतानां व्याप्तानामिव ।

**पृ० ६८ ॥ सादी** = अश्वारोही स एव गौरः । **चञ्चच्चन्दचमत्कारेण** = भासमानचन्द्रचन्द्रिकया । **झिल्लीति**—झिल्ल्या झिल्लिकाया रवेण टीं टीं इत्यनारतशब्देन मिश्रितं द्विगुणितं कवचस्य तनुत्राणस्य शिञ्जितं यस्य सः । 'भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः' इति (अमरः) । 'भूषणानान्तु शिञ्जितम्' इति यद्यपि, तथापि शूराणां कवचस्यापि भूषणत्वाददोषः । **वार्षेति**—वार्षेण = वृष्टिभवेन वारिव्रजेन जलधारया विधूतः विगतः स्वेदबिन्दूनां सन्दोहो यस्य सः । **साध्विति**—साधुवादेन सचुचुत्कारप्रियालापेन सम्यक् वर्धितः हेषमाणस्य हिनहिनायमाणस्य हयस्य वाजिन उत्साहो येन स तथाभूतः । **तोरणेति** = तोरणाख्यदुर्गस्य यामिकानां प्रहरिणां पादचारैः यातायातैः परिमर्दितायां भुवि समाजगामेति सम्बन्धः ।

'अश्वम्' इति । **उन्मुच्य** = परित्यज्य । **परःसहस्रेति**—परःसहस्रपतगानां सहस्रसङ्ख्यामप्यतीत्य वर्तमानानां पक्षिणां पटलस्य समूहस्य कलकलेन मधुररवेण उन्निद्रस्य सुदूरं वितताः काण्डाः प्रकाण्डाश्च यस्य तस्य **पनसवृक्षस्य**=कण्टकिफलस्य कटहरेतिख्यातस्य, शाखायामाबध्य । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः इति (अमरः) ।

**पृ० ६६ ॥** 'चुम्बितयौवनाम्' इति । या चुम्बितयौवना सा कथं न त्यक्तबालभावा=परिहृतबालिशभावा स्यादिति **विरोधः** । परिहारस्तु—यौवनारम्भे वर्तमानामपि बाल्यावस्थायामधिकपक्षपाताम् नतु मूर्खतोपेताम् । **मधुराम्** = हृद्याम् । **आकृतिम्** = देहम् । **अलिपटलेति**—भ्रमरसमूहतिरस्कारकारिणः अतिकृष्णानित्यर्थः। कुञ्चितकचगुच्छान् = कुञ्चितान् गुच्छाकारान् मूर्धजान् । उत्पत्स्यमानैःकेशाङ्कुरैः श्मश्र्वङ्कुरैः खिन्नः उत्स्फुटितः उत्तरोष्ठो यस्य सः । 'उत्तरोष्ठ' इत्यत्र **ओत्वोष्ठयोः समासे वा** इति वार्त्तिकेन वृद्धिविकल्पः । **अतीति**—अतिमसृणस्य स्निग्धतरस्य कमलस्य उदरे मध्ये यत् किसलयं पत्रं तस्य सोदरौ तुल्यौ कपोलौ गण्डौ यस्य तम् । **आर्थीयसुपमा** ।

**पृ० १०० ॥ भद्रतयेव** स्नातं शरीरम्—शान्ततया स्नातं व्याप्तमिवेत्युत्प्रेक्षा । ' मशकैरप्यशङ्कनीयम् ' इत्यारभ्य ' गुप्ततमं वृत्तान्तम् ' इत्यन्ते गद्ये **पर्यायोक्त**मलङ्कारः । आह च ' दण्डी '—

**इष्टमर्थमनाख्याय साक्षात्तस्यैव सिद्धये ।**
**यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते ॥** इति

अत्रेष्टो वृत्तान्तस्य गोप्यतमत्वरूपोऽर्थः तमनाख्याय साक्षादभिधया अप्रतिपाद्य व्यञ्जनात्मकव्यापारेण तस्यैव ' मशकैरप्यशङ्कनीयम् ' इत्यादिपदैः प्रकारान्तरेणाख्यानं कृतम् ।

**उपबर्हलग्नपृष्ठः** = उपधानाधारितपृष्ठभागः ' उपधानन्तूपबर्हम् ' इत्यमरः । **तत्रभवतः** = पूज्यस्य महाराष्ट्रराजस्येत्यर्थः । **वात्या** = वायुचक्रम् **विधूय** = धूनयित्वा । ' वात्याम् ' इति पाठं सम्यञ्चं प्रपद्ये । अत्र **जयदेव**मतेन **लोकोक्त्य**लङ्कारः । लक्षणमुक्तं प्राक् । यथा ' सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ' इत्यत्र ' लोचने मीलयित्वा ' इति लोकप्रवादानुकरणम् तथा ' वात्या विधूय ' इत्यत्रापीति ज्ञेयम् । **कर्णेजपस्य** = सूचकस्य । **स्तम्बकर्णयोरमिजपोः** ( ३ । २ । १३ ) इत्यच् प्रत्ययः । **' तत्पुरुषे कृतिबहुलम् '** ( ६ । ३ । १४ ) इति सप्तम्या अलुक् । **दुर्गाधीशः** = दुर्गरक्षायै अधिकृतः स्वामी । दुःखेन गम्यते अत्र इति दुर्गम् । दुर्गलक्षणं पुराणादौ । तथाहि—

**दुर्गांस्तु सततं कुर्यात् प्राकाराट्टालतोरणैः ।**
**भूषितान्नगराद्राजा दुर्गे दुर्गां श्रियं चरेत् ॥** इति

**पृ० १०२ ॥ साम्मुखीने** = पुरोवर्त्तिनि सम्मुखे भवे । भवार्थे ईन प्रत्यय इति **चान्द्राः** सारस्वताश्च । णीन इति **मौग्धाः** । **किञ्चिदुदञ्चति** = किञ्चिदुदिते । मरीचिमालिनि = सूर्ये । अत्रागत्य = प्रातःकाले समेत्येत्यर्थः । **यातासि** = गन्तासि । ' या ' धातोः—**अनद्यतने लुट्** ( ३ । ३ । १५ ) मध्यमैकवचने रूपम् । **अपरदासेरकेण** = द्वितीयेन भृत्येन । ' भृत्ये दासेरदासेयदासगोप्यकचेटकाः ' इत्यमरः । **व्यादिष्टमार्गः** = परिचायितवर्त्मा । **नववारिदेति**—नवानां नूतनानां वारिदानां मेघानां यो वारिबिंदुवृन्दः = जलकणगणः तस्य सम्पर्केण प्रकटितः प्रादुर्भूतः सिन्धुराणां

मधुरः हृद्यो गन्धो यस्याः ताम् इति भूमिविशेषणम् । 'गन्धस्येत्त्वे तदेकान्त ग्रहणम्' (वा० ५ । ४ । १३५) इति वार्त्तिकेन बहुव्रीहाविक्त्वम् । **रजनीकर-निकर-विरोचिताम्** = चन्द्रकिरणव्रातशोभिताम् भूमिमालोकयन् **मन्दंमन्दम्** = शनैः शनैः । **मारुतिमन्दिरम्**=हनूमन्मन्दिरम् । **आससाद**=प्राप । **तत्र**= मारुतिमन्दिरे । **आगन्तुकानाम्**=प्राघुणिकानाम् । **कलितयथोचित-सामग्रीणाम्**=कलिता सम्पादिता यथोचितम्=यथायोग्यं सामग्री आस्तरणप-ल्यङ्काद्युपकरणं यत्र तेषाम् 'कोष्ठानाम्' इत्यस्य विशेषणम् । 'कोष्ठम्'= सम्प्रति 'कमरा' इति प्रसिद्धो भवनविशेषः । **गवाक्षान्**=वातायनानि उन्मुच्य =* खोलयित्वा **नागदन्तिकासु**=कीलिकासु । **वर्मवस्त्राणि** = कवचादीनि । **अवलम्ब्य** = लम्बयित्वा अन्तर्भावितण्यर्थः । **उत्तोल्य** = उद्धृत्य । **प्रक्षाल्य** = धावयित्वा । **उपगृह्य** = उपभुज्य । **दुर्गप्राचीरम्** = दुर्गकोटम् । **सुदूरेति**—सुदूरं पर्यटन्तो ये यामिकाः=प्रहरिणः तेषां यातायातं गमागमम् । **नतोन्नतभूभागान्**=उच्चावचान् पृथिव्याः प्रदेशान् । **अभ्रंक-षान्**=अत्युच्चानित्यर्थः । **सर्वकूलाभ्रकरीषेषु कषः**=(३ । २ । ४२) इति खच् । **अवलोकयन्**=पश्यन् । **परिक्रमेति**—परिक्रमापराणां परिक्रमण-कराणां पादानाम् आहतिभिः=आघातैः पिच्छला मृदुला याः पाषाणपट्टिकाः ताभिः परिष्कृता सुसज्जिता या वेदिका तर्दिका तस्याम् । किञ्चित् समयम् **अति-वाहयामास**=गमयाम्बभूवेत्यर्थः ।

पृ० १०३ ॥ **तावदिति**—'तावत् तेन स्वरालापाः समश्रूयन्त' इत्यन्वयः । **पयःफेनेति**—पयःफेनस्य दुग्धडिण्डीरस्य य आसारः धारासम्पातः तस्य छविः शोभा तस्याः विजित्वरया=जयशीलया । **ज्योत्स्नया**= चन्द्रिकया । द्विगुणितोत्साहेन प्रवर्धितहर्षेण । **धीरसमीरेति**—धीरसमीरस्य= मन्दमरुतः स्पर्शेन शान्तो दूरीभूतः श्रमो यस्य तेन प्रस्फुटन्त्यो विकासोन्मुखाः याः चन्द्रकलया अर्थात् चन्द्रिकया कलिकाः = कैरवकोरकाः तासु ये भ्रमराः = मधुलिहः तेषां झङ्कारभार इव गुञ्जनरव इव यो मन्द्रः स्वरः एव पीयूषममृतं तस्य शीकरैः जलकणैः परिमार्जिते = शोधिते श्रवणे अर्थात् आप्यायितौ कर्णौ यस्य सः तेन । कीदृशः स्वरालापाः इत्याह—'शुकीर्मूकयन्तः' इत्यादि । एतेन स्वरालापानामत्यद्भुतत्वं शुक्यादिस्वरव्यतिरेकश्च व्यज्येत । **काकलीकल-**

---

* **खोलृ** गतिप्रतिघाते । अनेकार्था धातव इति दर्शनम् ।

**मया:** = 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुराऽस्फुटे' इत्यमरवचनात् सूक्ष्मा माधुर्यमयाश्चेत्यर्थः। **श्रवणेनेति**। कस्या अपि बालिकाया: = अनुद्भिन्नयौवनाया: वस्तुतः उद्भेदोन्मुखीनयौवनाया: अन्यथा तादृशालापरवशतानुपपत्तेः। सा च **लज्जापरवशेति**। तत्र हेतुमाह—'यतो नोच्चैर्गायति' इति। मन्द्रस्वरेण गायतीत्यर्थः। इयञ्च बाल्ययौवनयोः सन्धाविव वर्त्तमानेत्याभाति अग्रे (१०४ पृष्ठे) 'वयसा एकादशमिव वर्षं स्पृशन्ती' इत्युक्तेः तेनेयं नायिका—'**कन्यात्वजातोपयमा सलज्जा नवयौवना**' इति कन्यालक्षणं प्रायः स्पृशतीवेति ममाभाति।

'**अथ** कर्णाविव गृहीत्वा आकृष्टो रघुवीरसिंहः' इति। 'कर्णाविवे' त्यत्र '**लोकोक्ति**' रलङ्कारः। लक्षणमुक्तं प्राक्। '**मन्दिरं** दक्षिणा प्रदक्षिणीकृत्य'=इति। दक्षिणतः मन्दिरस्य प्रदक्षिणां कृत्वेत्यर्थः। '**दक्षिणादाच्**' (५।३।३६) दक्षिणशब्दादाच् स्यात्—अस्तातेर्विषये। अस्तातिविषयश्च—**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** (५।३।२७) इति सूत्रोक्तः। **कपोतेति**—कपोतपोतकानां पारावतशावकानां गुञ्जारेण तज्जातिरवेण मधुराया मनोहराया: कपोतपालिकाया:=विटङ्कस्य अधस्तम्भारम्भनिकटे=अधोवर्त्तिनि स्तम्भप्रदेशसमीपे। 'पारावतः कलरवः कपोत' इति 'कपोतपालिकाङ्कायान्तु विटङ्कं पुन्नपुंसकम्' इति चोभयत्रा**मरः**। **समुपतस्थे**=स्थितोऽभूत्। **समवप्रविभ्यः स्थः** (१।३।२२) इत्यात्मनेपदम्। **अवालोकयत्** = ददर्श। पूर्वस्याम् = दिशि। **पुष्पवाटिका** = गृहोपवनम् **अतिमुक्तलता:** = वासन्तीवल्ल्यः। **सौरभेण** = सौगन्ध्येन। **विष्णुपदम्** आकाशमपि। **मदयन्ति** = सुरभयन्ति। 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता' 'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' इति चोभयत्रापि (अमरः)। **यूथिका:** = मागधीलताः 'अथ मागधी। गणिका यूथिकाऽम्बष्ठा' इत्यमरः। **सुगन्धतरङ्गैः** = सौरभलहरीभिः प्रसरत्सौरभभैररित्यर्थः। **हरिताम्** = दिशाम्। **हृदयम्** = प्रदेशानित्यत्र तात्पर्यम्। **हरन्ति** = वशीकुर्वन्ति। **पाटलिपटलानि** = *झाटलझटाः।

पृ० १०४॥ **अलिपटलरसना:**=भ्रमरव्रातरसनाः **चटुलयन्ति**= चपलयन्ति। एतेन तत्र भ्रमरसङ्घस्य महती आसक्तिः व्यज्यते। **मालतिका:**=

---

*लोध्रविशेषसमूहाः। 'गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ' इति(अमरः)

सुमनसः । **मरन्दविन्दुसन्दोहैः**=मकरन्दकणगणैः **वसुमतीम्** = भूमिम् । **वासयन्ति** = सुरभयन्ति । **तस्याम्** इति । 'तस्यां = पुष्पवाटिकायां हंसपक्षवलक्षच्छविविजित्विरधवलग्राववेदिका एका अस्ति' इत्यन्वयः । **परमेति** परमरमणीयायाः अतिमात्रं हृदयहारिण्याः ज्योत्स्नायाः चन्द्रिकायाः स्पर्शेन = सम्पर्केण प्रकटितं द्विगुणतरं चाकचक्यं = द्युतिविशेषो यया सा ।

**हंसेति**—हंसपक्षाणां कादम्बपक्षाणां वलक्षा = धवला या छविः शोभा तस्या विजित्विराः जयशीलाः धवलाः शुभ्राः ग्रावाणः पाषाणाः तेषां वेदिका = परिष्कृता भूमिः । 'तेषामन्यतस्मिन् उपविष्टा एका **बालिका** इति । अस्या एव नायिकात्वम् । एतद्विषये पुरातनटिप्पणे किञ्चिदुक्तं तदेव द्रष्टव्यम् । अस्माभिस्तु ग्रन्थगौरवं मत्वा न बहु तन्यते दिङ्मात्रन्तूक्तं प्रागेव । तां वर्णयति 'सेयम्' इत्यादिना । 'वर्णेन सुवर्णं तिरस्कुर्वती' इत्येवं सर्वत्र योज्यम् । अत्र—**प्रतीपालङ्कारो** व्यङ्ग्यः । तदीयवर्णादिना सुवर्णादीनामुपमानानामनादरता प्रत्यायनात् । प्रतीपविशेपलक्षणमाह **जयदेवः**—'वर्ण्योपमेयलाभेन तथाऽन्यस्याप्यनादर' इति । अयं प्रतीप एव दण्डिमते **विपर्यासोपमा** । यत उक्तं तत्रैव—

**तवाननमिवोन्निद्रमरविन्दमभूदिति ।**
**सा प्रसिद्धेर्विपर्यासात् विपर्यासोपमा मता ॥**

**श्यामेति**—श्यामञ्च तत् * कौशेयवस्त्रं पट्टवासः तत् परिधानं यस्याः परिहितकृष्णपट्टवसनेत्यर्थः ।

**पृ० १०५ ॥ श्वेतविन्दुसन्दोहेति**—श्वेतविन्दूनां सन्दोहैः व्रातैः सङ्कुलस्य = व्याप्तस्य रक्ताम्बरस्य लोहितवाससः कन्चुकिका = चोलिका यस्याः सा । कण्ठे **एकयष्टिकाम्** = एकावलीम् एकलतिकामिति यावत् । एवम्भूतां **नक्षत्रमालाम्** = सप्तविंशतिमौक्तिकवतीम् । ( एकावल्येकयष्टिका, सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः ) **बिभ्रती** = धारयन्ती । '**उगितश्च**' ( ४ । १ । ६ ) इति ङीप् । नुम् तु न '**नाभ्यस्ताच्छतुः**' ( ७ । १ । ७८ ) इति तन्निषेधात् । **सिन्दूरेति**—सिन्दूरस्य = नागसम्भवस्य या चर्चा = ( धम्मिल्लस्य सीमन्तप्रदेशे ) छुरणम् तया रहितेन शून्येन धम्मिल्लेन = केशवेशेन परिशिष्टं **पाणिपीडनम्** = विवाहसंस्कारम् इति = एव प्रकटयन्ती । 'सिन्दूरं नागसम्भवम्' 'धम्मिल्लाः संयताः कचाः' इति चोभयत्र (अमरः) । **हस्ते** = पाणौ । **पाटलिकुसुमस्तबकम्**=पाटलापुष्पगुलुच्छम् । **अविदितेति**—



* '**कोशाड्ढञ्**' ( ४ । ३ । ४२ ) इति ढञ् ।

न विदितं न ज्ञातं बहुलं प्रायः तानतारतम्यं = † तानानां तरतमभावो यस्यां क्रियायां तद् यथा स्यात् तथेति क्रियाविशेषणम् । **यद्यपीति** = 'सरस्वतीसरूपया' = सरस्वतीसदृशया । अज्ञातं अननुभूतं तातोत्सङ्गे पितुरङ्के शयनातिरिक्तं सांसारिकसुखं भोगविलासादि यया तया । कदापि = कदाचिदपीत्यर्थः **गायितुम्** तानालयादि गानं कर्त्तुं न शिक्षितमिति सम्बन्धः । गायकानां तास्ताः गीतिशास्त्रोक्ताः **कर्णरसायनमूर्च्छनाः** = कर्णयोः: श्रोत्रयोः रसायनाः = आनन्दजनिका मूर्च्छनाः स्वरालापविशेषाः **कर्णातिथीकृताः** = श्रोत्रगोचरीकृताः । **समाधि**र्नामगुणः । तल्लक्षणमुक्तं **दण्डिना**—

> **अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।**
> **सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥**

अत्र मूर्च्छनानां श्रवणविषयत्वं प्रस्तुतम् । तत्र अप्रस्तुताया अतिथिविषयतायाः ( सादृश्यातिशयसामर्थ्यात् ) गौण्या लक्षणया आरोप एव समाधिः ।

**भज्यमानम्** = स्खलत्तारम् । **त्रुट्यमानम्** = पूर्वापरस्वरसम्बन्धविकलम् । **आम्रेड्यमानम्** = अनवसरेऽपि पुनःपुनरुच्चार्यमाणम् । **अदर्शितरागविशेषम्** = न दर्शितः न स्फुटीकृतः रागविशेषो मल्हारविहारादिरूपविशेषो यत्र तत् । **आरोहेति**—आरोहः=सरिगमादीनामुन्नयनम् अवरोहः= तेषामेवाऽवतरः । ध्रुवा=ध्रुवपदम् आभोगः = रागस्य व्याप्तिरूपो विस्तारः तत्तद्रूपा या अलङ्कारादिकथा तच्छून्यमपि । अथवा—अलङ्करणमलङ्कारः रसादिः: तत्कथाशून्यमपि । **निजकल्पनामात्रम्** = कपोलकल्पितम् । **तद्देशीयेति**—तद्देशीयो यो ग्राम्यस्त्रीजनः हालिकादिस्त्रीजनः तस्य **गानानुकल्पम्** = तदीयगीतिसदृशम् । **सुदीर्घस्वररणनम्** = सुष्ठु दीर्घाणां = ताराणां स्वराणां रणनं= ध्वननं यत्र तादृशम् । **गानम्** = गीतिः । **परमसरसम्** = चित्ताकर्षकत्वात् । **परममधुरम्** = ततो वृत्तेर्व्युत्थानाभावात् । **परमहारि** = श्रोत्रप्रियत्वादिति ज्ञेयम् । 'गानमासीत्' इति क्रियाकारकसम्बन्धः ।

**सौवर्णी**दर्शनोत्तरं रघुवीरसिंहस्य दशां वर्णयति—'**अहो**' इत्यादिना सन्दर्भेण । 'अहो आश्चर्यम्' इत्यत्र '**ओत्**' ( १ । १ । १५ ) इति प्रगृह्य-

---

† तनु विस्तारे । अस्माद्धातोः भावे घञ् । तन्यन्ते विस्तार्यन्ते इति **तानाः** । स्वरभेदाः । **घञजपाः पुंसि** इति पुंस्त्वम् । 'तानप्रदायित्वमिवोपगन्तुम्' इति कुमारसम्भवे ।

संज्ञायां प्रकृतिभावः । **य एषः**=रघुवीरसिंहः । **फणिफणाफूत्कारेषु**= फणिनः सर्पस्य फणा स्फटा तस्याः फूत्कारेषु = 'फूँकार' रवेषु अपि य एष धैर्यं न अत्याक्षीत् = ( न जहौ ) इत्येवं सर्वेषाम्—अप्यन्तपदानां सम्बन्धः । "स्फटा-थांन्तु फणा द्वयोः" इत्यमरः । **सक्रोधेति**—क्रोधेन कोपेन सह वर्त्तत इति सक्रोधः कुपितो यो हर्यक्षः = सिंहः तस्य जृम्भाणां गात्रविनामानां मुखव्यादाना-नामिति यावत् आरम्भेषु उपक्रमेष्वपि । कुपितस्य सिंहस्य स्वतो जृम्भारम्भा जायन्ते इति **स्वभावोक्तिरेव** ॥

**पृ० १०६ ॥ भल्लेति**—भल्लतल्लजानां प्रशस्तानां * भल्लनामकशस्त्राणां परिस्पर्धिनः = प्रतिद्वन्द्विनः ( तुल्या इत्युपमा व्यज्यते ) खराः = कठोरा नखराः= करजा येषां ते च ते भल्लाः = भल्लूकाः ऋक्षा इति यावत् तेषां वनेष्वपि । **घनेघनेति**—घनाः सान्द्रा जलभरवत्त्वात् ये घनाघनाः वर्षुकाः वारिदाः (मेघाः)तेषां घर्षणेन संघट्टनेन विघट्टितेषु=विस्फुटितेषु गैरिकव्रातेषु गैरिकचट्टकेषु ये जल-प्रपाताः आसाराः येषु एवंविधा ये गिरिगह्वराः=पर्वतकन्दराः तेषामुत्फालेषु=उत्कूर्दनेषु अपि । **तरलतरेति**—तरलतराः अतितरलाः तरङ्गा वीचयो येषु एवंभूतानि यानि तोयानि=जलानि तेषाम्—आवर्त्तशतैः=असङ्ख्यातभ्रमैः आकुलानां व्याप्तानां तरङ्गिणीनाम्=नदीनां तीव्रतरवेगेष्वपि । **गण्डकेति**—गण्डकमण्डलस्य = खड्गिमृगसमूहस्य घोणानां–नासिकानां घर्षणेन सूँत्कारेण घोरो भयङ्करो यो घर्घरा-घोषः=घर्घररवः तेन घोरतराः अत्यन्तं भीतिजनका ये प्रान्तराः = दूरशून्या अध्वानः तेष्वपि । **धैर्यम्**=हृदयसत्त्वम् । **न अत्याक्षीत्**=सन्देशहरणादि **न व्यस्मार्षीत्**=नैव विस्मृतवान् । आत्मानञ्च न **न्यगकार्षीत्**=नैव निकारितमकरोत् । **तस्य**=रघुवीरस्य **अधुना**=सौवर्णीदर्शनकाले । **स्विद्यन्ति**= स्वेदवन्ति भवन्ति, **अङ्गानि**=गात्राणि । **एजते**=कम्पते गात्रयष्टिः । प्रशस्तं शरीरमित्यर्थः । **विमनायते**=विक्लवं भवति **हृदयम्**=मनः । **अञ्चन्ति**= उद्गच्छन्ति **रोमाणि**=लोमानि **क्षुभ्यति**=सञ्चलति पूर्वावस्थां परिहाय वर्त्तते **मनः**=हृदयम् । 'तत् कथमिदम्' इत्याद्युक्तिः कवेः । 'एष वीरबालोऽपि अव-सरं प्राप्य मदनमृगयुना आहतः' इत्यन्वयः । **मदनमृगयुना**=कामदेवव्याधेन । मदन एव मृगयुर्व्याध इति **रूपकम्** ।

---

* 'स्नुहीदलफलो भल्लस्त्रिपाटाल्पस्तदाकृतिः' इति ( वैजयन्ती । भल्लो भल्लूके शस्त्रविशेषे चेति **शब्दस्तोममहानिधिः** ।

**अत्रेदमवधेयम्**—यद्यपि—'आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः' रिति नियमाद् अत्र तद्वैपरीत्येन (**सौवर्णी**रागं विहाय **रघुवीरसिंह**रागस्य दर्शनेन ) रघुवीरसिंहरागोऽनुवर्णितः तथापि प्रायोनादोऽयमाभाति। दृश्यते च **नैषध**चरितादौ नायिकाविषयानुरागोऽपि प्रथमं नायकस्य कविनोपनिबद्धः इत्यत इहाप्यदोषः। किञ्च **वीररस** प्रधानेऽस्मिन् काव्ये शृङ्गारवर्णनमिदं तदङ्गत्वेनोत्थापितम् 'अङ्गमन्ये रसाः सर्वे' इत्युक्तेः। अयञ्च प्रकृते शृङ्गारो विप्रलम्भः **पूर्वरागाख्यः**। तथाच—

**श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः।**
**दशाविशेषोऽयोऽप्राप्तौ पूर्वरागः स उच्यते ॥**

इत्युक्तेः।

अत्र च रघुवीरसिंहः सौवर्णी च आलम्बनविभावौ। 'रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः' इत्युक्तेः। 'आलम्बनो नायकादिस्तमालम्ब्य रसोद्गमात्। इति च। रघुवीरस्य धैर्यापसरणसमुत्था स्वेदाद्याः * सात्त्विका भावाः अनुभावाः। तथा चोक्तम्—

**उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।**
**लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥**

एवं व्यभिचारिभावोऽपि निर्वेदादिः तत्र २ प्रकरणे यथाऽयथं वेदनीयः। बालबुद्धिवैक्लव्यभयाद् बहु नोक्तम्।

**तावदिति**—'तावदकस्मात् स्वयमेव प्रबोधितः' इत्यवान्तरान्वयः। 'शिववीरस्य चरोऽसि' इति कथनेन तदीयशासनकाले धर्ममर्यादोल्लङ्घनकारिणामुपरि सद्यस्तत्कोपज्वालानलपातो व्यक्तीकृतः, तेन च सदाचारप्रचारबहुलताऽपि व्यज्यते इति व्यङ्ग्याद् व्यङ्ग्यम्। 'गूढाभिसन्धिषु प्रेष्यसे' इति कार्यगौरवम् 'अल्पं तव वेतनं साधारणी चाऽवस्था.' इत्यनेन निर्धनस्याल्पवयस्कस्य च स्त्रीसङ्गल्योऽनुचितः। 'खङ्गधारावलेहनमिव कष्टतरं तव कार्यम्' इत्यनेन—

---

* सत्त्वं=रजस्तमोगुणवर्जितमनोधर्मविशेषः तस्मात् सम्भूताः विकाराः=चित्तस्य अन्यथात्वरूपा धर्मा इत्यर्थः। 'विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्तिताः' इत्युक्तेः। ते च—

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥** इति।

**राजसेवा मनुष्याणामसिधारावलेहनम् ।**
**पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥**

इति प्रतिपादितदिशा राजसेवाया कष्टतरसाध्यत्वं प्रमादसम्भावनमात्रताया-मपि च ततो महानानर्थापातश्च इत्यादि । 'किशोरं वयः अबहुदर्शि हृदयञ्च' इत्य-नेनैतादृशकार्यात् सर्वथा भेतव्यता । 'जागरूको राजदण्ड' इत्यनेन राजशासन-पाल्यत्वम् । 'अवितर्कनीया च भाविनी घटना' इत्यनेन सावधानो भूत्वैव व्यव-हारं साधयेदित्यादि यथायथमनेकानि व्यङ्ग्यानि सन्तीति विज्ञेयम् । 'मास्म त्वम्—मुखचन्द्रावलोकनैः—आत्मानं विक्रीणीष्व' इति सर्वैः तृतीयान्तैः पदैः सम्बन्धः । **अधरसीधुतृषाभिः**=अधरमेव सीधु=मद्यं तत्तृषाभिः=तृष्णाभिः । **कोमलाङ्गालिलिङ्गिषाभिः**=कोमलानामङ्गानामाश्लेषेच्छाभिः । **मधुरा-लापशुश्रूषाभिः**=प्रियालापश्रवणेच्छाभिः । 'विक्रीणीष्व' इति 'क्रीञ्' धातो लोटि मध्यमपुरुषैकवचने रूपम् । **'परिव्यवेभ्यः क्रियः'** ( १ । ३ । १८ ) इत्यकर्त्रभिप्राये आत्मनेपदम् ।

**पृ० १०७ नेत्रे प्रमृज्य**=प्रोञ्छय । **स्तम्भावष्टम्भम्**=स्थगितभावम् अर्थात् सौवर्णीं दृष्ट्वा कामविकारेण प्राप्तां जडतां परिहाय । **कौमारात्परं वयः**= 'कौमारं दशमावधि' इत्युक्तेः परं वयो यौवनं **चुचुम्बिषतीम्**=स्प्रष्टुमिच्छन्तीम् । **कुसुमेति**—कुसुमानां पुष्पाणां कुड्मलस्य=गुलुञ्छस्य घूर्णनव्याजेन परिचालनकपटेन **यूनां**=तरुणानां मनः=हृदयं **घूर्णयन्तीम्**=परिचालयन्तीम् । सौन्दर्यस्य सारः स्थिरांशः तदवतारस्वरूपाम् = पिण्डीभूतसौन्दर्यामित्यर्थः । **ऐक्षिष्ट** = अद्राक्षीत् । **सुधाधवलम्** = चूर्णकश्वेतम् । सचकितम् = * सविस्मयम् **सग-तिस्तम्भम्** = परिवर्त्तितकन्धरम् इत्येतानि 'अवलोकयामास' इत्यस्याः क्रियाया विशेषणानि ।

मुग्धाया बालाया नायिकायाश्चेष्टितमिदम् । इयञ्च स्वीयैव मन्तव्या † अज्ञातयौवना च । सर्वमिदमग्रे द्वयोश्चरिते तत्र २ स्फुटीभविष्यति ।

---

* विस्मयेन सह वर्त्तते यस्यां क्रियायां तद्यथा तथा, वरिवृत्ता ग्रीवा यस्यां क्रियायां तद्यथा तथा ।

† इयञ्चोदाहृता 'रसमञ्जर्याम्'—
**नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः**
**श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।**

' अपरोपिऽ जातो वशीकारप्रयोगप्रचारः ' इति रघुवीरस्य विषये ज्ञातव्यम्।
**स्वाधिकृतकोणकोष्ठम्** = दुर्गपालाज्ञया निर्दिष्टं स्वावतारस्थानम् ।

**तत्रचेति—गवाक्षजालप्रसारितैः** = वातायनरन्ध्रव्याप्तैः । ' वातायनं गवाक्ष ' इत्यमरः। **राजतमार्जनीनिभैः** = रजतं रूप्यम् तस्येयं तद्विकारो वा राजती, सा चासौ मार्जनी=बहुकरी तत्तुल्यैः। अर्थीयमुपमा । **कलानिधिकरनिकरैः** = कलानिधिः चन्द्रः तस्य कराणां निकरैः समूहैः **समूह्य**=समुत्सार्य **शोधिते**=अपसारिते इव **अन्धकारे**=तमसि ।

अत्र चन्द्रकिरणसम्पर्केणान्धकारस्यापसरणं स्वभावस्थितमपि मार्जनीकृतशोधनत्वेन रूपेणोत्प्रेक्षितम् । **पयःपयोधिफेनैः** = क्षीरसमुद्रडिण्डीरैः इव **आस्तृते** = सज्जे । **शयनीयपीठे** = शयनार्थमुपस्थिते पल्यङ्कविशेषे उपविश्य । विदधत् = कुर्वाणः । **करे कलयन्** = पाणौ कुर्वन् । **जालान्तरेण** = वातायनरन्ध्रेण **तारकमण्डलम्** = नक्षत्रमण्डलम् । ' तारकं तारका तथा ' इति ( शाश्वतः ) ॥

**पृ० १०८ ॥ सान्त्वयन्** = धीरयन् । **विद्रुताऽसि**=पलायितासि । **अशान्तिम्** = चित्तविकल्पम् **विभ्रत्** = धारयन् । **उभे अभ्यस्तम्** (६ । १ । ५) इत्यभ्यस्तसंज्ञायां ' **नाभ्यस्ताच्छतुः** ' (७ । १ । ७८) इति नुम्निषेधः । ' पार्श्वतः पार्श्वे परिवर्त्तमान ' इति * निद्राया अभावे कामिजनावस्थितिः स्पष्टं व्यक्तीकृता ।

**होराम्** = एकां घटिकामित्यर्थः । **अयापयत्** = गमयाञ्चकार । **प्रकाण्डकोष्ठे** = विशाले कोष्ठे । **निरैक्षिष्ट** = अपश्यत् । **आरकूटदीपिकायाम्** = पित्तलदीपिकायाम् । ' रीतिः स्त्रियामारकूटः ' इत्यमरः ।

---

**शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति**
**श्रान्ताऽसीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥**

एतानि सर्वाणि लक्षणानि एतदवस्थायाः सौवर्ण्या अन्तर्गर्भितानीति सूक्ष्मेक्षिकया ( पूर्वोत्तरसन्दर्भपठनेन ) सुधीभिर्निरीक्ष्यम् ॥

* प्रजागरे सतीत्यर्थः । उक्तञ्च ' महाभारते ' ( विदुरनीतिप्रकरणे )—

**अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।**
**हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ इति ।**

" पीठिका अधिष्ठापितानि " = पीठिकासु स्थापितानीत्यर्थः । ' **अधिशीङ्-स्थासां कर्म** ' (१ । ४ । ४६) इत्याधारस्य कर्मसंज्ञा । **नागवल्लीदलानि**= ताम्बूलीपत्राणि । ' ताम्बूलवल्ली ताम्बूली नागवल्ली ' इत्यमरः । **पूगानि** = क्रमुकाः । **शङ्कुला** = पूगकर्त्तनशस्त्रिका ' सरौता ' इति भाषा । **एला**=चन्द्रवाला । 'पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला ' इत्यमरः । **जातिपत्राणि** = मालतीपत्राणि । **कर्पूरम्** = घनसारः । **महोपबर्हम्** = महोपधानम् 'तकिया' इति प्रसिद्धम् । **निद्रामन्थरः** = निद्राजनितालस्योपेतः ' तत्र चैकस्मिन् ' इत्यारभ्य ' विशिथिलशब्दैरुत्तरयति ' इत्यन्तेन गद्येन यथावस्थितवस्तुवर्णनमलौकिकम् ।

**पृ० १०६ ॥** एनम् = रघुवीरसिंहम् । **पादसंवाहनपरः** = अङ्घ्रिमर्दनपरः । ' मन्दमभ्यधात् ' शनैर्व्याहार्षीत् । अनेन तदीयसभ्यता व्यज्यते । **करौ सम्पुटीकृत्य** = प्राञ्जलिर्भूत्वेत्यर्थः । **असहयोगिनः** = असत्साहाय्यविमुखाः । **पार्श्वस्थपृथिवीपतयः**=जयसिंहप्रभृतयः । **अङ्गवङ्गेति**-तत्तन्नामदेशेषु । **समुद्धूतध्वजाः** = समुद्धूताः समुन्नता ध्वजा येषां ते अङ्गादिदेशवशीकरणादित्यर्थः । **परिपन्थिनः** = लुण्टाका अस्मद्वैरिणो म्लेच्छाः ।

सम्बोभवीति = अतिशयेन पुनः पुनर्वा सम्भवतीति सम्बोभवीति । भूधातोः ' **धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** ' ( ३ । १ । २२ ) इति भृशार्थे यङ् । ' **यङोचि च** ( २ । ४ । ७४ ) इति यङोलुक्, प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम्, अभ्यासकार्यम्, धातुत्वाल्लडादयः । **शेषात्कर्तरि** '—परस्मैपदम् । ' दिवादिभ्यःश्यन् ' ' रुधादिभ्यः श्नम् ' इत्यादिगणनिर्देशात् श्यन्नाद्यभावे शवेव । ' **चर्करीतञ्च** ' इत्यदादौ पाठात् शपोलुक् । ' बोभूति ' इत्यवस्थायां ' **यङो वा** ' ( ७ । ३ । ६४ ) इति सूत्रेण ईडागमे ' बो भू ई इति ' इति स्थिते ऊकारस्य गुणे, अवादेशे ' बोभवीति ' इति सिद्धम् ' सम् ' तूपसर्गः ।

**संशेते** हृदयम् = संशयमापद्यते मन इत्यर्थः । ' शीङ् ' धातोर्लटि प्रथमैकवचने । समुपसर्गेण संशयोऽर्थः । ' उपसर्गाद्धात्वर्थो बलादन्यत्र नीयते ' इत्युक्तेः **दैवज्ञः** = जानातीति ज्ञः । '**इगुपधज्ञाप्रीकिरः कः**' (३ । १ । १३५) इति ज्ञाधातोः कः । दैवस्य भागधेयस्य ज्ञः = ज्ञाता दैवज्ञः = ज्यौतिषकः । ' दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ' इत्यमरः ।

पृ० ११० ॥ **यूथिकामालाम्** = मागधीमालाम् 'अथ मागधी। गणिका यूथिकाम्बष्ठा' इत्यमरः । **व्योत** = अपमरति । **रजनी** = रात्रिः **शेष्व**=स्वपिहि। इति=उक्तप्रकारेण। **उदीर्य**=उक्त्वा **व्रीडाभरमन्थराऽपि**= लज्जातिशयमन्दापि । 'तातात्रया बलादिव प्रेरिता' 'आज्ञा गुरूणां ह्यविचारणीया' इत्युक्तेः । 'आत्मना ऽत्मन्येव निविशमाना' अनेन लज्जातिशयत्वं व्यज्यते । **'नेर्विशः'** (१ । ३ । १७) इत्यात्मनेपदम् । **'लटः शतृशानचावप्रथमासमानाधिकरणे'** (३ । २ । १२४) इति शानच् । **मोदकभाजनसभाजितम्**=मोदकपात्रसत्कृतम् **सव्येतरकरम्**=वामं पाणिम्। **स च**=रघुवीरः। आत्मनो भावम् = अङ्कुरितां रतिम् । **संवृण्वन्**=आच्छादयन्। तद्धस्तात्=सौवर्णीकरात् **उदतूतुलत्**=अग्रहीत् । सा=सौवर्ण्येव । **अञ्चलकोणम्**=वसनदशाम् । **कटिकच्छप्रान्ते**=कटिभागे, कच्छभागे चेत्यर्थः । **नतकन्धरस्य**=अवनामितग्रीवस्य । **चिक्षेप**=पर्यधापयत् । अत्र 'क्षिप्' प्रकृत्या मालापरिधानकाले सर्वथा स्पर्शाऽभावो द्योतितः । **ईषदिति**=ईषत् कम्पिता सत्त्वोदयाच्चलिता गात्रयष्टिर्यस्याः सा । **शनैः**=मन्दमेव । यथागतं यथा स्यात् तथा **निववृते** = निवृत्ताऽभूत् । **सैवेयमिति**—गद्येनोपन्यासकुशलः कविः स्वयमेव पाठकानां कृते रघुवीरसिंहादीन् परिचाययति ।

पृ० १११ 'को जानाति'—इति नकोऽप्यन्य इत्यर्थः । स्वाऽवस्था प्रत्यात्मवेदनीयेति भावः । एतेन देहाद्यात्मवादपरासनपूर्वकं देहातिरिक्तात्मवादसमर्थनमपि व्यक्तीकृतमिति **वस्तुध्वनिः**। **'नान्यदृष्टं स्मरत्यन्य'** इति नियमात् । अथवा—सर्वं वाक्यं सावधारणमिति न्यायेन 'कः' प्रजापति रेव जानाति तस्य सर्वान्तर्यामितया कोशलारघुवीरान्तःकरणोपाध्योस्तदभेदादिति वेदान्तसिद्धान्तगुप्तिः । **उषसि**=प्रभाते । **उपतिष्ठासते**=उपस्थातुमिच्छति । **'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु'**—( वा० १ । ३ । २५ ) इति वार्त्तिकेन स्थाधातोरात्मनेपदम् । **कुसुमपतङ्गान्** = पुष्पभ्रमरिकाः । **उद्धूय** = उड्डाय्य ।

पृ० ११२ **व्रीडया** = लज्जया । **कुलाङ्गनाङ्गीकृतमहाव्रतेन** = स्वब्रह्मचर्यरक्षणरूपेण । **वाचंयमताम्** = तूष्णीम्भावम् । **'वाचियमो व्रते'** (३ । २ । ४०) इति सूत्रेण खच्प्रत्यये **'वाचंयमपुरन्दरौ च'** (६ । ३ । ६-

इत्यनेन वाचोऽगन्तभावो निपातितः । **पवित्रतमानि** = पुंयोगाभावेनातिपूतानि । **स्फुटतमेति** = स्फुटतमम् अतिप्रकटं यत् यौवनंतारुण्यं तस्योद्भेदः आविर्भावः तद्रहितानि = तच्छून्यानि । **तदङ्गानि** = कोशलायाः कुचाद्यवयवान् । न **अस्प्राक्षीत्** = नाऽस्पृक्षत् । **प्रतस्थे** = प्रस्थानमकरोत् इति शिवोम् ।

इति ( नूतन ) शिवराजविजयपताकायां
चतुर्थो निश्वासः ।

* ॐ *

# पञ्चमो निश्वासः ।

न्विह

असुर-सुर-नराणां कस्य नो भाग्यभङ्गो
[illegible] जगति कदाचिन्नैव कोऽपि * स्वतंत्रः ।
भवति विकचदृष्टिर्योऽपि घूको निशायां
रविकिरण-समाजे सः स्वयं नष्टदृष्टिः ॥ १

धीरो नैव जहाति सत्त्वमतुलं नित्यं व्रतादच्युतो
धर्मस्तस्य सदैव निर्मलतया † यन्मातृभूमिस्थितिः ।
‡ हंसः सञ्चरणे प्रभुर्यतमना देशे विदेशे तथा
नेष्टे § मानसमानहानसहनं स्वप्नेऽप्यसौ भावितम् ॥ २ ॥

पञ्चमे निश्वासे स्वहस्तात् प्रणष्टं पुण्यनगरं पुनरपि स्वायत्तीकर्त्तुं लगितलग्नतस्य शिववीरस्य गुप्तरीत्या शास्तिखानोदन्तपरिचयमवतारयन्, शिववीरेण सह भूषणकवेः सङ्गमबीजञ्च प्रदर्शयन्, पुण्यनगरे च हिन्दूधर्मम्लानिं प्रकटयन्निव उपक्षेपकविधया पण्डितराजकृतकाव्यद्वयप्रतीकमुपादत्ते—" **वयं नो ते** " इति, " हरेरद्य द्वारे " इति च । **जाल्मेति**—जाल्माः=नीचाः असमीक्ष्यकारिणः । क्रूरा वेति यावत् ।

**दिल्लीश्वरेण**=अवरङ्गजीवेन । **ववृधे**=एधाम्बभूव । **तद्धस्तात्**=शिववीराऽधिकारादित्यर्थः । **आचिच्छिदे**=स्वाधिकारे निन्ये । "छिदिर् द्वैधीकरणे" इत्यस्य लिटि रूपम् । उभयपदीयोऽयम् । आङुपसर्गादर्थव्यत्ययः ।

---

* एकरसतया स्वसंकल्पपूरणे समर्थ इत्यत्र तात्पर्यम् । ' निहीनोऽपसदो जाल्म " इति ( अमरः ) । " जाल्मस्तु पामरे । असमीक्ष्यकारिणि च " इति ( हैमः ) । जालं करोतीति **जाल्मः** । बाहुलकान्मप्रत्ययः । **नेड्वशिकृति** " ( ७ । २ । ८ ) इतीट् न ।

† स्वदेशरक्षायां स्वदेशप्रियतायां वाऽऽग्रह इत्यत्र तात्पर्यम् ।

‡ हंसः=पक्षी ब्रह्मनिष्ठश्च ।

§ मानसम्=ब्रह्मत्वं सरः अन्तःकरणञ्च ।

**पृ० ११४ ॥ शिववीराध्युषितचरे**=पूर्वं शिववीरेणाध्युषिते । * पूर्वमध्युषितमिति अध्युषितचरम् । "**भूतपूर्वेचरट्**" ( ५ । ३ । ५३ ) इति सूत्रेण स्वार्थे चरट् ।

**छलाशङ्काः**=छलातङ्काः । युद्धाशङ्काः=सङ्ग्रामातङ्काः । † **जरीजृम्भन्ते** =अतिशयेन वर्धन्ते । " अथैकदा श्रीशिववीरः आरादाजगाम " इति सम्बन्धः । **रजन्याम्**=रात्रौ । **सुकोमलेति**—सुकोमला अत्यन्तं हरिताः ‡ शादाः= शष्पाणि ( बालतृणानि ) यस्यां तस्याम् । **कलितप्रसादायाम्** = प्रकटि- कृतनिर्मलतायाम् ।

**केकिकेकेति**—केकिनां मयूराणां ‖ केकाभिः=वाणीभिः विहितं सम्पादितं प्रहरिणां यामिकानां प्रातिनिध्यम्=§प्रतिनिधिकर्म यस्याम् एवंभूतायां—**भुवि** । **गुणवचनब्राह्मणादिभ्यः कर्मणि च** ( ५ । १ । १२४ ) इति ष्यञ् । **निष्कृपकृपाणपाणिः**=निष्कृपः कृपाशून्यः तीक्ष्णः कृपाणः पाणौ यस्य सः **कञ्चुकेति**—कञ्चुकेन चोलकेन आच्छादितः प्रावृतः कठिनो दृढः शस्त्रै- रवेध्य इत्यर्थः कवचः तनुत्रं यस्य सः । **कलितेति**—कलितः रचितः सैनिक- भटस्य सैन्यशूरस्य वेषो नेपथ्यं येन सः एवम्भूतः श्रीशिववीरः । सेनां रक्षतीति सैनिकः । **रक्षति** ( ४ । ४ । ३३ ) इति सूत्रेण द्वितीयासमर्थात् "सेना" शब्दात् ताद्धितः ठक् । अथवा—**समवायान् समवैति** ( ४ । ४ । ४३ ) इत्यधिकारार्थे 'सेनाया वा' ( ४ । ४ । ४५ ) इति सूत्रेण ठक् । सेनां समवैतीति **सैनिकः** इति साधुः । 'सेनारक्षास्तु सैनिकाः । सेनायां सम- वेता ये सैन्यास्ते सैनिकाश्च ते' इति ( अमरः ) । '**सैनिकः** सैन्यरक्षे च स्यात् सेनासमवेतके' इति ( मेदिनी ) ।

---

* अध्युषितं भूतपूर्वम् " इति लौकिकविग्रहः ।

† **जृभी** गात्रविनामे । यङ्लुकि रूपम् ।

‡ " शादो जम्बालशष्पयोः " इति ( अमरः ) । **शादः** कर्दमशष्पयोः " इति ( हैमः ) श्यतीति शादः । "**शाशपिभ्यां ददनौ**" ( उ० ४ । ९७ ) इति ।

‖ " केकावाणी मयूरस्य " इति ( अमरः ) ।

§ ब्राह्मणादेराकृतिगणत्वात् प्रतिनिधिशब्दात् कर्मणि ष्यञित्यर्थः ।

**दुग्धेति**—दुग्धधारया=क्षीरधारयेव। **क्षालितैः**=शोधितैः **क्रियोत्प्रेक्षे-यम्** । **ज्योत्स्नया**=चन्द्रिकया **प्रकाशितैः**=प्रद्योतितैः । **पथिभिः**= मार्गैः । **आसन्नात्**=समीपवर्त्तिनः । **शिवमन्दिरात्**=महादेवमन्दिरात् । **तत्र चेति–द्वारि**=शिवमन्दिरद्वारीत्यर्थः । "कञ्चनाऽश्वमद्राक्षीत्" इति सम्बन्धः । द्विवचनान्तानि अश्वस्य विशेषणानि । **रेणुरूषितरोमकुहरम्**= रेणुना रूषितानि छुरितानि रोम्णां लोम्नां कुहराणि छिद्राणि रोमकूपा इतियावत् यस्य तम् । शफैः खुरैः उत्फालितया उत्पाटितया मृत्स्नया प्रशस्तया मृत्तिकया *स्नातम्=लिप्तम् । **त्वरितेति**=त्वरितगत्या शीघ्रचालेन यौ निश्वासप्रश्वासौ=श्वासस्य गमागमौ तयोः सहचरितेन अविनाभाविना तयोरन्वितेनेत्यर्थः हिणत्कारेण= हेषारवेण सूचितः व्यक्तीकृतःक्रमः मार्गलङ्घनश्रमो येन तम् । उत्थायोत्थाये-त्यारभ्य भुवि विलुठन्तमित्यन्तं **स्वभावोक्तिः । तश्चेति** शूद्रयुवकमित्यर्थः। **विवर्णवदनम्**=म्लानमुखम् । आजानु=जानू अभिव्याप्य धूल्या रजसा धूसरितं चरणयुगलं यस्य तम् । **मन्थरितशरीरम्**=स्थगितदेहम् । **स्वेदाक्लिन्नम्**= स्वेदः श्रमजवारि तेन धौतम्=व्याप्तमित्यर्थः ।

**पृ० ११५ । पूरितजठरपिटकः**=पूरितो भारितो जठरमुदरमेव पिटको मञ्जूषा येन तादृशोऽहमित्यर्थः । ताम्रकधूमपानै रिति तदभ्यासिनां परिश्रमा-पनोदव्यवहारः सूचितः । **मन्दिरेति**—मन्दिरस्य पाश्चात्यः पश्चाद्भवो यः प्राचीरः= कोटः तस्य गवाक्षात् वातायनात् **आयान्तम्**=प्राप्नुवन्तम् **अस्पष्टालापध्वनिम्** अव्यक्तशब्दम् । **अश्रौषीत्** आकर्णयामास । **क्षणमिति**—विरम्य=विश्रम्य **ध्वनिप्रतिध्वनिभिः**=शब्दप्रतिशब्दैः । **अव्यक्तांशबहुलाम्**—अस्फुटांश-प्रचुरामपि । **उक्तिम्**=वचनजातम् । एवम्—अनया रीत्या **निश्चिक्ये**=निश्चिकाय 'चिञ्' चयने । तौदादिकः । अस्य लिटि प्रथमैकवचेन रूपम् । **विभाषा चेः** (७ । ३ । ५८) अनेन अभ्यासात्परस्य चिञः सनि लिटि च कुत्वं वा भवति "**चिराय**" इत्यारभ्य इति वक्तारम् इत्यन्तं कस्याचित् पथिकस्य वचनम् अयमेव च भूषणकविः । **दिल्लीति**—दिल्लीवल्लभः=अवरङ्गजीवः तस्य पाणिपल्लवं तल्लजच्छायाम्=प्रशस्तहस्ताश्रयम् । अध्युषितोऽस्मि=तदीयानुचर्य्यमकार्षमित्यर्थः।

**पृ० ११६ । साभिमानेति**—अभिमानेन सहितो यो भ्रूभङ्गस्तम्

---

* '**स्नात**' पदस्य शौचरूपो मुख्यार्थः स च प्रकृते बाधितः अतोऽस्य लिप्तार्थो लक्ष्यः । संयोगश्च सम्बन्धः । आतिशय्यातिशयश्च व्यङ्ग्यः ॥

**उत्तुङ्गेति**—उत्तुङ्गेन उन्नतेन प्रचुरेणेति यावत् कोपेन अञ्चितो व्याप्तो योऽखर्वोऽनल्पो गर्वोऽहङ्कारः तेन बर्बरताम्=मौढ्यं वा **सहामहे**=इत्यन्वयः । मृष्यामहे इत्यर्थः । **सारस्वतसृष्टौ**=सरस्वत्या इदं सारस्वतम्=तस्य सृष्टौ=सर्गे कवितारचनायामित्यर्थः । **तस्य**=दिल्लीश्वरस्य । **क्रीतदासाः**=वैतनिकाः। **तदीहासमकालमेव**=तदिच्छासमसमयमेव। **बद्धकरसम्पुटाः** प्राञ्जलिभूताः। **यथोचितावस्थानाः**=यथायुक्तास्थितयः। **अवतिष्ठन्ते**=उपस्थानं विदधत इत्यत्र तात्पर्यम् ।

**"यथा"** इति—अस्माकम्–कवीनाम् । **पदानि**=*सुप्तिङन्ताः शब्दाः नामाख्यातोपसर्गनिपाताश्चेत्यर्थः † **वाक्यानि**=पदोच्चयाः पदसमूहा इत्यर्थः । ‡ **छन्दांसि**=मात्रावर्णविभेदभिन्नानि आर्यादीनि । § **अलङ्काराः**—अनुप्रासोपमादयः । ‖ **रीतयः** पदसंघटनारूपाः वैदर्भीप्रभृतयः ।

---

* **'सुप्तिङन्त पदम्'** (१ । ४ । १४) इति पाणिनिसूत्रम् । 'एतानि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च' इति **निरुक्तम्** ।

† वाक्यलक्षणमुक्तं 'साहित्यदर्पणे'—यथा—

" **वाक्यं** स्याद् योग्यताकाङ्क्षाऽऽसत्तियुक्तः पदोच्चयः " इति ।

"सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इत्यमरः । तत्र सुबन्तानां चयः—'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि । अत्र भाष्यकारमते 'भवति' इत्यध्याहारस्य नावश्यकता । तिङन्तचयः—'पचति पश्य' 'पचति भवति' इत्यादि । 'घटमानय' इत्यादि तिङ्सुप्चयात्मकमपि । इति।

‡ उक्तञ्च वृत्तरत्नाकरे—

**पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।**
**मात्रावर्णविभेदेन च्छन्दस्तदिह कथ्यते ॥** इति

§ उक्तञ्च महाकविना **दण्डिना**—

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।**
**ते चाऽद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥**

‖ उक्तञ्च **भोजराजेन** सरस्वतीकण्ठाभरणे—

**वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।**

* **गुणाः** श्लेषाद्याः रसधर्माः । † **रसाः**=शृङ्गाराद्याः । व्यञ्जनाव्यापारैकगम्याः ।

**दीनारसम्भारैः**=मोहरकोटिभिरित्यर्थः । तोषयितुम् = प्रसन्नीकर्तुम् । **अलम्** = समर्थः । यथा वयं = कवयः केवलं ‡ **वचनभङ्गीभिः** = कविताचातुरीभिरित्यर्थः । **पारयामः** = शक्नुमः । **अस्मदिति**—अस्माकं शृङ्गार-

---

रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥ ३
वैदर्भी साऽथ पाञ्चाली गौडीयाऽवन्तिका तथा ।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥ इति
दण्डी तु—

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ इत्याह

* आलङ्कारिकसमयानुपाती श्लेषाद्यन्यतमो '**गुण**' इति **रत्नेश्वर**-प्रभृत्यभिमतं गुणलक्षणम् ।

† **विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रस**' इति 'हेमचन्द्राचार्यः' (काव्यानुशासने) स च शृङ्गारादिभेदादनेकविधः । शृङ्गारस्य च प्राधान्यम्—

शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥ इति

( सरस्वतीकण्ठाभरणे )

‡ 'किं वदति मनोभवाभितप्ता चिरसमयागतवल्लभा मृगाक्षी' इति समस्यायां दीयमानायाम्—

गुरुजननयने पिधेहि निद्रे !
त्वरितमिहास्तमुपैहि पद्मबन्धो ! ।
इति वदति मनोभवाभितप्ता
चिरसमयागतवल्लभा मृगाक्षी ॥

इत्यादिरूपा वचनभङ्गी कवीनाम् । अनया वचनभङ्ग्या कश्चित् कविः स्वकीयं राजानं कारागारान् मोचयामासेत्यस्मद्गुरुचरणाः ।

रस एव रसायनकं = जीवनौषधम् * स्वर्गो वा । **आस्वाद्य** = रसयित्वा **जितरागद्वेषः** = वीतरागः † **मुनिः** = सुगतः ब्रह्मविद्वा । **प्रतीपदर्शिनीम्** = वामां सुन्दरीम् । **अनुकूलयितुम्** = मानयितुं स्वायत्तीकर्त्तुम् **आकुलः** = विह्वलः **कल्पेत** = समर्थो भवेत् ; अस्मच्छृङ्गाररसकथाश्रवणेन मुनिरपि धैर्यच्युतो भवेदित्यभिप्रायः । **अस्मद्वैराग्यकविताम्** = ‡अस्मच्छान्तरसप्रधानकविताम् । **रागोऽपि** कामोऽपि विषयासक्तिरूपो दोषोऽपि । **विरज्येत्** = विरक्तीभवेत् । वीररसकविताम् = उत्साहस्थायिभावपूर्णां कविताम् **म्रियमाणोऽपि** = प्राणान् त्यजन्नपि युद्धे = सङ्ग्रामे **उत्तिष्ठेत्** = उत्थितो भवेत् । **उदोऽनूर्ध्वकर्मणि** ( १ । ३ । २४ ) अत्रोर्ध्वकर्मत्वादात्मनेपदं न । एषु सर्वत्रातिशयोक्तिः ।

"**यस्य भाग्य**" इति । भाग्ये = दैवे भागधेये इति यावत् । **चिरावस्थायिनी** = कल्पान्तस्थायिनी । कविरचनानां कल्पान्तस्थायित्वादिति भावः । **कीर्त्तिः** = यशः । **समुद्रेति**—समुद्रस्य सागरस्य कल्लोलानां वीचीनामाघातः ठात्करणं तत्सहं यशः अर्थात् समुद्रान्तव्यापिनी कीर्त्तिः । स एव अस्मान् **आद्रियते** = सत्करोति । "**न वयम्**" इति । द्विजिह्वान् इत्यन्तमिदं

---

* मालती शिरसि जृम्भणं मुखे
चन्दनं वपुषि कुङ्कुमाऽविलम् ।
वक्षसि प्रियतमा मदालसा
स्वर्ग एष परिशिष्ट आगमः ॥ ( शृङ्गारशतके )

† 'मुनीन्द्रः सुगतः शाक्यो मुनिरद्वयवाद्यपि' इति ( वैजयन्ती ) ।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते ॥ इति ॥
( श्री० भगवद्गीता )

‡ क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥
इत्यादि शान्तरसकविताम् ।

गद्यम्—**उपमा**लङ्कारप्रधानम् । **मीनाः**=मत्स्याः **पीनाः**=स्थूला तानिवेत्यर्थः । **इभाः** = गजाः । **तुन्दिभाः** = वृद्धा नाभिस्तुन्दिः सा एषामस्तीति तुन्दिभाः = तान् स्थूलोदरान् इत्यर्थः । **तुन्दिवलिभटेर्भः** (५ । २ । १३९) इति सूत्रेण तुन्दिशब्दान्मत्वर्थीयो **भः** प्रत्ययः । **भेकाः** = मण्डूकाः **निर्विवेकाः** = विचारशून्याः ये कूपमेव समुद्रं मन्वते अल्पप्रज्ञा इति प्रतीतिः । **वृषदंशकाः** = मार्जाराः यथा ते घातं लगयित्वा ( आत्मानं गोपायित्वा ) आखेटं घ्नन्ति तद्वत् कपटेन हिंसाकर्त्तारः तान् कपटहिंसकान् । **काकाः** = करटाः । आस्वादितो रसितः दुर्विपाको मलं यैः तान् । **वलीमुखाः** = वानराः । यथा ते चपलमुखा भवन्ति एवमेव ये ऽनवस्थितमर्यादाः अस्थिरवाच इत्यत्र तात्पर्यं तान् । **शृगालाः** = फेरवाः । कलिता धृता धूर्तताया माला परम्परा यैः तान् । **द्विजिह्वाः** = सर्पाः सूचकाश्च । द्वे जिह्वे येषाम् अर्थात् येषामेकाऽव्यभिचारिणी वाणी नास्ति तान् । **सजीवानि**वोपवर्हान् = प्राणवन्ति उपधानानीव इत्युत्प्रेक्षा एतेन भोगलम्पटत्वं स्थूलकायत्वञ्च व्यज्यते । 'उपधानन्तूपवर्हः' इत्यमरः ।

पृ० ११७ । **आत्मस्तुति**मात्ररूचीन् = आत्मस्तुतिमात्रे 'त्वं कुवेरोऽसि, वरुणोऽसि' एवं स्तवनमात्रे ( केवलं स्तुतावेव ) रुचिरिच्छा येषां तान् । **मूर्त्तिमत** = इति—देहधारिण इत्यर्थः । **गुणीति**—गुणिनां कलाविदां गुणाः तेषां ग्रहणे = ज्ञानेऽसमर्थान् । **मिथ्यामोदरतान्** = सङ्कल्पकल्पितानन्दभाजः । **वाराङ्गनेति**—वाराङ्गनाः = वेश्याः तासां व्रातस्य समूहस्य यश्चरणपाताघातः = ( कामवशीकरणमन्त्रफलभूता ) पादाहतिः तत्सहान् पण्यस्त्रीरतिलोलुपानित्यर्थः । **मद्यकीटान्** = अतिसुरापानकारिण इत्यर्थः ।

**रसिकान्तरम्** = अन्यं कञ्चन * रसविदम् अरसिकजनेन सह वार्त्तालापादिकरणमप्ययुक्तमिति भावः । **लालाटिकः** = प्रभोर्भालदर्शी सेवक इत्यर्थः । **सञ्ज्ञायां ललाटकुक्कुट्यौ पश्यति** ( ४ । ४ । ४६ ) इति सूत्रेण पश्यत्यर्थे ठञ् ।

द्वारमार्गेण मन्दिरं प्रविश्य प्रदक्षिणच्छलेन इत्यन्तेन गद्येन शिवप्रतिमादर्शनविधिर्वर्णितः । **आगन्तुकम्** = तमेवातिथिं कविम् । आगच्छतीति

---

* उक्तञ्च—मदीयकविकल्पलतिकायाम्—

**अरसिकजनभाषणतो रसिकजनैः साकमपि वरं कलहः ।**
**लम्बकुचालिङ्गनतो लकुचकुचापादताडनं श्रेयः ॥**

**आगन्तुः** । **सितनिगमि**मसिसच्यविधाञ्क्रुशिभ्यस्तुन्' ( ३०१ ) इत्यौणादिकस्तुन् । आगन्तुरेव 'आगन्तुकः' । 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः ।

पृ० ११८ । **उदतीरत्**=उत्तरमदात् । **आर्पयत्** । दत्तवान् । 'आर्पयत्' इति—**ऋ** गतिप्रापणयोः । **ऋ** गतौ । इति द्वयोरपि धात्वोर्णौ लङि रूपम् । **अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ**' ( ७ । ३ । ३६ ) इति णौ परे पुगागमः ।

पृ० ११९ । गजानां **विंशतिः** इति । विंशतिर्गजाः इत्यर्थः । **विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः**=विंशत्याद्याः सर्वा एव सङ्ख्येये सङ्ख्यायाञ्च नित्यमेकवचनान्ता एव वर्त्तन्ते इत्यमरप्रामाण्यात् 'विंशतिर्गजाः गजानां विंशतिः' इत्युभयथाऽपि वाक्यम् । प्रपञ्चितञ्चैतदस्माभिरन्यत्र ।

"**अथ**" इति कथान्तरमवतारयति । **शास्तिखानस्य**=दिल्लीश्वरप्रेषितसेनापतेः । **अस्तमिते** इति सायङ्कालवर्णनमारभते । **मरीचिमालिनि**=सूर्ये । **हरित्सु**=दिक्षु । **चमत्कुर्वत्सु** नक्षत्रेषु=द्युतिं प्रसारयत्सु तारागणेष्वित्यर्थः। **शिवेति** । **अध्युषितचरस्य**=पूर्वमध्युषितस्य । **महाप्रासादस्य**—महीयसो राजमन्दिरस्य । 'प्रासादो देवभूभुजाम्' इत्यमरः । **अट्टालिकायाम्**=तलिन्याम् 'अटारी' इति प्रसिद्धायाम् । 'तलिन्यट्टालिके समे' इति ( वैजयन्ती ) । **पर्यवातिष्ठन्त**=परिवार्य स्थिता अभूवन् । **दीपमाला**=दीपराजिः । **चकास्ति**=दीप्यते । **प्रस्फुटदिति**—प्रस्फुटतां=विकसतां अतिमुक्तककुसुमानां माधवीपुष्पाणां सौरभं हृद्यं गन्धम् । **आदाय**=गृहीत्वा । **उपधानम्**=उपबर्हम् । **सम्मुखेति**=पुरःस्थापितं यत् रत्नैर्मणिभिर्जटितं खचितं धूमपानयन्त्रम् 'हुक्का' इत्याख्यं तस्य नलिकाम्=नडिकाम् । हस्ते=पाणौ दधत् कुर्वन् । **यूथिकेति**—यूथिकायाः कोरकाणां कलिकानां पंक्तिभिः राजिभिः परिवेष्टितायाः=व्याप्ताया नलिकायाः अग्रतः=पुरोभागात् । **सगुडगुडाशब्दम्**=गुडगुडेतिशब्दानुकृतिः तत्सहितम् । **ताम्रकधूमम्**=तमाखुधूमम् । **आकर्षन्**=आसञ्जयन् । **पार्श्वस्थेति**—पार्श्वस्थः समीपे स्थितो यस्ताम्बूलवाहकः तस्य हस्तात् वीटिकाम्=वीटिम् । **उशीरेति**=उशीरस्य नलदस्य जलेन सिक्तैर्व्यजनवातैः **वीज्यमानः**=सेव्यमानः । **परितः** इति—परितः=समन्ततः संस्थापितानि यानि तोयभाजनानि=पानीयपात्राणि

तत्स्थकुसुमस्तवकैः = पुष्पगच्छैः 'गुलदस्ता' इति ख्यातैः **सुरभीक्रियमाणः** = तेषां सौरभेण व्याप्तीक्रियमाणः । **कार्यवाहेण** = अनुचरेण ।

**पृ० १२० ॥ प्रतीति**—शृङ्गाटकं शृङ्गाटकं प्रतीति प्रतिशृङ्गाटकम् । शृङ्गाटकमात्रमभिव्याप्येत्यर्थः । **अव्ययं विभक्तिसमीप**—' ( २ । १ । ६ ) इति सूत्रेण यथाऽर्थे वीप्सायामव्ययीभावसमासः । एवमेव—' प्रतिविपणि ' इत्यादौ ज्ञेयम् । **शृङ्गाटकम्** = चतुष्पथम् । **विपणिः** = पण्यवीथिका । **गोपुरम्** = पुरद्वारम् । **पल्लिः** = ग्रामटिका । **दोधूयन्ते** = अत्यन्तमेजन्ते । **विजयपताकाः** = विजयध्वजाः । **रुष्टतमसोदर्यः** = रुस्तमसहोदरोऽपि महाबलशाल्यपीत्यत्र तात्पर्यम् । **गोपुरावग्रहणीम्** = पुरद्वारन्तु गोपुरम् = तस्य अवग्रहणीम् = देहलीमपि । **पदा** = चरणेन । **स्प्रष्टुम्** = * छुपितुम् । **उल्लंघितुम्** = अतिक्रमितुम् । **उद्वाहिकेति**—जन्यायात्रार्थमित्यर्थः । **प्रति प्रत्यूष** मित्यादि पूर्ववदव्ययीभावसमासः ।

† **प्रत्यस्तमनवेलम्** = प्रत्यस्तकालम् । **ध्वन्यन्तरेति**—अन्यध्वनितिरोधानप्रतिभटा इत्यर्थः । " नभो मण्डलं तरङ्गयन्ति " इत्येन न्यायसिद्धान्तः सूचितः आकाशे वीचितरङ्गन्यायेन शब्दोत्पत्तेः स्वीकारात् । ‡ **उदूढभ्राष्ट्राः** = उज्जटभ्राष्ट्रा इव । **दुःखेति**—दुःखेन अस्मत्कृतपराजयप्राप्तकष्टेन दन्दह्यमानम् = अतिशयेन दग्धं हृदयं येषां ते महाराष्ट्राः ।

**पृ० १२१ ॥ पुष्परथाः**=भ्रमणार्थं यानानि । ' असौ पुष्परथश्चक्रयानं न समराय यत् ' इति ( अमरः ) । **रथ्यासु** = प्रतोलीषु । **वीटिकारागेति** । वीटिका = ताम्बूलवीटी इति ग्राह्यम् तस्या रागेण रञ्जिता अधरा येषां ते ।

---

* **छुप्** स्पर्शे । तौदादिकः ।

† अन्यते इति अनः = गतिरित्यर्थः । ' अन ' धातोर्भावे अप् । अस्तस्य ( सूर्यादेः ) अनो गतिरिति **अस्तमनः** । उक्तञ्च—

**तिरोधानञ्च यत्रैति तदेवास्तमनं रवेः ।**
**नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ॥ इति** (ज्यौतिषे)

‡ भ्राष्ट्रः = अम्बरीषम् । ' क्लीबेऽम्बरीषं भ्राष्ट्र ' इत्यमरः । **भ्रस्ज** पाके अस्मात् **भ्रस्जिगमिनमि** '—( ४ । १६० ) इत्यौणादिकः ष्ट्रन् प्रत्ययो वृद्धिश्च । भृज्ज्यतेऽत्र धान्यादि ।

**उत्तरीयाणि** = प्रावरणानि । नागरङ्गाणि = फलविशेषाः । **रम्भाः** = कदल्यः । **मालिकाः** = पुष्पादिरचिताः । **परिमलम्** = सौरभं द्रव्यम् । " कुतश्चित् वाराङ्गनाः नवयुवकमृगान् पाशयन्ति " इति सम्बन्धः । **आकुञ्चिततिरस्करिणीषु**=किञ्चिद् मुद्रा जवनिका यासां तास्वित्यर्थः । **अट्टालिकागवाक्षिकासु**= हर्म्यवर्त्तिचन्द्रशालादिजालेषु । **प्रसाधितकेशाः**=कृतकङ्कतिकपट्टिकाः। **अञ्जनेति**— अञ्जनेन कज्जलेन रञ्जितानि सज्जितानि नयनानाञ्चलानि नेत्रप्रान्तभागा यासां ताः । **सुवर्णेति**—सुवर्णकुसुमैः = हिरण्मयपुष्पैः अङ्कितानि जटितानि यानि पट्टाम्बराणि कौशेयवस्त्राणि तेषां धराः = धारयित्र्यः । **मदविघूर्णितलोचनाः** = मदेन विघूर्णितानि नेत्रानि लोचनानि यासां ताः । **उद्भिन्नयौवनाः** = उत्स्फुटिततारुण्याः । **उन्नतकुचाः** = उन्मुकुलितोरोजाः । एतेन कुचानां काठिन्यं व्यज्यते । **मसृणकपोलाः** = स्निग्धगण्डस्थलाः । **कपोतकण्ठ्यः** = पारावतकन्धराः । **वाराङ्गनाः** = पण्यस्त्रियः **कटाक्षेति**—कटाक्षजालमेव वागुराः = मृगबन्धनानि ताभिः । **नवयुवकमृगान्** = नवतरुणहरिणान् । रूपकम् । **पाशयन्ति** = बन्धयन्ति वशीकुर्वन्तीति यावत् । **प्रकटितेति**—प्रकटितः स्फुटीकृतः शिववियोगस्य शिवराजस्य विषादः क्लेशो येन सः **बलात्** = प्रसह्यापि **विषादः** = विषाशी—क्रियेत असौ हन्येतेत्यर्थः ।

**पृ० १२३ । चिचर्वयिषुः** = चर्वयितुमिच्छुः **क्रव्यादेभ्यः** = मांसभक्षकेभ्यः सिंहादिभ्यः । ***शतघ्न्यः** = तोफाः । **सोत्प्रासम्** = सोपहासम् ।

**पृ० १२५ । उन्दुरेभ्यः**=मूषकेभ्यः । **कोष्णेति**—कोष्णः=कवोष्णो मन्दोष्णो यः किरातस्वरसः=भूनिम्बकषायः तमिव **क्रोधमवगीर्य**=कोपं पीत्वा। **चाटुकाराः**=नर्मवचांसि । **विजिग्यिरे** विपूर्वकात् 'जि' धातोः **विपराभ्यां जेः** ( १ । ३ । १९ ) इत्यात्मनेपदम् । 'पादांगुष्ठशिरीषाग्निमौलिमवाप्स्यति' इति **लोकोक्तिः** । ( प्रकृते ) एकैकदुर्गजयोद्योगो वृथा तस्मिन् कृते सति असाकं पराजयः' महाराष्ट्रा एव च जीयेरन्निति भावः ।

**पृ० १२६ ।** अत्यन्तं **सप्रतिभः**=महानिपुणः । **करौ** सम्पुटीकृत्य=बद्धाञ्जलिर्भूत्वेत्यर्थः । **पशुमारं** मारयिष्यन्ति=पशुवत् हनिष्यन्ति। **उपमाने कर्मणि च** ( ३ । ४ । ४५ ) इति सूत्रेण णमुल् । पशुमिव मारयिष्यन्तीति विग्रहः ।

---

* **वैजयन्तीकोषे** तु—" **शतघ्नी** तु चतुस्ताला लोहकण्टकसञ्चिता " इत्युक्तम् ।

**उच्चावचोपत्यकासु**=नानाविधासु अद्रेरासन्नासु भूमिषु । **गण्डशैलेति**—गण्डशैलमयानि यानि निबिडानि घनानि अरण्यानि एव कुज्झटिका दुरवगाहत्वात् तासु । **दुरूहेति**—दुरूहौ लब्धुमशक्यौ आरोहाऽवरोहौ यत्र तादृशीषु पद्धतिषु पादमार्गेषु । **सानुषु**=पर्वतशृङ्गेषु । '**शास्ति**खानस्तु समुवाच' इत्यन्वयः । **कातरेति**—कातरतरः=अत्यन्तं कातरः दुर्बलः अन्तरात्मा हृदयं यस्य सः । **कन्दरिकन्दरेषु**=पर्वतगुहासु । **शक्तिप्रोतान्**=शक्त्याख्यशस्त्रविद्धान् । **सक्ष्वेडम्**=ससिंहगर्जनम् ।

**पृ० १२७ । * उद्घातिनीषु**=पादस्खलनयोग्यासु **उपत्यकासु**=पर्वतासन्नभूमिषु । '**उन्दुर** इव कुहरेषु निविशन्ते' इत्यत्र **उपमा**लङ्कारः । 'निविशन्ते' इत्यत्र '**नेर्विशः**' ( १ । ३ । १७ ) इत्यनेन आत्मनपदम् । एवमेव 'मर्कट इव' 'पक्षिण इव' अत्रापि—**उपमैव** । **मर्कटाः**=वानराः । **सानुमत्सानूनि**=अद्रिशृङ्गाणि । 'उड्डीय इव' इत्यत्रोत्प्रेक्षा । अत्र चेतनेषु पक्षिषु स्थितस्य विहायसागमनात्मकस्य उड्डयनरूपस्य धर्मस्य सादृश्यमहिम्ना महाराष्ट्रेषु सम्भाव्यमानत्वात् । शशका इवेत्युपमा । **सिंहदुर्ग** एवाश्रयणीयः= सिंहदुर्गोपर्य्येव आक्रमणं विधातव्यम् । **साहसिकः** । † साहसेन बलकर्मणा जयति इति साहसिकः । '**तेन दीव्यति खनति जयति जितम्**' ( ४ । ४ । २ ) इति ठक् ।

**पृ० १२८ । ताम्बूलिकेति**—ताम्बूलं पण्यमस्य । **तदस्य पण्यम्** (४ । ४ । ५१) इति ठक् । उपचारात् ताम्बूलदाने नियुक्तोऽपि ताम्बूलिकः ।

---

* **शाकुन्तलेऽपि**—'आयुष्मन् उद्घातिनी भूमिरिति'—आयातम् 'उद्घातः कथ्यते पादस्खलने समुपक्रमे' इति **विश्वः** ।

† **सहसि** बले भवम् साहसम् । **तत्र भवः** ( ४ । ३ । ५३ ) इत्यण् । अथवा सहसा निर्वृत्तम् । **तेन निर्वृत्तम्** ( ४ । २ । ६८ ) इत्यण् । 'सहसा क्रियते यत्तु तत्साहसमुदाहृतम्' इति **स्मृतिः** । तच्च पञ्चविधम्—

**मनुष्यमारणं स्तेयं परदाराभिमर्षणम् ।**
**पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतम् ॥**

'साहसोऽग्निभेदोऽपि—पाकयज्ञे तु साहस' इत्युक्तेः प्रकृते साहसं बलकर्मेति दिक् ।

किञ्चित् **खर्वाकृतिम्** = ईषद्वामनम् **अपीच्यदर्शनम्** = सुन्दर-दर्शनम् । **अवास्थिषत** = स्थिता बभूवुः ।

**पृ० १३० । जम्बुकस्य** = शृगालस्य **बुभुक्षितेति** = बुभुक्षितः = क्षुधार्त्तो यः केसरी महासिंहः तस्य खरनखरैः तीक्ष्णकरजैः आक्रान्तस्य उरणस्य मेषस्य जिघृक्षा = गृहीतुमिच्छा (यथा) विफला तथैव शिवस्यापि। **न कुर्यादिति-अप्रस्तुतप्रशंसालङ्कारः** । तथाहि–'अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया' इति जयदेवोक्त–लक्षणेन प्रकृते ( प्रस्तुतायां शास्तिखानस्तुता ) चातकमेघादीनां वर्णनं प्रस्तुतशास्तिखानस्तुतिपर्यवसायीति घट्यते । **दण्डि**मते तु–'अप्रस्तुतस्तुत्या प्रस्तुतानिन्दाबोधनमप्रस्तुतप्रशंसा' इति फलति तदत्रायुक्तमिव । प्रपञ्चितश्चायमर्थोऽस्माभिः काव्यादर्शस्य द्वितीयपरिच्छेदे **कुसुमप्रतिमायाम्** ।

**पृ० १३२ शोणितेति**–शोणितस्य रुधिरस्य शोणधाराभिः रक्तासारै रित्यर्थः । न वयं शोणितशोणां पृथ्वीं कर्त्तुं कामयामहे इत्यर्थः । **सन्धित्सते** = सन्धिकर्त्तुमिच्छति । **विवित्सति** = वेत्तुमिच्छति । आदेक्ष्यते = आदेशः करिष्यते ।

**पृ० १३३ । संवादिनी**=सदृशी । **आकृतिः**=मूर्त्तिः । **अनुकारिणी** तुल्या वाक् । **संशयानः**=संशयमापन्नः । **मुकुरेति**–मुकुरचित्रपट्टादीनां द्वन्द्वः । निश्रेणीः = अधिरोहणीः । **रक्षके** = प्राहरिके रक्षिपुरुषे पृष्टवति सतीत्यर्थः । **अङ्गारप्रतिमाभ्याम्**=अङ्गारतुल्याभ्यां क्रोधेन शोणिताभ्यामित्यर्थः । **घण्टा-पथेन** = राजमार्गेण । **यातायातम्** = गतागतम् ।

इति ( नूतन ) शिवराजविजयपताकायां पञ्चमो निश्वासः ।



* ॐ *

# षष्ठो निश्वासः ।



**मतिरेव बलाद्गरीयसी मतिहीना बलिनोऽपि दुर्बलाः ।**
**शिववीरजयें स्फुरन् *ध्वजो मतिमत्ता-मह-मान-मापकः ॥१॥**

महादेव-पण्डितरूपेण शिववीरस्य महाराजयोधपुराधीश्वर**जसवन्तसिंह**-वशीकरणप्रभावं दिदर्शयिषुः कथोपक्षेपकरीत्या पञ्चतन्त्रप्रतीकमुद्धरति—'**बुद्धिर्यस्य**'—इति ।

**पृ० १३५ ॥** † **नीतिनिष्णातः**=राजनीतिकुशलः । **निनदीभ्यां स्नातेः कौशले** ( ८ । ३ । ८९ ) इति सूत्रेण स्नातेः सस्य षः कौशले गम्ये । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातपण्डिताः' इति ( अमरः ) । **वीरवरः**=वीराग्रणीः । **परम ‡ साहसः**=महाबली । **विविधे**ति, **विहिते**ति—एतेन तस्य शिवविषये परमाप्तता व्यज्यते । **खड्गेति**—खड्गः = असिः तस्य चालनविद्या = वामाऽवामपार्श्वाभ्यां अग्रपश्चाभ्याञ्च शत्रोरुपरि मारणप्रकारविज्ञानं तत्र दक्षः । **शत्रुभवनम्**=शास्तिखानाधिष्ठितस्थानम् । **प्रविविक्षुः**=प्रवेष्टुमिच्छुः । **तदनुमत्या**=शिवानुज्ञया । **गृहीते**ति—गृहीतः = कृतो यवनभिक्षोः म्लेच्छयाचकस्य 'पीर' इति प्रसिद्धस्य वेषो नेपथ्यं येन सः । **नीले**ति—

---

* 'न्यायाचारयमाहिंसास्वक्षी मेढ्राङ्कयोर्ध्वजः' इति ( वैजयन्ती ) ।

† नीयन्ते=उन्नीयन्ते अनया अर्था इति **नीतिः** । नीधातोः—स्त्रियां क्तिन् शुक्राचार्यादिप्रणीतं शास्त्रम् । नीतिविषये भर्तृहरिणाऽप्युक्तम्—

**सत्यानृता च परुषा प्रियवादिनी च**
**हिंस्रा दयालुरपि चाऽर्थपरा वदान्या ।**
**नित्यव्यया प्रचुरनित्यधनागमा च**
**वाराङ्गनेव नृपनीतिरनेकरूपा** ॥ इति ॥

‡ साहसं बलकर्म । परमं साहसं यस्य सः । 'दण्डो दमः साहसोऽस्त्री' इति ( वैजयन्ती ) । सहसि बले भवम् । 'तत्र भवः' ( ४ । ३ । ५२ ) इत्यण् ।

* नीलनिचोलस्य नील्या रक्तस्य प्रच्छदपटस्य यदञ्चलं कोणविशेषः तस्य अधः = अधोभागे तिरोहिताः = छुपिताः तीक्ष्णतरा = कठोरतरा छुरिका कृपाणिका यस्य येन वा स तथाविधः । **कटीति**—कटिपर्यन्तम् = श्रोणीपर्यन्तं विलम्बमानाः दोलायमाना मेचकाः कृष्णवर्णाः कुञ्चिताः वलिताः केशाः शिरोरुहाः यस्य स तादृशः । **हरितपरिधानः** = हरितवर्णवासाः । **तीव्रतमेति**—तीव्रतमः अत्यन्तं कठोरः शङ्कूकृतः = कीलकीकृतो दण्डो यस्य, † नारङ्गाकृति = नारङ्गाकारं मुखं यस्य, विलम्बितानि विविधानि सुसूक्ष्माणि शृङ्खलाखण्डानि यत्र, एवंभूतं—झणज्झणद्ध्वनिना रुचिरं श्रोतृमनोरञ्जकं 'वाद्यमेकं वादयन् भिक्षाटनार्थं तत्पश्चादेव प्रचलित' इत्यन्वयः ।

**निरोधः** = प्रतिरोधनम् । **गोपुराध्यक्षेण** = पुरद्वारमहाप्राहरिकेण । **किञ्चिदालप्येति**—विश्वासधरणोक्तिः । कानिचित् **छन्दांसि** = बैत–गज़ल-प्रभृतीनि मुसलमानकवितासु प्रधानभूतानि **आम्रेडयन्** = पुनः पुनरुच्चारयन् । **कर्हिचिदिति**—‡ प्रपदे पादाग्रे पातिता दृष्टिर्येन सः । 'पादाग्रं प्रपदम्' इति ( अभिधानचिन्तामणिः ) 'निरपेक्ष इव' इत्यादि परैरज्ञायमानत्वं व्यनक्ति ।

**पृ० १३६ । द्वारपालानाम्** = दौवारिकाणाम् । **रक्षकाणाम्** = रक्षिपुरुषाणां प्राहरिकाणाम् । तानि तानि **निवेशनानि** = निवेशकोष्ठकानि । ईक्षमाणः = पश्यन् । **दिदृक्षुः** = द्रष्टुमिच्छुः । **पुष्पवाटिकायाम्** = गृहोपवने । "प्रथमत" इत्यादिसन्दर्भेण भिक्षोश्चर्यां वर्णयति । "सघना हरिता लतावेष्टितद्रुमावलिः, इति पुष्पवाटिकाया विशेषणानि ज्ञेयानि । यस्यां पुष्पवाटिकायां प्रविष्टः—सा **सघना** = सान्द्रा निविडेति यावत् । **हरिता** अशुष्का । लताभिः वल्लीभिः वेष्टिता वलयिता द्रुमाणां वृक्षाणाम् आवलिः राजिर्यत्र । **द्वितीयत** इत्यन्यं हेतुमाह—**तमोबहुला** = अन्धकारप्रचुरा **तमी** = रात्रिः । "तृतीयत" इत्यपरं कारणमाह—**नीलनिचोलः** = कृष्णप्रच्छदः । **जटिलः** = जटी । **पिच्छादीलच्** । (५ । २ १००)। इति हेतोः=वीक्षमाणैः=पश्यद्भिरपि **अवीक्ष्यमाणः** = अनालोक्यमानः । **सप्रसादम्** सहर्षम् ‡ **अचकथत्** =

---

* 'नील्या अन्' ( वा० ४ । २ । २ ) इति नीलीशब्दात् रक्तार्थेऽन् ।

† 'नारङ्गो नागरङ्गःस्यात् त्वक्सुगन्धो मुखप्रियः' इति **निघण्टुः** । अयं मधुराम्लः, दीपनः, वातनाशकश्चेति ।

‡ प्राप्नोऽग्रपदस्य इति प्रपदम् ।

अगादीत् । **मन्दुरासु** = वाजिशालासु । **लोहदण्डप्राकारः** = आयसदण्डवृतिः । **आच्छन्नशरीराः** = गुप्तदेहाः । **परैः** = शत्रुभिः । **अलक्ष्यमाणाः** = अज्ञायमानाः । **गवाक्षाः** = जालानि **उन्मुद्रिताः**=अपिहिता एव **उपेक्ष्यन्ते** उपेक्षाविषयीक्रियन्ते । **निर्निस्त्रिंशाः** = त्यक्तासयः । **निश्चर्माणः** = परित्यक्तफलकाः । "फलकोऽस्त्री फलं चर्म" इति ( अमरः ) । "ढाल" इति भाषा । **पानैः** = सुरागोष्ठीभिरित्यर्थः । "शयनै" रित्यनेन रतिविलासो व्यङ्ग्यः । सुरापाने तस्यावश्यसत्त्वात् ।

**पृ० १३७ । व्यत्येति**=अपसरति । **परकीयः**=परस्याऽयम् । गहाद्यन्तर्गतगणसूत्रेण परस्य कुक् छश्च । **आत्मीयः** = आत्मनोऽयम् । * **गहादित्वात्** ( ४ । २ । १३८ ) छप्रत्ययः । **परावृत्त्य** = परावर्त्तनां विधाय । **प्रधानद्वारम्** = महाद्वारम् । मुखमण्डले-**दत्तदृष्टिः** = स्थगितनेत्रः । **अनिमेषपातम्** = निर्निमेषमित्यर्थः । क्रियाविशेषणमेतत् । **अस्थात्** = निवृत्तगतिरभूत् । स्थाधातोर्लुङि रूपम् । "गातिस्था"-( २ । ४ ७७ ) इति सिचोलुक् । **द्विस्त्रिरिति**—द्विवारं त्रिवारं वेत्यर्थः । **द्वित्रिचतुर्भ्यः सुच्** ( ५ । ४ १८ ) इति सुच् । "**सतु** तूष्णीकः सन्तस्थे" इत्यन्वयः । **घण्टापथस्य** = राजमार्गस्य । **प्रान्तस्थायाम्** = समीपवर्त्तिन्याम् । **उन्नतवेदिकायाम्** = उच्चायां परिष्कृतभूमौ । **पातितोभयजानु** = पातितौ उभयजानू यस्यां क्रियायां तद्यथा स्यात् तथेति क्रियाविशेषणम् ।

**विचाराकूपारस्य** = विचार—( चिन्तन ) समुद्रस्य । **तरङ्गाः** = लहर्यः । **बहुभङ्गम्** = नानाप्रकारं परिणामम् । **आकलयन्** = प्रादुरभवन् ।

"**अहह**—इत्यारभ्य भगवन् ! **पाहि**" इत्यन्तं गद्यं ( १४२ पृष्ठ० ) करुणरसपरिपूर्णम् । **दुर्भाग्यमयः** = दुरदृष्टप्रचुरः । **गरुडाङ्किताः** = पक्षिराजचिह्निताः । **महाध्वजाः** = महत्यः पताकाः । **समुद्धूननैः** = सञ्चलनैः हिल्लोलनैरित्यर्थः । **गगनेति**—गगनतले आकाशमण्डले उद्धूयमानं प्रवान्तं पवनं = समीरणम् **अपावयन्** = पवित्रमकार्षुः । **तत्र** = गगनतले । **भारतेति**—भारताभिजनस्य भारतदेशस्य सघनाः सान्द्राः कलङ्का इव **नीलध्वजाः**= नील्या रक्ता ध्वजाः कृष्णाः पताकाः ( यवनैरारोपिताः ) **समुद्धूयन्ते** = दोलायन्ते इत्यर्थः । अत्र—यवनारोपितस्वभावस्थिता नीलध्वजाः भारतदेशीयगाढकलङ्क

---

* **गहादिराकृतिगणः** ।

( पाप ) रूपत्वेनोत्प्रेक्षिताः । यत्र = भारताभिजने कोङ्कणदेशे वा ।

**कोटीति**—कोटिजन्मभिः अर्जितं सञ्चितं यत्—* महापातकं ब्रह्महत्यादि तदेव दीर्घदावः महाकान्तारः तस्य दावानलः ( भस्मीकरणत्वसादृश्येन ) वन्हिः तस्य ज्वालामालाभिः = अर्चिषां ततिभिरिव **हरिनाम**घोषणाभिः = भगवन्नामोच्चारणैः **व्यापूर्यत** = भरिताऽभूत्, **वसुधा** = पृथिवी । तत्र = कोङ्कणदेशे **कर्णकषायाः** = कर्णयोः श्रोत्रयोः कटुरूपाः श्रोत्रवेधनकराः श्रवणानर्हा इति यावत् । **चीत्कारमयाः** = 'बाँग' इति प्रसिद्धाः । **हरीति**— हरिः=विष्णुः । हरः = महादेवः । ( उपलक्षणञ्चैतत् सर्वेषां देवानाम् ) तेषां निन्दानादाः = गर्हणारूपा घोषणाः **कर्णौ** = श्रुती स्फोटयन्ति ।

**पृ० १३८ ॥ द्राक्षा** = गोस्तनी । रम्भा = कदली । आम्राणि = चूत ( रसाल ) फलानि । **नारिकेलानि** = * लाङ्गलीफलानि । **दाडिम्बानि** = † दन्तबीजफलानि । ‡ **बीजपूराणि** = मातुलुङ्गाः । § **जम्बीराणि** = दन्तशठाः ¶ **लिकुचानि** = लकुचफलानि । क्षुद्रपनसफलानीत्यर्थः । **पनसानि** = कण्टकिफलानि 'कटहर' इति प्रसिद्धानि । **व्यक्रीयन्त** = विनिमयितानि अक्रियन्त । **वर्त्तिकाः**=इत्याद्याः पक्षिजातयः। **विशालतिलकाः** = विशालं शोभि तिलकं येषां ते । **कलितेति**—कलिताः धृताः रुद्राक्ष—तुलसी—

---

*** ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।**
**महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ इति ॥**
**( मनु० ११ । ७४ )**

स्तेयं = ब्राह्मणसुवर्णहरणम् । "ब्राह्मणसुवर्णापहरणं महापातकम्" इत्यापस्तम्बस्मरणात् । सुरापानं = निषिद्धसुरापानम् ।

* 'नारि ( लि ) केरो दृढफलो लाङ्गली कूर्चशीर्षकः' इति ( निघण्टुः ) अस्य गुणाः तत्रैव—

**नारिकेलफलं शीतं दुर्जरं वस्तिशोधनम् ।**
**विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् । १ ॥**

† 'दाडिमः करको दन्तबीजो लोहितपुष्पकः' इति ( निघण्टुः ) ।
‡ 'बीजपूरो मातुलुङ्गो रुचकः फलपूरकः' इति ( निघण्टुः ) ।
§ 'जम्बीरो दन्तशठो जम्भजम्बीरजम्भलाः' इति ( निघण्टुः ) ।
¶ 'लिकुचो लकुचो डहुः' इति ( अमरः ) ।

कमलाक्षमालिका यैस्ते तथोक्ताः। **ऊर्णाकौशेयमात्रवसना**' = ऊर्णा = मेषादिलोम, कौशेयम् = कृमिवसनम्—एतन्मात्राणि वसनानि वासांसि येषां ते पवित्रतरवस्त्रधारिण इत्यर्थः। **भगवदिति**—भगवन्नाम = परमेश्वरनामैव अमृतरसः = सुधारसः तस्य रसेन = आस्वादनेन रसिका = लोलुपा रसवती रसना = जिह्वा येषां ते * परमेश्वरनामस्मरणरता इत्यर्थः। **विहितेति**—विहितं कृतं तीर्थसार्थेषु गङ्गादितीर्थसङ्घेषु चरणं भ्रमणं यैः तादृशाः चरणाः पादा येषां ते तीर्थयात्रापरायणा इत्यर्थः। **स्वोचितेति**—स्वस्य उचितः वेदादिशास्त्रविहितो य † आचारः = सन्ध्यावन्दनादिरूपः = तदुपयोगिबाह्याभ्यन्तरशौचरूपश्च। (आचारहीनं न पुनन्ति वेदाः इत्युक्तेः) तदाचरणमात्रम् तदनुष्ठानमात्रमेव व्यसनं प्रात्यहिकः स्वभावो येषां ते। व्यसनपदानिवेशेन द्यूतमद्यादिव्यसनराहित्यं व्यज्यते **महात्मानः** = भगवद्भक्तिपूर्वत्वेन महान् उच्चो विशाल आत्मा मनो येषां ते। **प्राणम्यन्त** = अभ्यवाचन्त। कर्मणि प्रत्ययः। **महामांसेति**—महामांसस्य = गोमांसस्य ढक्कारैः = उद्गारैः—यैः पूतिगन्धो दुर्गन्धः तस्य सम्बन्धेन अन्धीकृताः पारिपार्श्विकाः = पार्श्ववर्त्तिनो यैः तैः। **चिरेति**—चिरं यज्जलावगाहनं स्नानं (अर्थात् बहुकालपर्यन्तमपि स्नानाभावः) तेन उद्भूतं जातं यन्महामलम् = अतिमलीनता तस्य आवलिभिः राशिभिः मलीमसैः = मलदूषितैः स्नानाद्यभावेनात्यन्त

---

* भगवन्नामस्मरणमाहात्म्यं शास्त्रेषु बहु प्रपञ्चितं, यच्च सर्वथैव श्रद्धेयम्। दिङ्मात्रन्तु निरूपयामः—

> सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैः कृतम्।
> पापराशिं दहत्याशु तूलराशिमिवाऽनलः॥ १॥
> यथाऽग्निरुद्धतशिखः कक्षं दहति साऽनिलः।
> तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥ २॥
> कलावत्राऽपि दोषाढ्ये विषयासक्तमानसः।
> कृत्वाऽपि सकलं पापं गोविन्दं संस्मरञ्शुचिः॥ ३॥

इत्यादि।

† आचारस्य महिमा सस्वरूपः 'सनत्सुजातीये' कुमारधृतराष्ट्रप्रसङ्गे विस्तरेण वर्णितः। तत एव कथेहत्य निरीक्षणीयः। "आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत" इति विष्णु० माहात्म्यमपि।

घृणितैरित्यर्थः । **मद्येति**—**मद्यम्** = सुरा । **स्वेदः** = घर्मः । **निष्ठ्यूतम्** = थूत्कारः । **कर्णकिट्टम्** = कर्णमलम् । **सिंघाणम्** = नासामलम् । **दूषिका** = नेत्रयोर्मलम् । एतेषां द्वन्द्वः । दूषिकान्ता आदिर्यस्य तादृशं यत् विविधम् = नानाप्रकारं मलं तेन लिप्तानि = श्लिष्टानि तथा चिराऽक्षालितानि बहुकालादप्यधौतानि मलिनानि कच्चराणि वसनानि वासांसि येषां तैः। अत्र **बीभत्सो** रसः । **वारबधूनां** = वेश्यानाम् उच्छिष्टभोजिभिः भुक्तावशिष्टभक्षकैः एवंभूतैः दुराचारहतकैः= म्लेच्छैरेव—**अवहेल्यन्ते** = अनाद्रियन्ते । तिरस्कारविशेषद्योतनायैव 'अवधीर्यन्ते तिरस्क्रियन्ते' इत्यर्थपुनरुक्तिर्न दोषावहा । **ताड्यन्ते** = हन्यन्ते । **निःसार्यन्ते** = निःस्थानीक्रियन्ते । **अहह !** = महान् खेद इत्यर्थः ।

**पृ० १३६ । अपरे** चेति—**व्याघ्रेति**—**व्याघ्रवदनग्राणसाहसस्य** = शार्दूलमुखकवलनबलात्कारस्य * सोदर्यं = तुल्यं यत्साहसं = बलकर्म तेनोपबृंहिताः अर्थात् व्याघ्रमुखपाते सत्यपि निर्भया इव वर्त्तमानाः । **कृपाणधारासु इव** = असिधारासु इव । **धावमानाः** = पलायनक्रियां कुर्वाणाः अत्र—**उत्प्रेक्षा**व्यङ्ग्या **अतिशयो**क्तिरपि । **कलिमलमथनानि** = कलिपापविध्वंसकानि । **अधरीकृतेति**—अधरीकृतं न्यक्कृतं सुधाया अमृतस्य माधुर्यं मधुरिमा यैः तानि ।

स्वर्गे स्वपुण्यैः सुधां लब्ध्वा देवभावं गता अपि जीवाः पुनरपि जननीजठरे शेरते "**क्षीणे** पुण्ये मर्त्यलोकं विशन्ति" इत्युक्तेः । भगवन्नामानि पिबन्तस्तु तदभेदभावं गताः पुनर्न कदापि संसारमुखं प्रेक्षन्ते इति युक्तमेव भगवन्नाम्नां सुधाधरीकरणमिति भावः । "भगवन्नामानि" इत्यस्य विशेषणम् । **उच्चारयन्तः** = रटन्तः । **कलितेति**—कलितः कृतः परमपवित्रः अतिपावनः वेषः नेपथ्यं यैः । महासभ्यवेषा इत्यर्थः । **वाचाटानाम्** = कुत्सितं भाषमाणानाम् । **आलजाटचौ कुत्सितभाषिणि** ( ५ । २ । १२५ ) इत्याचट् । **अरुन्तदाः** = मर्मवेधिन्यः । अरूंषि तुदन्तीति "अरुन्तुदाः"—**विध्वरुषोस्तुदः** (३।२।३५) इति अरुपकर्मणि उपपदे तुद् धातोः खश् प्रत्ययः । **अरुर्द्विषदजन्तस्य मुम** ( ६ । ३ । ६७ ) इति मुमागमः । "अरुन्तुदस्तु मर्मस्पृक्" इति ( अमरः ) । मुद्रया = **नराणाञ्च** नराधिपः ( गी० १० ) इत्यादिशास्त्रप्रमाणेनेत्यर्थः

---

* **सोदराद्यः** ( ४ । ४ । १०९ ) इति सूत्रेण ताद्धितो यः । "समाने उदरे शयितः स्थित" इति वाच्यार्थः । तुल्यार्थस्तु लक्ष्यः ।

**ग्रहाः** = सूर्याद्याः । **विधिः**=दिष्टम् । **समयः**=कालिरूपः । ***अशुभमयः**= पापप्रचुरः । **अदृष्टम्** = दिष्टम् । † **भवितव्यमेवेति**—निन्दितव्यम् = गर्हणीयम् । भटम्मन्यः=आत्मानं भटं मन्यते इति । **आत्ममाने खश्च** (३।२।८३) इति खश् । वस्तुतस्तु अभट एव भटत्वाभिमानीत्यर्थः । **प्रधानवीरः** = वीराग्रणीः । **पार्श्वग्रहताम्** = पक्षपातिताम् ।

पृ० १४० । **पुण्यनगरनेदीयसि** = पुण्यपुरस्याऽतिसमीपवर्त्तिनि । **प्रका**ण्डभूभागे = विशाले प्रदेशे । **शिबिराणि** = सेनानिवेशान् । **परवन्ताः**= परतन्त्राः । **अवतरामीति** प्रतिज्ञातवानसि—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**
(गी० ४ । ७ ।)

इति प्रतिज्ञामकरोः । **कुत्सिता**ऽभिप्रायेण = व्यभिचारेच्छयेत्यर्थः । ‡ **औरस**प्रजा इव **इत्युपमा** । आत्मजा इवेत्यर्थः । "लुण्ठ्यन्ते घात्यन्ते पात्यन्ते ज्वल्यन्ते च" इत्यत्र **क्रियादीपक**मलङ्कारः । उक्तञ्च प्रकाशकारेण—

**§ सकृद्वृत्तिस्तु धर्मस्य प्रकृताऽप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥**

---

* "तत्प्रकृतवचने मयट्" (५ । ४ । २१) इति मयट । अथवा—अशुभ एव अशुभमयः । चिदेव चिन्मयम् इत्यादिवत् स्वार्थे तत् ।

† उक्तञ्च—

**अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।**
**तदा दुःखैर्नलिप्येरन् नल-राम-युधिष्ठिराः** ॥ इति ॥

‡ वर्णितश्चैषोऽर्थः **रघुवंश**काव्येऽपि—

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः** ॥ इति ।
(इयं हि—आर्याणां सभ्यता सर्वतो मान्याऽभूत् ॥)

§ उपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिः एकवारमेवोपादानं यत्तदेकं **दीपकम्** । कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरित्यपरं दीपकम् ।

पृ० १४१ । "ग्रावाणोऽपि रुदन्ति" इति । सम्बन्धातिशयोक्तिः । व्यामोहः=भ्रान्तिः । गरलन्त्विति । गरलं=विषम् । धूर्जटिना=महादेवेन । मधु=मद्यम् । दानवैः=दनुजैः । आस्वादि=कवलितं पीतमिति यावत् । अत्र—असङ्गतिरलङ्कारः । " कार्यकारणयोर्भिन्नदेशतायामसङ्गति " रिति तल्लक्षणात् । रजतेति—रजतस्य अयं " राजतः " इदमर्थेऽण् । राजतः प्रासादो हर्म्यं यस्य सः । अथवा—प्राणिरजतादिभ्योऽञ् (४।३।१५४) इत्यञ् । रजतस्य विकारो " राजतः " क्षीरस्य सागरो यस्य सः । दन्तिदन्तस्य=गजदन्तस्य पर्यङ्कः पल्यङ्को यस्य सः । कुण्डलितेति । कुण्डलितः=कुण्डलाकारः अनन्तभोगः शेषनागदेहः आभोगोऽधिष्ठानं यस्य सः । वेवेक्षि=पृथक् २ कृत्वा विचारयसि । विजिर् पृथग्भावे । जुहोत्यादिः । लटि मध्यमपुरुषैकवचने रूपम् ।

अगणितेति—अगणितैः असंख्यातैः फणावलीनां फूत्कृतैः वीज्यमानः=सेव्यमान इवेत्युत्प्रेक्षा । विमलेति—विमलं निर्मलं यत् कमलं सरोजं तस्योदरसोदरः=मध्यभागसदृशं सौन्दर्यं ययोः ताभ्याम् । कमलेति—कमलवत् कोमलाभ्यां कमलायाः लक्ष्म्याः करतलाभ्याम् । तस्मिन्नेवेत्युक्तिः अनन्तस्य प्रलयकरणकालीनसामर्थ्यं व्यनक्ति । कोमलतमः=अतिमृदुर्वेषो यस्य सः तस्मिन् शेषे=अनन्ते शेषे=स्वपिषि । अगणितैः—इत्यारभ्य " वेशे शेषे शेषे " इत्यन्तगद्येऽनुप्रासच्छटा " विमलकमलोदर "—" कमलकोमल "— इत्यत्र—पुनरुक्तदोषः । पदार्थपौनरुक्त्यञ्चाऽत्र विमलकमलेतिपदेन योऽर्थोऽभिहितः " कमलकोमले " तिपदेनापि तस्यैवाऽभिधानात्, विशेषाभावाच्च । " तव निद्रया भंक्ष्यते " इति भञ्जो आमर्दने धातुः कर्मणि तङ् । नंक्ष्यते इत्यर्थः । तस्यैव= * पुराणादिप्रसिद्धस्य । महागरलस्य=हालाहलस्य । महामद्यस्य=वारुण्याः । भगिन्या=सहोदरया । क्षीरसमुद्रादेव सर्वेषामुत्पत्तेर्युक्तं सहोदरात्वम् । कनकाङ्गिन्या=सुवर्णाङ्गिन्या गौरवर्णयेत्यर्थः लक्ष्म्याः इत्यर्थः । " इति " इत्येकः पक्षः । पक्षान्तरमाह—पन्नगेति—पन्नगकुलमूलस्य=सर्पवंशप्रसूतेः । शेषनागस्य=अनन्तस्याहेः । गरलावलीढैः=विषाक्तैः । प्रतिरोमकुहरम् रञ्जितः=व्याप्त इत्यर्थः । काञ्चनेति—अस्माभिर्वक्तुं चिन्तितुञ्चाशक्याम् स्वोक्त्या क्षिपति—" किन्तु मैवम् " इति । अनल्पजल्पकल्पनाम्=बहूक्तिरचनाम् । प्रामाणिकानां वचनानि=अत्र=एवं रूपायां तव सत्ताया-

मिति हृदयम् । तानि च * श्रुतिस्मृतिपुराणेतिहासादीनि ।

**पृ० १४२ ॥ " जगदीश्वरोऽसि "** इति महाप्रभुता व्यज्यते । तत एव परं स्वातन्त्र्यम्, तेन वञ्चनानर्हतेत्यादिर्व्यंग्यपरम्परा सहृदयहृदयैकवेद्या । प्रकारान्तरेणोपालभते **तत्किमेति—गजेति**—गजस्य उद्धारार्थं धावनेन स्थगितः= श्रान्तः । **विप्रेति**—ब्रह्महत्याया महालज्जाकरत्वादिति भावः । **चिरन्तनः**= पुरातनोऽनादिः वृद्धो वा वलीभिः पलितो व्याप्तो विग्रहो देहो यस्य स तथाविधः । " **न ज्ञायते** तत्त्वम् "=भगवन्मायायाः दुरूहत्वादिति भावः । उक्तञ्च— **श्रीमद्भागवते** वेदस्तुतौ—क इह नु वेद बताऽवरजन्मलयोऽग्रसरं यत् उदगादृषिर्यमनु देवगणा उभये" इत्यादि ।

" यादृशस्त्वं तादृशमेव **नमस्कुर्मः** " इति । नमस्कारस्य सकलपापसाधरणप्रायश्चित्तत्वात् दुःखस्य पापफलत्वात् तन्निवारणाय भगवति नमस्करणमेवोचितमिति भावः । **भषकैः**=कुक्कुरतुल्यैरमेध्यभक्षणपरायणैः म्लेच्छैरित्यर्थः । **कौमोदकी**=विष्णोर्गदा । कुमोदकः विष्णुः तस्येयम् । " तस्येदम् " ( ) इत्यण् णित्वात् ङीप् । **चापः**=धनुः । **नन्दकः**=खड्गः । **चक्रम्**=सुदर्शनम् । **चंक्रमिष्यते**=अतिशयेन चूर्णयिष्यतीत्यर्थः । **मास्मेति**—" अस्मदपराधान् मास्मार्षीः इत्यन्वयः । माङ्योगेऽडभावः ।

---

श्रुतिस्तावत्—

" विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् " " यतो वा इमानि भूतानि जायन्ते" "योऽस्याध्यक्षः परमे व्योमन् सोऽङ्ग वेद यदि वा न वेद" इत्याद्यनेकशाखीया । **स्मृतिरपि—**

**ततः स्वयम्भूर्भगवान् अव्यक्तो व्यञ्जयन्निदम् ।**
**महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥** इत्यादि ।

**पुराणञ्च—**

**ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।**
**नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ! ॥**

इत्यादि ।

एवं रामायणमहाभारताद्या इतिहासा अपि भगवत्सत्तायां परं प्रमाणम् । **आर्षेयाणां** पुराणेतिहासादिग्रन्थानां स्मृतित्वेऽपि तयोः पृथङ्निर्देशस्तु तत्तत्प्रतिपाद्यविषयप्रधानताख्यापनायेति साम्प्रदायिकं परं रहस्यम् ।

एवम्भावयतः=भावनां कुर्वतः ध्यायत इत्यर्थः । **तस्य**=यवनवेषधारिणो माल्यश्रीकस्य—"अश्रुजलधारा भूतलमाविलंचकार" इत्यन्वयः । प्रथमान्तानि तस्या विशेषणानि । **ध्यान**निष्ठमिव=समाधिलीनमिव । **अध्वन्याः**=पथिकाः । **परितो**ऽवातिष्ठन्त=परिवारितवन्तः ।

अत्र—धर्मादीष्टविध्वंसनपूर्वकभारताभिजनपीडनं † **विभावः** । दैवोपालम्भ-निश्वास-मुखशोषण स्वरभेदवैवर्ण्यप्रभृतिर**नुभावः** । निर्वेदग्लान्याद्याः तत्र २ उपनिबद्धाः (व्यङ्ग्याः) **व्यभिचारिणः** । एतैरभिव्यक्तश्चित्तवैधुर्यलक्षणः शोकः स्थायीभावः सहृदहृदय चर्वणतां गतः **करुणो** रस इति ध्येयम् ।

**पृ० १४३ ॥** "एक ऊचे" इत्यारभ्य "जात" इत्यन्तं स्पष्टम् । "नेत्रे उन्मील्य तानेवापश्यत्" इति सम्बन्धः । **भावना**सहस्रैः = चिन्तनासहस्रैः **येषु** = दुष्टम्लेच्छेषु । **वर्द्धितेति**—वर्द्धितो वृद्धिं गतो महांश्चासावमर्षः महाक्रोधः तस्य ज्वालाभिः अर्चिभिः जटालः व्याप्तः । कीदृशः तान्—**लशुन**गन्धैः = लशुनस्य = रसोनकस्य गन्धो येषु तैःश्वासप्रश्वासैः वमिम् = उद्गीर्णिम्—**लुप्तोत्प्रेक्षा**—वाचकानुपादानात् प्रकृतस्य समेन सम्भाव्यमानत्वात् । **परिपन्थि-पथिकान्** = लुण्टकाध्वनीनान् । **ज्वलदिति**—ज्वलता अङ्गारेण प्रतिमे सदृशे नयने यस्य सः । वाद्यम्—**उत्तोल्य** = उत्थाप्य । **सहुङ्कारम्** = हुङ्कार-शब्दसहितम् । **ताडयितुम्** = तान् हन्तुमिवेत्यर्थः । **उदस्थात्** = उत्तस्थौ । **पर्यप्राक्षीत्** = परिपृच्छामकरोत् । महादेवस्तु **भीत** इव । वस्तुतस्तु न भीतोऽन्तरङ्गत्वात् । **महान्धकारेति** = महता अन्धकारेण तमसा आवृता आच्छन्ना चासौ वीथिः पदवी ताम् । "**वीथि** (थिः) पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः" इति (मेदिनी) । **अयमपि**—म्लेच्छवेषकोमाल्यश्रीकः । **प्रधानमर्गम्** = राजपथम् । **ध्वान्त**मार्गेण = अन्धकाराच्छन्नेनाऽप्रसिद्धेन वर्त्मना । **मुद्रया**ऽनया = उक्तेन व्याजेन । **अनायासेन** = क्लेशं विनेत्यर्थः । **वीथिकातो** वीथिकाम् = पदवीतः पदवीम् । **यवन**यतिम् = म्लेच्छवेषकाभिक्षुम्

---

† धर्मादीष्टनाश आलम्बनविभावः । तत्र मन्दिरादीनां त्रोटनभञ्जनादिकं हिन्दुजनताहननक्रोद्दीपनविभाव इति विशेषः । उक्तञ्च "काव्यानुशासने" आचार्य—**हेमचन्द्रेण**—

"इष्टनाशादिविभावो दैवोपापालम्भाद्यनुभावो दुःखमयो व्यभिचारी शोकः **करुणः**" इति ।

तेन सह **योत्स्यामि**=युक्तो भविष्यामि ।

**पृ० १४४** ॥ कज्जलस्य = अञ्जनस्य । रेणुपटलमिव = धूलिप्रसर इवे* त्युत्प्रेक्षा । **गगनं** मसिमिव वर्षति । अत्राप्युत्प्रेक्षा ।

**परिचितेति**—परिचितं पूर्वानुभूतं सकलं पुण्यनगरस्य मार्गजालं वर्त्म-समूहो येन स तथाविधः । **वीथिकान्तरम्**=अन्यां पदवीमित्यर्थः । **अन्ध-तमसे**=गाढेऽप्यन्धकारे । **पर्यटितुमशकत्** = भ्रमितुं समर्थोऽभूत् । **गोक्षे** = गवाक्षे । **तस्मिन्** इति—"तस्मिन् अन्धतमसे किमपि श्यामश्याममद्राक्षीत्" इत्य-न्वयः । तदेवोत्प्रेक्षया वर्णयति—"**एकत्र**कृतमन्धकारमिव" इत्यादिना । **एकतोऽर्धस्खलितम्**=एकपार्श्वतः अर्ध (स्वस्थान) भ्रष्टम् । **विशीर्यते**= निर्वन्धं वर्तते इत्यर्थः । † **उपानद्** = पादत्राणम् । "अथ पादुका । पादूरुपा-नत् स्त्री" इति (अमरः) । **वेदिका**—इति ‡ वेदिकायाः = वितर्दिकायाः (प्राङ्गणवर्तिनः उपवेशस्थानस्य) प्रान्ते लम्बितात् पादात्, च्युता इति "उपानद्" इत्यस्य विशेषणम् । **लालाभिः** = स्यन्दिनीभिः । "सृणिका स्यन्दिनी लाला" इति (अमरः) । **धूलिधूसरितानि** रजःस्नातानि । **नीलवसनानि** = नील्या-रक्तानि वासांसि **स्वेदैः** = धर्मजलैः **क्लिद्यन्ते** = आर्द्रीभवन्ति । यामिकजन-स्वापजातिरियम् ।

**पृ० १४५** । **वणिग्वीथौ** = वणिजामावसथे । **दत्तकर्णः** = स्तब्ध-श्रवणेन्द्रियः । **अवधाय** = सावधानो भूत्वेत्यर्थः । **संशयितवान्** = संशय-मापेदे । **अद्राक्षीत्** = अवालोकिष्ट । **कक्षिगुटिकायाम्** = कक्षागुप्तौ । **उष्णीषिकाम्** = शिरोवेष्टनिकाम् । **गवाक्षिकायाम्** = वातायनिकायाम् । **निविडान्धकारे** = घने तमसि । **नैजः** = स्वीयः **भ्रमः**=भ्रान्तिः । **विभाव्य**=

---

* **रात्रौ** सर्वतः प्रसरणशीलस्य गाढान्धकारस्य नैल्य-दृष्टिप्रतिरोधकत्वादि-साधारणधर्मसम्बन्धेन कज्जलरेणुपटल (त्व) तादात्म्यसम्भावनोत्प्रेक्षेयं **स्वरूपो-त्प्रेक्षेत्यर्थः** । एवम्—"मसिमिव वर्षति" इत्यत्र गगनकर्तृकमसिवर्षणता-दात्म्योत्प्रेक्षापि ज्ञेया । अर्थात् मसिवर्षणत्वेनोत्प्रेक्षितम् ।

† पादमुपनह्यते, पादमुपनह्यति वेति व्युत्पत्तिः । णह बन्धने । '**सम्प-दादिभ्यः क्विप्**' (वा०) इति क्विप् । 'नहिवृति—(६ । ३ । ११६) इति दीर्घः।

‡ 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः

आलोच्य । **प्रातिष्ठत्**=प्राचलत् । **उपवीथिकायाम्**=उपपदव्याम् । **जागरूकस्य**=प्राहरिकस्यैव । **आम्रेड्य**=द्वित्रिवारमावृत्तिं कृत्वा । वदतः= कथयतः **तारध्वनिम्**=उच्चैःशब्दम्='**मास** मामीचिष्ट=मामां पश्येदिति हेतोः । **प्राविशत्**=प्रवेशकमकरोत् । **कान्दिशीकः**=भयद्रुतः । **मार्गान्तर**मलभमानः=अन्यमध्वानमप्राप्नुवन् । **निष्कोषनिस्त्रिंशहस्तः**=नग्नखड्गपाणिः । **सतर्कः**=सावधानः । **कपटेति**—कपटेन व्याजेन या क्षुतादयः। तत्र क्षुतम्=कासः । ढक्कारः= प्रसिद्धः । छिक्काः=प्रसिद्धाः **करकलितेति**—करे पाणौ कलिता धृता या काचमञ्जूषा 'लालटैन' इति प्रसिद्धा कूपिकाकारा-काचमयी दीपाधानिका तस्या अन्तःस्थस्य दीपस्य प्रकाशेन ।

**पृ० १४६ । पादाग्रस्थहस्तेति**—पुरोवर्तिप्रदेशे धृतहस्तचतुष्टयमानवतीम् **अलसनयनः**=निद्राकुलित इत्यर्थः । **होरा**=घटिका ।

**पृ० १४६ । शयीय**=निद्रां सेविष्ये । **तडागम्**=सरोवरम् । **आससाद**=प्राप्तः । **उच्चावचायाम्**=निम्नोन्नतायाम् । **भग्नमन्दिरेषु**=जीर्णदेवायतनेषु । **यातैकयामायाम्**=यातः गतः एकोयामः प्रहरो यस्याः तस्याम् । **यामिन्याम्**=रात्रौ । **भयानकभल्लः**=तीक्ष्णकोटिः । **ओतप्रोतमिव**=विद्धानुविद्धमिव । **सचकितम्**=सविस्मयम् । क्रियाविशेषणमेतत् । * **शक्तिः**=कासूः । 'बरच्छी'तिप्रसिद्धा । महादेववक्षःस्थलं **चुचुम्ब**=अस्पृशत् । लाक्षणिकमिदं पदम् । **कञ्चुकान्तेति**—कञ्चुकस्य चोलकस्य अन्तःस्थितेन=अन्तर्निहितेन वर्मणा=कवचेन (यः) **आघातः**= अभिघाताख्यसंयोगः तेन । **सझणत्कारम्**=झणत्कारशब्दसहितं यथा तथा ।

**पृ० १४७ । आलक्ष्य**=दृष्ट्वा । **धृतखड्गम्**=गृहीतासिम् । **पिचण्डिलम्**=स्थूलोदरम् । 'तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचण्डिलः' इति (अमरः) । आक्ष्वेड्य=आक्रुश्य । **सचन्द्रहासः**=सखड्गः । **श्येन** इवाभिपत्य । **उपमालङ्कारः** † श्येनः=शशादनः 'बाज' इति प्रसिद्धः पक्षी । न **टिडढणञ्**पण्डितः=व्याकरणमात्ररटनकर्त्ता । **युद्धपण्डितः**=सङ्ग्रामविद्यानिपुणः । **पाञ्चालाः**=पञ्चालदेशस्य राजानः । सिन्धौ भवाः **सैन्धवाः** ।

---

* 'अथ शशादनः । पत्री श्येन' (अमरः) ।

† काली–कराली–मनोजवा–सुलोहिता–स्फुलिङ्गिनी–विश्वदासाख्याः इति सप्त वह्निजिह्वाः । तथा च श्रुतिः—

मरौ भवा **मारवाः** । **क्रमेलकाः** = उष्ट्राः । **झटितिकारिता** = शीघ्रचालचातुरी । **अतिसत्वरतया** = महता शैघ्र्येण **चन्द्रहासस्त्रालनपराः** = खड्गमारणपरायणाः । **हैहया** इव = कार्त्तवीर्या इव । उपमा । **बहुबाहवाः** = अनेकभुजाः । **महाराष्ट्रेति**—महाराष्ट्रदेशीयानां वीरताया महत्त्वमित्यर्थः। **सोऽयम्** = महादेवपण्डितवेशधारी शिववीरः **चञ्चलेति**—चञ्चलः—चपलश्चासौ चपलाया विद्युतः चमत्कारः द्युतिक्रृतिः तमिव । स्वरुः = वज्रं तत्सारेण तत्स्थिरांशेनेव **सृष्टम्** = रचितम् । **कल्पान्तेति**—कल्पान्तः प्रलयकालिकोयः ‡ सप्तजिह्वः वह्निः तस्य एकं **जिह्वा**विशेषमिव । तथा **प्राहिणोत्** = तेन प्रकारेण प्राक्षिपत् यथा **चान्द्रखानस्य** असिम् = खड्गम्, **कन्धरम्** = ग्रीवाम् एकेनैव **आघातेन** = * आताडेन **द्विरकरोत्** = द्विधा अकार्षीत् अभिनदित्यर्थः ।

**पृ० १४८ ॥ यवनवीर**श्मश्रूपमम् = यवनेषु ये वीराः तेषां श्मश्रुः ओष्ठरोमराशिः तस्या उपमा यस्य यवनेषु प्रधानं भटमित्यर्थः। **धर्मराजा**ध्वनि = यमलोकमार्गे **अध्वनीनम्** = **कारित**वानसि = मारितवानसि ( मद्द्वारेति शेषः ) **मद**सिविलीढे = मदसिना आस्वादिते हते सति इत्यर्थः । "**को** नाम तव कठिनो विजय" इति सम्बन्धः । न कोऽपि कठिन इति काकुः । कथम्भूतस्य तव—**वारवधू**करेति—वारवध्वः वेश्याः तासां कराः पाणय एव शरावः सरकः तस्य चुम्बने चञ्चुरस्य व्यापृतस्य । वस्तुतस्तु—वारवधूनां करेभ्यः ये शरावाः मद्यसरकाः तेषां चुम्बने पाने चञ्चुरस्य चपलस्य । वेश्याभिः सहैव मद्यगोष्ठीप्रियस्येत्यर्थोऽर्थः । **विचिकित्सा** = संशयः । **सन्धेत्स्यति** = संशयं करिष्यति **एषः** = मृतश्चान्द्रखानः । **आसन्ने** = निकटवर्त्तिनि । **शुष्ककूपे** = कूपगर्ते इत्यर्थः । **पाषाणेति**—पाषाणाः = अश्मानः । कर्पराः = कपालाः । मृत्पिण्डखण्डाः = लेष्टुकानि । **विदधिरे** = चक्रिरे । **कतिभिश्चित्** = कतिपयैरित्यर्थः **शोणितेति**—शोणितस्य = रुधिरस्य शोणैः रक्तैः बिन्दुभिः छुरणैः **अङ्कितम्** अक्तम् । **दक्षिणम्** = वामेतरम् **बाहुमूलम्** = भुजमूलम् । **आवृत्य** =

---

‡ **काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वा ॥**
**( मुं० १ । खं० २ । ४ )**

* आताडः = 'चोट' इति भाषा ।

आच्छाद्य ) **घण्टापथम्** = राजमार्गम् । **गोपुराभिमुखम्** = अनुपुरद्वारम् = "पुरद्वारन्तु गोपुरम्" इत्यमरः । **कुशलेन** = विघ्नं विनैवेत्यर्थः । ***कुटपटलीषु** = वृक्षराजिषु । घनच्छायस्य = निबिडच्छायस्य **वटः** = न्यग्रोधः । **मर्मरेति**—मर्मरेण — शुष्कपर्णरवेण स्तब्धौ = शङ्कूभूतौ कर्णौ यस्य तम् । **अनिमेषनयनाभ्याम्** = निर्निमेषनेत्राभ्याम् सम्मुखम् = पुरोवर्तिप्रदेशम् **अवलोकयन्तम्** = पश्यन्तम् । **अश्वम्** = वाजिनम् **आरूढम्** = अश्ववारमित्यर्थः । **प्रतीक्ष**माणम् = प्रतिपालयन्तम् । **दासेरकेण** = भृत्येन ।

पृ० १४६ ॥ **गृहीत**वल्गम् = गृहीता धृता वल्गा रश्मिर्यस्य तमिति "आजानेयम्" इत्यस्य विशेषणम् । **आजानेयम्** = अश्वम् । **अविगणितपरिश्रमः** = अध्यातखेदः । "स्नातोत्थित इव स्फूर्तिस्फुरितगात्रः" इत्यत्रोपमा । पूर्वं स्नातः पश्चादुत्थित इति **स्नातोत्थितः** । **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (२।१।४९) इति सूत्रेण पूर्वकाले समासः । स्फूर्त्या = रोमरन्ध्रमलनिर्धूननेन स्फुरितानि = लघूनि जातानि कार्यक्षमाणि भूतानीत्यर्थः) गात्राणि अवयवा यस्य स तादृशः । **अनूनोत्साहः** = पूर्णोत्साह इत्यर्थः **स्मयमानमुखः** = विकासिताननः । **रश्मिम्** = अश्ववल्गाम् । **संयम्य** = उत्तोल्य गृहीत्वेत्यर्थः । **आस्पृश्य** = आश्रित्य **अविलक्षितेति**—अविलक्षितं शैघ्र्यहेतोः अज्ञातम् उत्पतनम् आरोहणं यस्य सः । चतुरतराश्वारोहिणां **जातिरियम्** । **तत्पृष्ठमारूढः** = अश्वपृष्ठमाशिश्रिये इत्यर्थः । **यशस्विसिंहो** महाराजः = जसवन्तसिंहाख्यो यो जोधपुराधीश्वरः । **प्रतीक्षते** = प्रतिपालयते **कृतायासः** = कृतपरिश्रमः अपि **अनायस्तः** = श्रान्तिरहितः । **एतेन** महावीरत्व-सकलक्लेशसहत्व-उत्तमप्रकृतित्वप्रभृत्यनेकं व्यज्यते । **तामेव** दिशम् = यशस्विसिंहावतरणमार्गमित्यर्थः । **प्रातिष्ठत** = प्राचलत् । प्रस्थानमकरोत् ।

अथ । "तत्र" इत्यारभ्य **करुण**रसभरितं यशस्विसिंहचिन्तनं "असिच्यत" इत्यन्तगद्येन ग्रथ्नाति गद्यग्रन्थनकुशलो ग्रन्थकारः । **शिबिरेति**—शिबिरस्य कटकस्य अन्तर्मध्ये पटभवनेषु = उपकार्यासु ( मध्ये ) **अन्यतमस्मिन्** = एकस्मिन् पटभवन इत्यर्थः । **कलितेति**—कलितः उपबर्हस्य महोपधानस्य आश्रयो येन सः । **वीज्यमानः** = व्यजनवातेन सेव्यमानः । **उपधानेति**—उपधाने स्थापितं बाहुमूलं यस्य तस्मिन् । **कमलदले** इव = पद्मपत्रे इव दत्ते करतले । **ईषदिति**—**ईषद**रुणपाण्डुरम् = किञ्चिच्छ्वेतरक्तम् सायं समये मृगाङ्कस्य मण्डलमिवत्युपमा । **वदनम्**—मुखम् । **वामेति**

करस्य * **तर्जन्यङ्गुष्ठाभ्यां वाम**श्मश्रुः अग्रम् = कोटिम् **परिमृजन्** = आर्जवयन् । **घोरः** = भयङ्करः । **आततायिहत**कैः = वधाय सन्नद्धैर्नीचैः अत्युग्रपरपीडाजनककर्म-विशेषकैर्महादुष्टैरित्यर्थः ।

उक्तञ्च—

**अग्निदो गरदश्चापि शस्त्रपाणि धनापहः ।**
**क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥** इति ।

" सन्नद्धे त्वाततायी वधोद्यते " इति ( अमरः ) । आततं यथा तथा अयितुं शीलमस्य । **अय** गतौ । अस्माद्धातोः **सुप्यजातौ णिनिस्ताच्छील्ये** ( ३ । २ । ७८ । ) इति सूत्रेण णिनिः । **दृशाऽपि** इति । एतेन सर्वथा तेषाम-स्पृश्यता सूचिता । **शुनकेभ्यः**=कुक्कुरेभ्यः । **वितीर्णम्**=दत्तम् । **अभि-वाद्यन्ते**=नमस्क्रियन्ते ।

**पृ० १५० ॥ चर्मकार**मण्डलेषु=पादूकृन्मण्डलेषु " पादूकृच्चर्मकारः स्यात् " इति ( अमरः ) । **वासभूमिः**=आसनस्थानम् । **अदीयत**=कर्मणि प्रत्ययः ।

**अस्मदिष्ट**देवनिन्दकाः=अस्माकम् इष्टदेवाः हरिहरादयः तेषां निन्दका गर्हणाकराः । **सजिह्वाच्छेदम्**=जिह्वाच्छेदेन सह वर्त्तते यथा तथा । **निरवासिषत**=वहिरकारिषत । **मर्दयन्ति**=आभञ्जन्ति । **आपानभूमी-कुर्वन्ति**=सुरागोष्ठीकुर्वन्ति । **कमला** इव विमलाचाराः=लक्ष्मीरिव स्वधर्मनिष्ठाः **कुलीन**कन्याः=कुलीनानां सदाचारिणां कुमारीः **कदर्थयन्ति** = बलाद्व्यभिचार-यन्ति । **सगात्रकम्पम्** = गात्रकम्पेन सह वर्त्तते इति । एवमेव—साश्रुपातम्, सकरुणम् । "त्रायस्व २" इति **आम्रेडन**पराणाम्=पुनःपुनर्वदताम् । **परमेति-**

---

* **तर्जनी** च अङ्गुष्ठश्च ताभ्यां तर्जन्यङ्गुष्ठाभ्यामिति द्वन्द्वः । परन्तु-**द्वन्द्वश्च** प्राणितूर्यसेनाङ्गानाम् ( २ । ४ । २ ) इति प्राण्यङ्गत्वाद् एकवद्भावः स्यात् तस्मात्, च्युतसंस्कृतिदोषोऽत्राभाति । केचित्तु—"सर्वोऽपि द्वन्द्वो विभाष-यैकवद्भवति " इति नियमेन न दोष इत्याहुः । तदपरे न क्षमन्ते—द्वन्द्वश्चेति सूत्रविषये परिभाषैषा न प्रवर्त्तते इति परिभाषेन्दुशेखरे भैरवमिश्रैरपि सिद्धान्ति-तत्वात् । अन्त्य एव पक्षः श्रेयान्, **जैन**शाकटायनेऽपि—**प्राणितूर्याङ्गम्** ( २ । १ । १०१ )=" प्राण्यङ्गानां तुर्याङ्गानां द्वन्द्व एकार्थो नित्यं भवति इत्युक्तम् ।

परमपूज्यपादाश्च ते वेदविद्वांस इति तेषाम्। अत्यन्तमाननीयानां श्रोत्रियमहाभागानामित्यर्थः। **शोणितैः**=रक्तैः भुवम्=भूमिम् **शोणयन्ति**=रक्तीकुर्वन्ति। शोणो नदोवा शोणनदीकुर्वन्ति, एतेन महाहत्याकाण्डो व्यज्यते। **क्रव्यादानाम्**=नैर्ऋतानाम्, रक्षसामिति यावत्। "क्रव्यात्क्रव्यादनैर्ऋताः" इति (वैजयन्ती)। **स्वधर्मरक्षापरान्** = **शिवराज**प्रभृतीन्। बन्धून् = देशबन्धून्। **चिक्लशयिषामः** = क्लेशयितुमिच्छामः। इच्छायां सन्। **अनुदाराः** = न उदाराः पक्षे अधोमुखा **भूदाराः** = वराहाः। **उल्लूलुषन्ति** = लावितुमिच्छन्ति। लूञ् छेदे। उत्पूर्वः सनि रूपम्। **न्यक्कारविषयाः** = धिक्कारपात्राणि इत्यर्थः **तुच्छानाम्** = महानीचानाम्। **उच्छ्लताम्** = उच्छृंखलानाम्। **म्लेच्छहतकानाम्** = दुष्टानां यवनानामित्यर्थः। **चाटुकारा इव** = नर्मालापका इव "भूत्वा" इति शेषः। **किमिद**मिति—अविगणय्य = दुष्टानां वैदेशिकानां साहाय्यकरणं स्वभ्रातॄणां हननकरणं वा श्रेय इत्यनालोच्यैव। **कृत्रिमेति**—कृत्रिमश्चासौ कोपः तस्य ज्वालाभिः = अर्चिभिः। **दिधक्षामः** = दग्धुमिच्छामः। **महेति**—महामहिम्नां = महानुभावानां मर्यादां प्रथाम्। **उल्लङ्घिरे** = अतिचक्रमुः। * **पितृपैतामहिकीम्** = पितृपितामहक्रमादागताम् **पारम्परीणाम्** = परम्पराप्राप्ताम्। प्राणाधिकमूल्याम् = जीवनाधारभूतामित्यत्र तात्पर्यम्।

---

* "पितृपैतामहिकीम्" इति च्युतसंस्कृतं भाति। गद्यगतार्थशृङ्खलानुसारेण तु—"पितृपितामहतः (पितृपितामहाभ्याम्) आगता" इत्यर्थः। परं—केन सूत्रेण प्रत्ययः स्यात्? कथञ्च पूर्वपदं विहाय उत्तरपदे एव वृद्धिः स्यात्? कथञ्च स्त्रीप्रत्ययः स्यात्? इति पण्डिताः स्वयं विवेचयन्तु। अस्मद्भावनया तु—"पैतृपितामहिकाम्" इत्येव साधु। तथाहि—"**विद्यायोनिसम्बन्धेभ्यो वुञ्**" (४।३।७७) इति सूत्रेण वुञि, आदिवृद्धौ, वुञोऽकि, "**अजाद्यतः**"—(४।१।४) इति टापि, "**प्रत्ययस्थात्**"—(७।३।४४) इति पूर्वस्याऽकारस्येकारे, "पैतृपितामहिका" इति शब्दो निष्पद्यते। एवमेव—"पारम्परीणाम्" इत्यत्रापि प्रत्ययार्थस्तु—आगतरूप एव सङ्गच्छते। परन्तु—"**परोवरपरम्परपुत्रपौत्रमनुभवति**" (५।२।१०) इति सूत्रेण परांश्च परतरांश्चाऽनुभवति इति "परम्परीणः" इति सिद्धान्तकौमुद्यां मूल एव साधितम्। तद्दर्शितः प्रयोगः कथं घटेत?। स्वार्थे वाऽणि, टापि स्यात्। व्याकरणान्तरे तु अनायासेन सिद्धं स्यादिति बोध्यमिति दिक्।

**स्वतन्त्रतासम्पत्तिम्** = स्वातन्त्र्यस्वाराज्यम् । **अभद्राणि** भाग्यानि = दिष्टानि प्रतिकूलानीत्यर्थः । **अभव्यं** भाव्यम् = अमङ्गलं भावि । **पतनोन्मुखी** = आसन्नविनाशा **सम्पत्तिः** = राज्यश्रीः । **विधूतप्रायः** = नष्टप्रायः । **वदनमलिनीकारः** = मुखमालिन्यकरणम् । महतां निन्दया हि मुखमपवित्रं जायेत इति विश्वासः । **श्मश्रूमूलम्** = कूर्चिकामूलमित्यर्थः । **असिच्यत** = सिक्तमक्रियत । कर्मणि प्रत्ययः ।

" यावच्चैव " इत्यारभ्य " सम्मुखमवलोकयति " इत्यन्तं शोकावस्थस्य **जातिः** । **अत्रभवतः** = पूज्यान् । **दिदृक्षते** = द्रष्टुमिच्छति । "**ज्ञाश्रुस्मृदृशां सनः** ( १ । ३ । ७५ । ) इत्यात्मनेपदम् ।

**आसन्न**स्थानम् = निकटवार्त्ति स्थानम् " समीपे निकटासन्नौ " इत्यमरः **स्वेदात्** = घर्महेतोः । **स्विन्नवदनम्** = घर्मवारिणा क्लिन्नमुखम् । **उपवीजयितुम्** = व्यजनयितुम् । **व्यजनिनम्** = व्यजनक्रियानियुक्तं भृत्यम् । **इङ्गितवान्** = चेष्टया आज्ञप्तवान् ।

**पृ० १५२** । **राजन्वती** = प्रशस्तराजयुक्ता । **राजन्वान् सौराज्ये** ( ८।२।१४ ) इति निपातितम् । **यस्मिन्** = इति विषये सप्तमी यद्विषये इत्यर्थः । **धर्मधारि**धौरेयाः = धार्मिकमुख्याः । **आग्रहग्रहग्रहिलाः** = पक्षपातवन्तः । **पीयूष**पूरमिव = सुधाप्रवाहमिव । **चक्षुश्चषकैः** = अक्षिपात्रैः । **पिपासामः** = पातुमिच्छामः सादरमीक्षामहे इत्यर्थः । **सनातनधर्म**रक्षायाः = वैदिकहिन्दुधर्मपालनायाः । **यश्चेति**—*भारतीयानां भारतभवानां वीराणां कुलस्य मुकुटमणिः शिरोमणिः अग्रणीरित्यर्थः । **कदर्य**हतकानाम्=अत्यन्तनीचानाम् । **पाटच्चराणाम्** लुण्टकानां धाटीमारकाणामिति यावत् । **जाल्मानाम्** = असमीक्ष्यकारिणाम् । **धर्मध्वंसिनाम्** = धर्मघातुकानाम् । **दासपद**लाञ्छनम् = अनुचरत्वेनाऽनुसरन्तमित्यर्थः । सतां न्यक्करणीयम् = सद्भिर्गर्हणीयमित्यर्थः । ' सताम् " इति " कृत्यानां कर्त्तरि वा " ( २ । ३ । ७१ ) इति सूत्रेण कर्त्तरि षष्ठी । **भारतेति**—भारतस्य विद्रोहिणः उत्सादयितारो ये यवनाः तेषां वशवर्त्तिताकार्यम् तत्परतन्त्रताकुकृत्यमित्यर्थः, इतिहेतोः—**ग्लानः** = क्षीणहर्षः । **ग्लै** हर्षक्षये । "**गत्यर्थाकर्मक**"—( ३।४।७२ ) इति कर्त्तरि क्तः । अग्लासीदिति "ग्लानः" । क्षीणहर्षः । **संयोगादेरातो धातोर्यण्वतः** ( ८।२।४३ ) इति निष्ठातस्य नः । **उत्थानिका** = उपोद्घातः । **एतत्प्रस्तावस्य** = एतत्प्रकरणस्य । **चकितः** = विस्मयं गतः । **क्षीणः** = ... **पूर्वस्य** क्तः । **रदाभ्यां निष्ठातो** ...

णः **पूर्वस्य च दः** (८।२।४२) इति निष्ठातस्य णत्वम् । किमितोऽपि कथयेदिति–**सकुतूहलः** = साश्चर्यः । **स्वेदेति**–स्वेदस्य * घर्मस्य अपसारणं प्रोञ्छनं तस्य छलेन व्याजेन । विविधानां भावानां शोकोत्साहादीनां ये भङ्गाः आविर्भावतिरोभावाः तैः तरङ्गितम् = आकुलम् आननं = मुखम् । **पटान्तेन** = पटैकदेशेन **साच्छादनम्** = सप्रावरणाम् । **प्रोञ्छन्** = अपसारयन् । **उपधानम्** = उपबर्हम् । **क्रोडे** = उरसि । **स्थापित**कफोणिः = धृतकूर्परः । "स्यात् कफोणिस्तु कूर्परः,, इति ( अमरः ) ।

"महाराज !,, इत्यारभ्य "क्षुब्धं महाराष्ट्रस्य हृदयम्', इत्यन्तं पुनः **करुणरसाप्लुतं** ग्रथ्नाति । **दिक्करिकरेति**—दिक्करिणः = दिशां ये करिणः गजाः † ऐरावताद्याः तै र्दोधूयमानं यशःपुञ्ज एव पुण्डरीकं = सिताम्भोजं यस्य सर्वदिगन्तव्यापियशस इत्यर्थः । **स्वातन्त्र्येति**–स्वतन्त्रस्य भावः स्वातन्त्र्यम् तदेव पोतः तस्य **कर्णधारस्य** = नाविकस्य । **क्षत्रियकुलकमलदिनेशस्य** = राजन्यवंशसरोजार्कस्य । एवम्भूतस्य उदयपुराधीशश्री**प्रतापसिंहस्य कुलप्रसूतम्** = कुलोद्भवम् । **स्त्रीरत्नम्** = योषाशिरोमणिरित्यर्थः । **यस्य** = तवैव यशस्विसिंहस्येत्याशयः) **अर्धाङ्गम्** = पाणिगृहीती । ( इतोऽग्रे "यः शतवीरवरैः सजयजयध्वनि म्रियमाणं मरुदेशराजसिंहासनं पदा समाक्रम्य विराजते" इति सम्बन्धः । सर्वाणि तृतीयाबहुवचनान्तानि "वीरवरैः" इत्यस्य विशेषणानि । कथम्भूतैः **शतवीरवरैः** ( असङ्ख्यातैर्महाशूरैः ) **विद्युद्विनिन्दक**कृपाणकरैः = विद्युतः सौदामिन्या विनिन्दकानि अर्थात् तीक्ष्णधारतया अत्यन्तं चाकचक्यभाञ्जि कृपाणानि असयः करे येषां तैः, **सघनेति**—सघनश्मश्रूकूर्चाभ्यां समाच्छन्नाः सम्यगाच्छादिताः कन्धराः ग्रीवा येषां तैः । वामपादे = दक्षिणेतरचरणे समाकलितः परिधृतः सुवर्णं ‡ कटकः हिरण्मयवलयो यैः तैः । दक्षकरे कलितं धृतं कनकवलयद्वयं यैः । **पीतरक्तेति**—

---

* "स्वेदो घर्मो निदाघः स्यात्, इति ( वैजयन्ती ) ।

† ते च—

**ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।**
**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥**

इत्यमरोक्ता ज्ञेयाः ।

‡ **कटको** वलयं पारिहार्यावापौ च कङ्कणम् । हस्तसूत्रं प्रतिसरः इति ( अभिधानचिन्तामणिः )

पीतरक्तादिभिर्वर्णैः चित्रविचित्राणि उष्णीषाणि शिरोवेष्टनानि येषां तैः । *'उष्णीषं मूर्धवेष्टनम्, इति ( अभिधानचिन्तामणिः ) । **विविधेति** = विविधानाम्ः अनेकप्रकाराणां मणिमयहाटकमालानां = हीरकादिजटितानां सुवर्णमालानां संघट्टस्य समूहस्य किरणैर्मयूखैः अधिकं विकटं ( निम्नोन्नतमिव लक्ष्यमाणं ) वक्षःस्थलमुरःपटलं येषां तैः । **रणाङ्गणेति**—रणाङ्गणे सङ्ग्रामभूमौ विपोथितानां विध्वस्तानां = विमर्दितानां प्रत्यर्थिनां शत्रूणां सार्थस्य = सङ्घस्य यानि मुकुटानि = किरीटानि तेषां मौक्तिकमण्डलैः मुक्ताव्रजैः रचितानि कृतानि कुण्डलानि = कर्णवेष्टनानि कर्णभूषणानि यैः । †'कुण्डलं कर्णवेष्टनम्, इति (अमरः) । **सिंहसंहननैः** = सिंहसदृशशरीरैः । **मधुनयनैः** = मत्तनेत्रैरित्यर्थः ।

**यदिति**—यस्य योधपुराधीशस्य कथोपकथनैः = कथानकैः कामिन्यः **शाययन्ति** = ‡ स्वापयन्ति । **यतो** बिभेति । यतः—यस्मात् पञ्चम्यां तसिः । **भीत्रार्थानां भयहेतुः** ( १।४।२५ ) इति पञ्चमी । **ऊर्जस्वलयशसः** = ऊर्जस्वलं प्राञ्जलं यशो यस्य तस्य । **चतुरङ्गिणीम्** = हस्त्यादिभिः चतुर्भिरङ्गैरुपेतां सेनाम् । **क्षुब्धम्** = सञ्चलितम् । **क्षुब्धस्वान्तध्वान्त**—( ७।२।१८ ) इति निपातनात् साधुः । "क्षुभितम्" इत्येव समीचीनं भाति । क्षुब्धो भवति मन्थश्चेत् इत्युक्तेः । मन्थादन्यत्र **क्षुभितम्** । अथवा—आगमशास्त्रस्य अनित्यत्वमाश्रित्यैवं स्यात् ।

**पृ० १५५ ॥** लज्जया तिर्यग् वदनम् = साचीमुखम् **साधारणः** = प्राकृतः अल्पमतिरित्यर्थः **भाषणपरिपाटीम्** = वचोभङ्गीम् । **महोपकार्या**सन्निवेशः = महांश्चासौ उपकार्याणामुपकारिकाणां सन्निवेशः ‡ आड-

---

* उषति दहति अश्रियमिति **उष्णीषः** पुंक्लीबलिङ्गः । मूर्धा वेष्ट्यते अनेनेति मूर्धवेष्टनम् ।

†ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ( ५।२।११४ ) इत्यनेन निपातनात् सिद्धिः ।

‡**कुण्डलं** कर्णभूषायां पाशेऽपि वलयेऽपि च । काञ्चनद्रुगुडूच्योः स्त्री इति ( मेदिनी ) । ‡ सायङ्काले क्रीडास्थगितान् शिशून् प्रायः सर्वदेशेषु तन्मातरः पाणिभ्यां मन्दं मन्दं ललयन्त्यः आलोलिकाभिः शाययन्तीति वस्तुस्थितिः । यस्मिन्देशे यः कोऽपि यथाकथञ्चित् प्रख्यातो भवति तस्य कथानकान्यपि श्रावयन्ति । बालस्वापनोचितगीतिका **आलोलिका** इत्युच्यते । भाषायां "लोरी" इति भण्यते । वर्णितश्चैतत् "आलोलिकातरलरसनाभिः" इति मया **वासवदत्तायाम्** ।

म्बरः । **अश्वयितुम्** = अश्वैराक्रमितुम् । **सादिनः** = अश्वारोहाः । **भवत्कोपदावानलः** = भवतः कोपः एव दावानलो वनवह्निः । **रक्तैः** = रुधिरैः । **रेणुकाराशिम्** = धूलिसञ्चयम् । **अरुणयितुम्** = रक्तीकर्तुम् । रक्तैः कर्दमयितुमित्यभिप्रायः । **भवदिति**=भवतो माहात्म्यं कीर्त्तिगौरवं, तस्य समाकर्णनेन श्रवणेन । **मोदन्ते**=हृष्टा भवन्ति । **मेदोभिः**=पलतेजोभिः । "मेदस्तु पलतेजः पलोद्भवम् । विस्रमास्थिकरं स्नेहवरं गौतममित्यपि" इति ( वैजयन्ती ) । **मेदिनीम्**=पृथ्वीम् । **मेदस्विनीम्**=चिक्कणामित्यर्थः । **अस्मायामेधास्रग्भ्यो विनिः** ( ५ । २ । १२१ ) इति मेदःशब्दात् मत्वर्थीयो विनिः । **निर्मातुम्**=विधातुम् । **वैदिकेति**—* वैदिकी चासौ मर्यादा सनातनी पद्धतिः तस्या विलोपनं विध्वंसनमेव व्रतमेषामस्तीति तान् । **अत इनिठनौ** (५।२।११५) इतीन् । **वर्धयितुम्**=पोषयितुम् । **यथेति**—† **श्येनः**=शकुन्याखेटकरः पक्षी । **वज्रनिष्पेषनिष्ठुरैः**=वज्रवत् कठोरै रित्यर्थः । **निजचञ्चुचरणाघातैः**=स्वत्रोटिपादपातैः । **दीनान्** इति तेषां दयापात्रत्वं व्यनक्ति । **भयविह्वलान्**=भयेन कातरान् । **पतत्रिणः**= पक्षिणः । **निहत्य**=मारयित्वा । **व्याधाय**=मृगयवे । 'मृगयुर्लुब्धको व्याधो द्वौ वागुरिकजालिकौ' इति ( वैजयन्ती ) । **समर्पयति**=ददाति । **स्वयञ्चेति**— व्याधा हि श्येनपक्षिणं पालयित्वा पोषयित्वा तद्द्वारा आखेटं कुर्वन्ति, स्वयञ्च पक्षिमांसं भुञ्जते इति लोकप्रसिद्धम् । **अविचारेति**—अविचारो विवेकाभावः । व्यभिचारः=कदर्थनम् । अत्याचारः=हत्याकाण्डः एतेषां प्रचाराय=विवृद्ध्यै । **क्षत्रियव्याघ्र !**=राजन्यश्रेष्ठ ! । **शिरःकण्डूयनैः**=शिरोघर्षणैः । लज्जितानां चिह्नजातिरियम् । **यापयित्वा**=गमयित्वा ।

पृ० १५६ **ह्रीणोऽपि** त्रपां संवृण्वन्=लज्जितः सन्नपि लज्जामाच्छादयन् । गौरवम् **अवगूर्यते**=हिनस्ति । **गूरी** हिंसागत्योः । दैवादिकः । **पदवैधुर्यम्**=वाक्यार्थबोधाय अपेक्षितानां पदानां सन्निध्यभावः । **म्रियते**=

---

* 'वेद' शब्दात् भवार्थे '**अध्यात्मादेष्ठञिष्यते**' इति वार्त्तिकेन ठञ् । स्त्रियां ङीप् । अध्यात्मादिराकृतिगणः ।

† श्यायते द्राक् गतिमान् भवतीति **श्येनः** । 'श्यास्त्याहृञविभ्य इनच्' ( उ० २ । ४६ ) इत्यौणादिक इनच् प्रत्ययः । **श्यैङ्** गतौ इति भौवादिको धातुः ।

अवस्थितं भवति । **धृङ्** अवस्थाने । तौदादिकः । " तव भाषणे पदगौरवं न अवगूर्यते न पदवैधुर्यं ध्रियते " इति विशकलय्यान्वयः । **प्रसादः** = स्पष्टार्थता । * **निरस्यते**=क्षिप्तो भवति । **असु** क्षेपणे । दैवादिकः । † **उपसर्गादस्यत्यूह्योर्वेति** वाच्यम् " ( १ । ३ । २९ ) इति वार्तिकेन पक्षे आत्मनेपदम् । निरुपसर्गः ।

**संशयेति**—संशयापादकानां सन्देहजनकानां पदानां प्रचयः = आधिक्यं समुदायो वा **प्रचीयते** = वर्धते । तव भाषणे निरर्थकानि पदानि न सन्तीत्यर्थः । **पाटवम्** = पटोर्भावः । भावेऽण् । चातुर्यमित्यर्थः । **गहनगहनैः** = अतिगम्भीरैः । **कोमलकोमलैः** = अतिकोमलैः । **मधुरमधुरैः** = अतिमधुरैः । **वाचां विलासैः** = लसन्तीभिर्वाग्भिः । **आसारप्रसारैः** = धारापातप्रपातैः । **प्लावयसि** = शोधयसि अर्थात् धाराप्रपात इव तव वक्तृता बन्धानुबद्धा प्रस्फुटार्थवती च । **कल्पनाकेसरिणः** = प्रबन्धसिंहान् वाग्मिनः इत्यत्र तात्पर्यम् । **त्वदुक्तीति** = त्वदुक्तीनां त्वदीयानां वाचां श्रवणे विरिरिंसा = विरन्तुं ( विरामं कर्तुम् ) इच्छैव न भवत्यस्माकम् तव वाचोभङ्गीनामाकर्णने उत्तरोत्तरं कुतूहलं वर्धते इति भावः ।

**क्षमाभिक्षुः** = क्षमाप्रार्थी । **नतकन्धरः** = नामितग्रीवः । **समास्थित** = स्थितोऽभूत् । समुपसृष्टात् " स्था " धातोः " समवप्रविभ्यः स्थः " ( १ । ३ । २२ ) इत्यात्मनेपदम् । लुङि रूपम् । **उपचिकीर्षया** = उपकर्तुमिच्छया । **अपचिकीर्षया** = अपकर्तुमिच्छया । **वारसहस्रम्** = अनेकवारमित्याशयः । **आसिन्धुकूलम्** = सिन्धुकूलं मर्यादीकृत्य अभिव्याप्य वा **आङ्मर्यादाऽभिविध्योः** ( २ । १ १३ ) इत्यनेन " आबालं हरिभक्ति " रित्यत्रेव अव्ययीभावः । **विद्राविताः**=भग्नतां नीताः । **पारतन्त्र्येति**=परतन्त्रस्य भावः पारतन्त्र्यं पराधीनता सैव कलङ्कं पाप्मा तम् **असहमानाः**=सोढुमशक्नुवत्यः । **नवनीतकोमलाः** = तन्वंग्य इत्याशयः । **रमण्यः** = कामिन्यः ।

---

* इदन्तु चिन्त्यं यत् "प्रसादो निरस्यते" इत्यत्र कथमकर्मकभावो धातोः ।

† **समोगमृच्छिभ्याम्** ( १ । ३ । २९ ) इत्येतत्सूत्रस्थं वार्तिकमिदम् । "अकर्मकादिति न सम्बध्यते" इति **कैयटेनोक्तम्** । "अकर्मकादि"ति निवृत्तम् । वन्धं निरस्यति । निरस्यते । इति च **दीक्षितैर्व्याख्यातम्** । अत्रे परिष्कृताः प्रमाणम् ।

'**ज्वाला**जालजटालेपु ज्वलयाम्बभूवुः' इत्यत्र **न्यूपदत्वं** दोपः । 'वह्निपु' इति विशेष्यपदमपेक्ष्यते ।

**पृ० १५७ ईहितम्** = चेष्टितम् । **भगवत्याः**=महामायायाः = देव शक्तेः । **यदितोऽपि** = पूर्वापेक्षया उत्तरोत्तरमधिकमेवेत्याशयः । **अधिकार-वैशिष्ट्यम्** = विशिष्टमधिकारम् । भारतविद्रोहिणां यवननां सन्दोहः = समुदायः । कर्तृपदमिदम् । **कलयति** = आसादयते । स्वाधिकारं स्थिरीकरोतीत्यर्थः । **आत्मोच्छेदाय** = स्वविध्वंसाय एव । **एतेषाम्**=यवनानां भाग्यैरिति-सम्बन्धः । **यौष्माकीणबलम्** = युष्माकं सामर्थ्यम् । युष्मच्छब्दात् शैषिकेऽणि कृते—**तस्मिन्नणि च युष्माकास्माकौ** ( ४ । ३ । २ ) इति युष्मा-कादेशः । **यवनेति**—यवनानां म्लेच्छानां रुधिरस्य = रक्तस्य तृपिताः पिपासिताः ये खङ्गाः असयः तेषां प्रचयैः सङ्घैः उद्भासिताः चाकचाक्यवन्तो भुजाः बाहा येषां ते । **सहस्रशः** = असंख्याताः **महाराष्ट्रव्याघ्राः** = महाराष्ट्रपुङ्गवाः । **एषाम्**—मध्ये इत्यर्थः । **सर्वोऽपि** ( जन इति शेषः ) रोदिति, इत्यन्वयः । **दत्तेति**—दत्तः म्लेच्छेभ्यो हस्तावलम्बो यैः तान् । **बद्धकरसम्पुटः** = प्राञ्ज-लिर्भूतः । **भावत्कम्** = त्वदीयम् । **भवतष्ठक्छसौ** ( ४ । २ । ११५ । ) इति वृद्धसञ्ज्ञकात् भवच्छब्दात् ठक् । **इसुसुक्तान्तात्कः** ( इत्यनेन ठस्य कः । **यौवराज्य**समये = युवराजस्य भावो यौवराज्यम् तस्य काले । **चित्रार्पित** इव= चित्रलिखित इव । **चकितीकृतः** = विस्मेरतां नीतः । **प्रासेति**—विभ्यदिव= भीत इव । **शुश्रूषते** = श्रोतुमिच्छति । **ज्ञाश्रुस्मृदृशां** ( १ । ३ । ५७ ) इत्यात्मनेपदम् सनः ।

**पृ० १५८ । श्रीमत्प्रतिवेशी** = प्रातिवेशिकः विधेयः = अनुचरः । **पारतन्त्र्यम्**=वैदेशिकराज्याधीनताम् । **अवलुलो**कयिपति = द्रष्टुमिच्छति । **भारतद्रुहाम्**=द्रुह्यन्तीति द्रुहः=भारतस्य द्रुहो भारतद्रुहः तेषाम् । **द्रुह्** धातोः क्विप् । **गर्धाभिभूताः**=लिप्सया तिरस्कृताः अतिलोभिन इत्यर्थः । **उद्देश्यम्**= उद्देशः अनुसन्धानम् अभिलाषो वा । उद्देश एव "उद्देश्यम्" स्वार्थे प्रत्ययः । **प्रशस्यम्** = अतिश्लाघ्यम् । **सारवत्ताम्**= बलवत्ताम् । **मोदामहे** = हृष्यामः ।

**अस्मभ्यं** रोचते = अस्माकं प्रीतिकरं भवतीत्यर्थः । **रुच्यर्थानां प्रीय-माणः** ( १ । ४ । ३३ ) इति प्रीयमाणोऽर्थः सम्प्रदानम् । **अनुसरति** = अनुकरोति ।

**समश्रौषीत्**=सम्यगाकर्णितवान् । **निरपराधान्**=अपराधशून्यान्। **पथिकान्**=अध्वन्यान्। **भित्तिम्**=कुड्यम्। **भित्त्वा**=सन्धिं दत्वेत्यर्थः। **अपजहार**=चोरयामास। एषाम्=यवनानाम् **अत्याचारम्**=कदर्थनाम्। **दण्डयति**=दण्डेन उपायेन व्यवहारतीत्यर्थः। ***परिपन्थिनः**=विरोधिनः। 'परिपन्थी विरोध्यपि' इति (वैजयन्ती)।

**पृ० १५१। † नीतिविशेषस्य**=विशिष्टायाः नीतेरित्याशयः श्रीमन्त-मेव **द्वेष्टि**=शत्रूयतीत्यर्थः। 'शठे शाठ्यम्' इति मुद्रया=प्रमाणेन। **कूट-**

---

* परि दोपाख्याने पन्थयितुं शील इति **परिपन्थी । पथि** गतौ। चुरादिः। **सुप्यजातौ णिनिः**—( ३ । २ । ७२ ) इति णिनिः। **परि-**शब्दश्च दोपाख्याने। तथा च **मेदनी**कारः—'दोपाख्याने निरसने पूजाव्याप्त्योश्च भूषणे' इति पपाठ।

इदन्तु बोध्यम्—यद्यपि उक्तसूत्रे 'उपसर्गभिन्ने एव सुपि णिनिः' इति वृत्तिकारैर्व्याख्यातम्, तथापि भाष्यविरोधादुपेक्ष्यम् 'न वञ्चनीयाः प्रभवोऽनु-जीविभिः' इत्यादौ दर्शनाच्च।

† नीतिशास्त्रेषु येन केनापि प्रकारेण शत्रूणां हननमेव राज्ञां परं कृत्यं भवति तस्मिन् घोरे विप्लवे इमां नीतिं **शिववीरो** यथा विदितवान् नेतरे राज-पुत्राः ते यदि अवेदिष्यन् नैव स्वघातं=स्वापादकुठार एव प्रपातमकरिष्यन् इति शिववीरचरित्रचञ्चूनां सम्यग् विदितं भवितुमर्हति। पश्यन्तु तावत् शुक्राचार्य-प्रोक्ताया नीतेरेव सारम्—

**पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः।**
**अरेश्चित्तगुणान् ज्ञात्वा न सैन्ये भङ्गशङ्कया।**
**विधीयतां तथा नीतिर्यथा वध्यो भवेत्परः॥**

अस्यायमाशयः—परेषां शत्रूणां गुणवादिनो गुणपक्षपातिनोऽपि पण्डितान् पृष्ठतः कृत्वाऽविगणय्यापि अरेः शत्रोः चित्तगुणान् मनोभावान् ज्ञात्वा भङ्गशङ्कारणाद्भङ्गो माभूदिति अभिप्रायेण तथा नीतिर्विधीयतां यथा परः शत्रुर्वध्यो भवेदिति॥ अन्यदप्युक्तं **शुक्रनीतिसारे—**

**आततायित्वमापन्नो ब्राह्मणः शूद्रवत्स्मृतः।**
**नाततायिवधे दोषो हन्तुर्भवति कश्चन॥**

**नीतिः** = शार्गाली नीतिः । **रोदं** रोदम् = रुदित्वा रुदित्वा । **रोदसी** = द्यावा-पृथिव्यौ । **रोदयताम्** = विलपयताम् । **दाराः** = स्त्रीः । **इष्टदेवप्रतिकृतीः** = महादेवादिप्रतिमाः । **चूर्णयन्ति** = आमर्दयन्ते । **दुर्विनीतानाम्** = दुःशिक्षितानाम् । **आततायिनाम्** = क्षेत्रदारापहर्तॄणाम् । **छलेनापि दण्डनम्** = ‡ कूटनीत्याऽपि हननमित्यर्थः । **धर्ममर्मेति**—'गूढो हि धर्मस्वरूपनिर्णयो § गुहानिहितः । "महाजनो येन गतः स एव पन्था" इति भावः । **जाज्वल्यमानम्** = अतिशयेन ज्वलत् 'महावैरम्' इत्यस्य विशेषणम् । **गुप्तरूपेणेति**—

---

**उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।**
**निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥**
**उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।**
**यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायितम् ।**
**ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ।**

किञ्च—

**हीनं यदा क्षत्रकुलं नीचैर्लोकः प्रपीड्यते ।**
**तदापि ब्राह्मणा युद्धे नाशयेयुश्च तान् द्रुतम् ॥** इत्यादि ।

एतादृशनीतिशास्त्रीयपरममर्मवेदनं शिववीरस्य स्वाभाविको धर्म आसीदिति निश्चीयते ।

‡ तथा च—' शुक्रनीतिसारे ,—यथायोग्यन्तु संयोज्य निघ्नन् धर्मो न हीयते । धर्मयुद्धे तु,—इत्यवान्तरप्रकरणमुपसंहृत्य "कूटे वै"—न सन्ति नियमा अमी ॥

**न युद्धं कूटसदृशं नाशनं बलवद्रिपोः ।**
**रामकृष्णेन्द्रादिदेवैः कूटमेवादृतं पुरा ।**
**कूटेन निहतो बालिर्यवनो नमुचिस्तथा ॥**

इत्यादिना कूटनीतिः प्रशस्ता । ग्रन्थान्तरेष्वपि च पण्डितरूपवेदनीयश्चायमर्थः । मयापि च धर्मतत्त्वं निर्णीयमानेन स्वग्रन्थान्तरे भङ्ग्यन्तरेणाऽयमर्थो बहूपपादितः । इह प्रकृतोपयोगित्वेऽपि ग्रन्थवृद्धिभिया नाधिकमुक्तम् ।

§ गुहा च शास्त्रमेव—" धर्मस्य तत्त्वं निहितं गुहायाम् " इत्युक्तेः ।

श्रीमत्स्वामिविवेकानन्दाप्यति इत्यमेवाक्ते—

अन्तर्वेथमानम् । उपशम्यमानम्=निर्वाप्यमानम् । निगीर्य=अन्तरेव पीत्वा । "महाराष्ट्रैः सह योत्स्य इति दिल्लीश्वरं कथयित्वा समायातोऽस्मि" इत्यन्वयः । शिववीरस्तु—'सत्रुहननाय स्वेष्टसिद्ध्यै प्रतिज्ञातस्याऽप्यन्यथाकरणं न दोषमावहति । दृष्ट एव धर्मपुत्रादीनामपि गुरुद्रोणादिहनने मृषावाक्यम् इति ज्ञातशास्त्रतत्त्व आचष्टे—'सत्यम्' इति । 'योत्स्यते' इति । वक्षः= उरः छुरिकाभिः=कृपाणीभिः । विदारयिष्यते=द्वैधीकरिष्यते । सद्यः इति—सद्यः तत्कालं छिन्नेभ्यः कृत्तेभ्यो ब्राह्मणकन्धरेभ्यः विप्रग्रीवाभ्यः गलत्= स्रवत् यद् रुधिरं तस्य प्रवाहैः । वसुमती=भूमिः । स्नपयिष्यते=अक्लीकरिष्यते । महामांसदिग्धा=*गोमांसाक्लिन्ना भारतभूः=भारताभिजननः द्रक्ष्यते=अवलोकिष्यते । प्रस्फुरिताभ्याम्=अन्तःकोपेन चलद्भ्याम् । अधराभ्याम् ओष्ठाभ्याम् । अरुणिम्ना=लौहित्येन अञ्चिताभ्यां व्याप्ताभ्याम् प्रस्फारिताभ्याम्=विकाशिताभ्यां नयनाभ्याम्—उपलक्षित इति शेषः । इति अचकथत्=इति सम्बन्धः । अन्तर्निलीनक्रोधपुरुषजातिरियम् । स्थगित इव निश्चेष्ट इव । ह्रीतः=ह्रीणः । 'ह्रीणो ह्रीतो लज्जितः स्यात्' इति (वैजयन्ती) । अवहेलितः=तिरस्कृतः । आक्षिप्तः=निरस्तः । पुत्तलीकृतः=शालभञ्जिकीकृतः । त्रिवलीमण्डिते=त्रयाणं बलानां समाहारः त्रिवली तया भूषिते । अवाक्=मूकः । स्तब्धवाक्=कीलितवाक् । मन्त्रितः=मंत्रैः कीलितः इव । तूष्णीम्=निःशब्दः तस्थौ ।

पृ० १६१ ॥ तिरस्करणीयाः=क्षेपणीयाः परिहातव्या इत्यर्थः । नीतिगर्भम्=नीतिर्गर्भे यस्य तम् । वाग्मिनि=प्रशस्तवाचि । राक्षसोचितानि=क्रूरतमानीत्यर्थः । जननेति=उत्पादकस्य पालकस्य चेत्यर्थः । वलीपलितस्य=जराशैथिल्यस्य वृद्धस्येत्यर्थः । सक्रन्देति—क्रन्देन रोदेन सह यन्नयनजलम् अस्रधारा तेन सिक्तौ क्लिन्नौ शमश्रुकूर्चौ=मूर्च्छितदाढिके यस्य तस्य । साऽवहेलम्=सावज्ञम् । निगृह्य=बन्धयित्वा । कारागारे=

---

तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्तुमिहार्हसि ॥ इति दिक्

* 'स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः । प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः' इति । (शु० नी० सा० अ० ४ । ३००) भार्गवनीतिमाश्रित्य यवनैः सहैव योद्धव्यं ननु स्वभावतः इति वीरस्य हृदयम् ।

बन्धनालये । 'कारा स्याद्बन्धनालये' इत्यमरः । **जननी**करस्थमोदकम् = मातृपाणिस्थितलड्डुकम् । **अहमह**मिकया = अहम्पूर्वमहम्पूर्वमितिचेष्टया । **सोद्दण्डभावम्** = सक्रूरभावम् । **लज्जाऽनावहनम्** = व्रीडापरित्यागः । '**जीवञ्जीवं**' करग्रहणम् = साम्प्रतिकेतिहासप्रसिद्धजिजिवानामककर (वलि) विशेष स्यादानम् । **कवाटेति—कवाटः** = कपाटः । देहली = गृहाऽवग्रहणी । 'गृहावग्रहणी देहली' इति (अमरः)।

**पृ० १६२ ॥ यतरः** = ययोर्द्वयोरन्यः । **किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्** (५ । ३ । ९१) इति डतरच् प्रत्ययः ।

**क्षमा** = पृथ्वी । **क्षमाम्** = तितिक्षां क्षान्तिमितियावत् । "**क्षमा** तितिक्षा पृथ्वी च" इति (धरणिः)। '**प्रतिज्ञा**पालनव्याजेन महापातकवर्धनम्' इति कथनेन यशस्विसिंहस्य नीतिधर्मानभिज्ञता व्यज्यते ।

**वाचंयमम्** = वाग्यतम् । **विधत्ते** = करोति । **धर्ममर्यादा**घस्मराणाम् = धर्मपद्धतिर्हिंसकानाम् । प्रत्यर्थिनाम् = शत्रूणाम्। **उद्गिरताम्** = बहिर्न्यसारयताम् ।

**पृ० १६३ ॥ पटप्रान्तेन** = अञ्चलकोणेन । **प्रामार्द्** = प्रौञ्छीत् । प्रोपसृष्टस्य 'मृज्' धातोर्लङि रूपम् । **मारुराजस्य** = यशस्विसिंहस्य । **प्रेमेति**—प्रेमैव पारावारः समुद्रः तस्य पूरेण = प्रवाहेण आप्लुतं अर्डितमिव हृदयमित्यर्थः । **बाष्पोद्गारेण** = अस्रप्रवाहेण । **पक्ष्म**पंक्तियुगलम् = नेत्रलोमराजिद्वन्द्वम् । **उत्साहेति**—उत्साह एव सुधा पीयूषं तदासारैः सम्पातैः । **मुदितम्** = हृष्टम् । **उन्नतम्** = इति क्रियाविशेषणम् । **वीरासनेन** = मृत्युसंयमनासनेन । 'स्याद्वीरासनमुत्पादः कृत्वा भूमौ शिरः स्थितः । दुर्योधनासनमपि मृत्युसंयमनोऽपि च' इति (वैजयन्ती)। **आलिलिङ्क्षिषामि** = क्रोडी कर्त्तुमिच्छामि । **क्षत्रिय**कुलावतंसम् = क्षत्रियकुलभूषणम् । **परिष्वङ्गेन** = आलिङ्गनेन । **म्लेच्छपक्षेति**—म्लेच्छानां पक्षस्य अवलम्बनेन या ग्लानिः घृणाविशेषः तया ग्लपितं = क्षीणहर्षम् । **मोदयिष्ये** = हर्षयिष्ये । 'तस्य कर्णे अचकथत्' इत्यनेन शिववीरस्य महत् नीतिकौशल्यमाभाति । **आमस्त**कमापादञ्च = मस्तकमारभ्यपादपर्यन्तञ्चेत्यर्थः । **ससम्भ्रमम्** = ससत्वरम् । **परिषस्वजे** = आलिलिङ्ग ।

**पृ० १६४ ॥ स्वाधिष्ठितेति** = स्वेनाधिष्ठितम् आक्रान्तं यत् उन्नतं तलिकस्वरूपं तत् **उपधानसमीपे** = उपबर्हसन्निधौ । **संललाप** =

कथम्?

प्रेमगर्भितं लपितवानित्यर्थः । * **आचिक्रंसते** = आक्रान्तुमिच्छति । **वाताहतेति**—वातेनाहतायाः स्पृष्टायाः भीमायाः तदाख्यायाः नद्याः शीकरैः अम्बुकणैः शीतलीकृते शिशिरीकृते । **क्रमुक**कानने = पूगवने । **मृगयाभिः** = आखेटैः । **विनुनोद**यिषामि = विनोदयितुमिच्छामि । **खरतरेति**—खरतरासु= अत्यन्तं कठिनासु फक्किकासु = जटिलेष्वेकग्रन्थेषु । 'एकग्रन्थस्तु फक्किका' इति (वैजयन्ती) । विप्रतिपत्तिषु = विरुद्धकोटिद्वयोपस्थापकेषु शब्दविशेषु आपत्सु वा। **असंख्येति**—असंख्यानामनेकासाम् † अवच्छेदकतानां नियामकधर्मविशेषकृतानां खण्डनतानां वा यत् अनल्पं महत् कल्पनं परिष्करणं तस्य ‡ कल्पतरौ कल्पवृक्षे तर्कशास्त्रे । **येन** = अभ्यासेन । **खङ्गाः** = असयः । **आस्माकीनाः** अस्मदीयाः । **अवच्छेदकाः** = खण्डकाः । **दुरात्मानः** = दुष्टाः । **अवच्छेद्याः** = खण्ड्याः प्रतियोगिनश्च । **छात्रता** = छात्रस्य भावः । परायत्तेति हृदयम् । **अध्यापकताम्** = स्वातन्त्र्यमित्याशयः । **मम** छात्राः एव = मया शिक्षिता एव । **विवादे** = विरुद्धे वादे शास्त्रार्थे कलहे संग्रामे चेत्याशयः ।

" द्रष्टव्यं युद्धविषये " इत्याद्युक्तिप्रत्युक्ती रहस्यरक्षणायैव द्वयोर्ज्ञेये । **महाराष्ट्रेति**—महाराष्ट्रानां राष्ट्रं राज्यं तस्य या सृष्टिः रचना रक्षणा वर्धनञ्चेति तस्य परमेष्ठी = प्रजापतिः उत्पादक इत्यर्थः । **महाराष्ट्रेति** पदं वीरोक्तौ श्रुतिकट्वपि न दुष्टम् । **मरुमे**दनीपरिवृढः = मरुधराधीश्वरः । **अन्तः** = उपकार्याया मध्ये शयनागारे इत्याशयः । शिवोम् ।

## इति ( नूतन ) शिवराजविजयपताकायां षष्ठो निश्वासः ।

---

* **आङ उद्गमने** ( १ । ३ । ४० ) इत्यनेन आत्मनेपदम् । परन्तु— " ज्योतिरुद्गमन इति वाच्यम् " इति वार्त्तिकेन ' आक्रमते सूर्यः ' इत्याद्युदाहरणं स्यात् । अत्र तु पराक्रमणार्थो विवक्षितः तत् कथं घटेतेति सुधियो विवेचयन्तु ।

† नव्यन्यायपरिभाषेयं नर्मालापेन व्यर्था प्रयुक्ता । अवच्छेदकत्वम् अवच्छेदकता इति शब्दः । **अवच्छेदकत्वञ्च**—स्वरूपसम्बन्धविशेषः । क्वचिद् नातिरिक्तवृत्तित्वम् । क्वचित् तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वञ्चेत्यादि नानाविधं ज्ञेयम् । अस्य सरलं व्याख्यानं ( बालोपयोगि ) न्यायमुक्तावलीप्रभायां मया कृतं तत एव द्रष्टव्यम् । इहोपयोगि विवृतमेव ।

‡ " कल्पतरुः " नाम वाचस्पतिमिश्रकृतभामतीनामकटीकाग्रन्थोपरि अमलानन्दसरस्वतीप्रणीतो वेदान्तग्रन्थविशेषोऽपि ।

* ॐ *

# सप्तमो निश्वासः ।

अघटितघटनायामद्भुतं यस्य दाढ्यं
जगति विविधरूपं प्राणियोगाऽनुयोगि ।
विधितदितरवाह्यं तं विधिं नौमि भूयो
भवभविकविधानां प्राज्यराज्यप्रकामी ॥ १ ॥

चित्तं तु वासनाऽधीनं वासना चित्तसञ्चिता ।
अन्योऽन्यमिथुनीभावो द्वयोर्दैवेच्छया नृणाम् ॥ २ ॥

यावन्मधु न पीयेत शाङ्कर्या माययोऽमया ।
तावद्गर्जन्ति तर्जन्ति मूढा गर्वमदातुराः ॥ ३ ॥

महामायानिशातासिखरधाराकरम्बिते ।
दैतेयवर्गे देवानां वर्गो गर्जति गर्जति ॥ ४ ॥

**पृ० १६६ सप्तमे** निश्वासे सौवर्ण्याः ( कौशलायाः ) भाविसम्बन्धघटकमनुरागं, मूढशास्तिखानस्य पराजयं तदबलानां क्रन्दनभञ्जनादिकञ्च वर्णयितुकामस्तत्तद्वृत्तान्तोपक्षेपकतया यथाक्रमम् " **अयं रेवाकुञ्ज** "—इति, ' **गर्जगर्जे** '—ति ' **क्रामन्त्य** '—इति च पूर्वसिद्धग्रन्थविशेषप्रतीकादिमुद्धरति गद्यनयनिपुणो महाकविर्व्यासः ।

' अयं रेवाकुञ्ज ' इति कस्याश्चन विरहातुराया उक्तिरियम् । अयम् = पुरोवर्त्ती रेवाकुञ्जः = रेवाख्याया नद्याः कुञ्जो लतापिहितद्वारविशेषः यत्र स्थितयोर्यूनो रतिसमये परकीयदृष्टिपातादिभीतिशङ्का नार्हति भवितुं, दीप्तिश्च प्रकामं जायत इति भावः ।

कुञ्जमेव विशिनष्टि—**कुसुमेति**—कुसुमानि शरा यस्य सः कुसुमशरः कामो रतिपतिः तस्य सेवायै उपासनायै समुचितो योग्यः । कामोऽपि देवः देवाश्चैकान्त एव मनोवृत्तिनिरोधमुपासिता विशिष्टफलदानायाभिमुखीभवन्तीति वस्तुध्वनिः । प्रकृते विशिष्टं फलन्तु द्वयोरवाच्यानन्दलाभ एव । उक्तश्चैषोऽर्थः श्रुतावपि दृष्टान्तरूपेण—"**तद्यथा** स्त्रिया सम्परिष्वक्तो न बाह्यं वेद किञ्चन नान्तरम्" ( [illegible] ) इति । किञ्च—वेलायां [illegible] विलसन्तीनां प्रस्फुटित[illegible]मेलानां

चन्द्रवालानां परिमलः सौरभं यत्र तादृशोऽयं **समीरः**—पवनोऽपि 'मन्दं मन्दं सरतीति शेषः। अयमप्युद्दीपनं विभावः। इयं **प्रावृट्** = वर्षाकालः **धन्या** = रस्येत्यर्थः। अत्रैव हेतुमाह—**नवेति**—तस्य विन्यासेषु = विविधेषु न्यासेषु उत्थापनेषु चतुरा=दक्षा दक्षत्वं चेतनधर्मोऽपि तद्घटकत्वसम्बन्धेन उपचारसिद्धोऽस्ति। एवं सति हे ! **सखि !** आलि ! **पराधीनम्** = श्वश्र्वादिपरवशत्वात् अस्वतन्त्रं अथवा तस्मिन् प्रेयसि लग्नत्वात् अस्वतन्त्रं बलवत्तत्सङ्गमार्थि **चेतः** = हृदयम् किमपि कर्त्तुं **मृगयते** = किञ्चिद्व्यवसितुमनुसन्धत्ते। कथं प्रियसङ्गमः स्यादिति तर्कना। अत्राऽनिर्धारितविशेषत्वरूपेऽर्थे शक्तस्य किमःशब्दस्य रेवाद्युद्दीपनविभावः, प्रकरणपतिततया आलम्बनविभावरूपरमणस्यैवान्वेषणमिति **व्यंग्यम्**। **अनुप्रासो**ऽलङ्कारः। सच विप्रलम्भश्रृङ्गारानुगतः। **विरहिणी** च नायिका। शिखरिणी वृत्तम्। "रसैरुद्रैः छिन्ना यमनसभलागः शिखरिणी" इति तल्लक्षणात्।

'**क्रामन्त्य**'—इति। आनन्दवर्धन कृते ध्वन्यालोके तृतीयोद्योते उदाहृतं पद्यमिदम्। राजानम्प्रति कस्यचित् कवेरुक्तिरियम्। हे राजन्। **त्वद्वैरिनार्यः** = तव शत्रूणां स्त्रियः पुनरपि उद्यद्विवाहा इव = जायमानपरिणया इव **दावाग्निम्** वनवह्निम् **परितः** = समन्ततः। **भ्रमन्ति** = परिक्रमणमिव कुर्वन्तीत्यर्थः। विवाहस्याङ्गभूते लाजाहोमे प्रायो वध्व एवमेव परिक्रमणं विदधते। कथम्भूताः ताः—इदानीम् **क्षतेति**—क्षताभ्यो विदारिताभ्यः अर्थात् दर्भैरेव कृतव्रणाभ्यः कोमलांगुलीभ्यः गलत् स्रवत् रक्तं रुधिरं येषु तादृशैः **पादैः** = चरणैः पातितयावकैरिव = लिप्तालक्तकरसैरिव **सदर्भाः** = कुशाङ्कुरोपेताः * स्थलीः = अकृत्रिमान् वन्यान् प्रदेशान् **क्रामन्त्यः** = लङ्घयन्त्यः। कुशकण्डिकावर्त्तने विवाहभूमयोऽपि आस्तीर्णदर्भा भवन्ति। तथा—गलता प्रच्यवता वाष्पाम्बुना अस्रजलेन धौतं प्रक्षालितम् आननं मुखं यासां ताः। वाष्पपतनं शोकेन होमधूमेनापि चेति प्रसिद्धम्। तथा—**भीताः** = भयविह्वलाः शत्रुरस्माकं न पश्येदिति भीतिः। वरश्च सम्प्रत्येव रागान्धो न भवेदिति च। तथा—भर्तॄणां पतीनां करे पाणौ अवलम्बिताः कराः स्वपाणयो याभिस्ताः अतएव 'पुनरपि उद्यद्विवाहा इव' इत्युक्तिः सङ्गच्छते। अत्र राजविषयको रतिभावः प्रधानम्। करुणश्रृङ्गारौ

---

* **स्थली** भवति अकृत्रिमा चेत्। **जानपदकुण्डगोल**—(४।१।४२) इति सूत्रेणाऽकृत्रिमार्थे ङीष्।

राज्ञि सेनापतिद्वयवत् साक्षात्तस्याङ्गभावं गतावित्यन्यदेतत् † ।

'**अहह**' इति अग्रेतनं सन्दर्भमुत्थापयितुं नूतनां शैलीमनुरुन्धानः कविरेव वक्ति पाठकान् स्वाभिमुखीकर्त्तुम् । * **चिररात्राय** = चिराय । अव्ययमिदम् । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इति ( अमरः ) । **पुण्येति** = पुण्यनगरस्य अन्धतमसवीथिकासु = गाढान्धकारव्याप्तासु वीथीसु चिररात्राय अस्मन्मनो भ्रान्तम्' इत्यन्वयः । **तोरणेति**—तोरणदुर्गस्य उपत्यकासु अद्रेरासन्नासु भूमिषु यानि उद्यानानि = आरामाः तेषु भ्रमणैः पर्यटनैः । तद्विषयवृत्तान्तपठनैरिति कवेरभिप्रायः । **विनोदनीयः** = हर्षणीयः । **आनन्दसन्दोहः** = आह्लादसमूहः । **क्रोशार्धम्** = क्रोशस्यार्धं यावत् ।

**पृ १६७** ॥ आषाढा मासः । **जलद**पटलाच्छन्नम् = मेघमालाप्रावृतम् । **सान्द्रनीलम्** = नीलनीलमित्यर्थः । **गगनतलम्** = तलाकारं व्योम । मयूराणां बर्हिणां नृत्यानि । क्वचित् चातकानां स्तोककानां विरावाः = शब्दाः **धारासाराः** = धाराप्रपाताः । † **इन्द्रगोपेति**—इन्द्रगोपानां वर्षाभवानां रक्तवर्णानां कीटविशेषाणां संसर्गेण चङ्क्रमणात्मकेन सम्बन्धेन अधिकमनोहराणि = अत्यन्तं हृद्यानि ‡ शाद्वलानि शाद्वैर्बालतृणैः हरितानि क्षेत्राणि इति शेषः । **नड-**

---

† एवञ्चास्मिन् निश्वासे कोशलाविप्रलम्भवर्णनमपि प्रधाननायकशौर्यानुषङ्गिरघुवीरसिंहवीरतावर्णनेन तयोर्भाविसमागमबीजत्वेन अविरुद्धं मन्यते ग्रन्थकार इति सूक्ष्मं तद्हृदयं ममाभाति, अग्रे सन्तः प्रमाणम् ।

* चिराः रात्रयः इति चिररात्रान् । **अच्प्रत्यन्ववपूर्वात्सामलोम्नः** ( ५ । ४ । ७५ ) इति सूत्रेण समासान्तोऽच् । चिररात्रान् अयते इति चिररात्राय । **कर्मण्यण्** ( ३ । २ । १ ) इत्यण् इति "व्याख्यासुधा" कथं घटते ।

† इन्द्रो गोपो रक्षकोऽस्येति **इन्द्र गोपः** । ‡ इह यद्यपि अमरप्रामाण्यात् "शाद्वलानि" इति नपुंसकत्वञ्चिन्त्यम् । तथापि महाकविनिबन्धेषु अस्य क्लीवलिङ्गताऽपि दृश्यते । तथाहि—श्री**हर्षदेव** प्रणीते "नागानन्द" नाटकस्य चतुर्थेऽङ्के नायकोक्तौ "शय्या शाद्वलमासनं शुचिशिला" इति । व्याख्यातञ्च तथैव शिवरामेण स्वकृतायां "विमर्शिन्याम्"—शाद्वलम् = "शष्पकर्दमयोः शादः" इत्युक्तत्वात् निरन्तरशष्पहरितं स्थलं तत्र तत्र शयनापेक्षायां सुलभम् इति । एवमस्य स्वविशेष्यनिघ्नतैव गतिर्भातीति यथारूपं भूभाग-प्रदेश-क्षेत्र-स्थलादिपदाध्याहारेणैव व्याख्यानं विधेयम् ।

**शादाड्डुलच् (४।२।८८)** इति चातुरर्थिकः ड्वलच् । "शाद्वलः शादहरिते" इति ( अमरः ) । **पञ्चषाणि** = पञ्च वा षड् वेति विग्रहः । **सङ्ख्याऽव्ययासन्नादूराधिकसङ्ख्याः संख्येये (२।२।२५)** इति बहुव्रीहिः । **बहुव्रीहौ सङ्ख्येये डजबहुगणात् (५।४।७३)** इति डच् । **चण्डकरकरैः** = चण्डकरः सूर्यः तस्य करैः मयूखैः । **कशिमानम्** = कृशस्य भावः कशिमा कार्श्यमित्यर्थः । **पृथ्वादिभ्यः इमनिज्वा (५।१।१२२)** इति प्रस्तुत्य **वर्णदृढादिभ्यः ष्यञ्च (५।१।१२३)** इति दृढादित्वात् पक्षे कृश शब्दात् इमनिच् । **र ऋतो हलादे र्लघोः ((६।४।१६१)** इति रत्वम् । **आलम्बते**—प्राप्नोतीत्यर्थः । **वाटिकामध्ये** = पुष्पवाटिकायामित्यर्थः । **तिर्यक्** = तिरश्चीनः । **दारुस्तम्भः** = काष्ठस्थूणा । **प्रतिकोणेति**—कोणं कोणं प्रति इति प्रतिकोणम्—आसक्ता एका शृङ्खला यत्र सा । **सुरुचिरा**—मनोहरा पीठिका । **दोलिका** = दोला क्रीडार्थं दोलनयन्त्रमित्यर्थः । **शिल्पीति**—शिल्पीनां कारुकाणां शिल्पस्य कारुकताया चमत्कारः महत्त्वमित्यर्थः । **लताः** = वल्यः । **स्तम्भौ** = दोलिकास्तम्भावेव । **सर्वाङ्गीणेति**—सर्वाङ्गं व्याप्नोतीति "सर्वाङ्गीणः" । **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति (५।२।७)** इति द्वितीयान्तात् सर्वाङ्गशब्दात् खः । खस्य ईनः । परस्परस्मिन् भवः "पारस्परिकः" आध्यात्मादित्वात् भवार्थे ठञ् । सर्वाङ्गीणश्चासौ पारस्परिकः संश्लेषः आलिङ्गनं तेनेवेत्युत्प्रेक्षा* । **प्रफुल्लाः** = विकाशिन्यः । **विविधकुसुममयी** = उच्चावचपुष्पप्रचुरा । **भ्रमदिति**—भ्रमतां गुञ्जारवं कुर्वतां भ्रमराणामलीनां निकरैः व्रातैर्झङ्कृता झाङ्कारिता नादितेति यावत् । **चक्षुष्मताम्** इति कथनेन रसिकाणामेव मनोहरत्वे दोलिकाया अतिशयिता सूचिता । वाच्यार्थस्तु—द्रष्टृणामिति । **एतदिति**—यस्मिन् हरिते स्थले दोलिका वर्त्तते तस्य शाद्वलस्य मध्ये मध्ये इत्यर्थः । † **आसन्द्यः** = वेत्रासनानि "कुरसी"ति प्रसिद्धानि ।

**प्रत्यासन्दि** = आसन्दीमासन्दीं प्रति इति अव्ययीभावः । प्रफुल्लानि सुमानि पुष्पाणि येषां ते **क्षुपाः** = ह्रस्वशाखा द्रुमाः । "प्रतिक्षुपम्" इति पूर्ववत्

---

* अत्र—लतानां स्वभावप्रफुल्लत्वम् परस्पराश्लेषहेतुकत्वरूपेण सम्भावितमिति हेतूत्प्रेक्षेयम् ।

† आस्यतेऽस्यामिति **आसन्दी** । आस उपवेशने **अब्दादयश्च (२०।४।१६८)** इत्योणादिको निपातितः । "वेत्रासनमासन्दी स्त्री वृषी च व्रतिकासनम्" इति कोषः ।

समासः । **आलवालेषु** = आवापेषु । "स्यादालवालमावालमावापः" इति (अमरः) **सकोरकाः** = सकलिकाः । **अङ्कुराः** = अभिनवोद्भिदः शोभन्ते । "**अङ्कुरो** रोम्णि सलिले रुधिरेऽभिनवोद्गमे" इति ( हैमः ) ।

पृ० १६७,१६८। **वर्त्तुलक्षेत्रं** चैतत् परितः = एतस्य वर्त्तुलक्षेत्रस्य समन्तादित्यर्थः । "**अभितः** परितः समयानिकषा हा प्रतियोगेऽपि" (वा० ) इति परितोयोगे द्वितीया । वर्त्तुलक्षेत्रम् = गोलस्थलम् । **कुसुमिताः** = प्रफुल्लिताः । कुसुमानि सञ्जातानि * एषाम् । **कदम्बकुटाः** = कदम्बवृक्षाः ।

**तेषा**ञ्चैकैकमन्तरा = एकमेकमन्तरित्येत्यर्थः । **माकन्दद्रुमाः** = रसालवृक्षाः । **मध्ये** मध्ये चेति = विहितः पार्श्वस्थपादपैः सन्निधिवर्त्तिभिर्द्रुमैः आश्लेषः आलिङ्गनं सम्बन्धश्च याभिः ताः † मन्दमन्दम्-**अनिलालोलाः**=अनिलेन वायुना आसमन्तात् लोलाःचपलाः वातनुन्नाः लताः **लसन्ति**=शोभन्ते । **समासोक्ति**रलङ्कारः-अत्र-प्रकृतानां द्रुमाणां लतानाञ्च परस्परमाश्लेषे वर्ण्यमाने अप्रस्तुतनायकनायिकालिङ्गनादिव्यवहारपरिस्फूर्त्तेः । तदुक्तम्-**समासोक्तिः परिस्फूर्त्तिः** प्रकृतेऽप्रकृतस्य चेत्" इति । **समवयस्काः** = समं वयोऽवस्था यासां ताः । ***चुम्बितयौवनाः** = उत्स्फुटिततारुण्याः । **सुन्दर्यः** = रामाः । रमण्यः । **वासांसि** = वस्त्राणि । महाराष्ट्रकन्योचितानि, **अतिरमणीयानि** = अत्यन्तहृद्यानि । "**ये एते**" इत्यत्र **ईदूदेद्-द्विवचनं प्रगृह्यम्** ( १।१।११ ) इति प्रगृह्यसञ्ज्ञायां प्रकृतिभावः । **उत्थाय**-मुत्थायम् = ऊर्ध्वीभूय २ **तयोः** द्वयोः चुम्बितयौवनयोः कन्ययोः "केशाः प्रसाधिताः" इत्यादि षष्ठी सम्बन्धो बोध्या । **विभज्य** प्रसाधिताः = प्रतिकर्मीकृताः = सीमन्तसरणिं निर्माय सज्जिताः शिरोवालाः "सन्ति" इति शेषः । एवं सर्वत्र यथायोगं क्रियासम्बन्धो बोध्या । **पीतरक्ते**ति—पीतञ्च रक्तञ्च पीतरक्तम्, तच्च तत्

---

* **तदस्य सञ्जातं** तारकादिभ्य इतच् (५।२।३६) इत्यनेन "कुसुमिता" इत्यत्र इतच् प्रत्ययः ।

† आ समन्तात् जलस्य लवमालाति इति **आलवालः** । "ला" आदाने । **मूलविभुजादिभ्यश्च** इति ( वा० ३।२।५ ) इति वार्त्तिकेन कः प्रत्ययः ।

‡ "मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्" इति **कालिदासः** ।

* अत्र चुम्बतिर्वक्त्रसंयोगरूपे मुख्यार्थे सबाधः सन् तारुण्यस्योद्गमत्वेन रूपेण लक्षणलक्षणया सम्बन्धसामान्यं लक्षयति, वाच्यार्थश्च अत्यन्तं तिरस्कृतः । रम्यातिशयत्वं प्रयोजनम् ( अक्षम )

कौशेयसूत्रं पट्टसूत्रं तस्य ग्रन्थनपाटवेन = गुम्फनचातुर्येण अङ्किता लाञ्छिता *कवरी = केशविन्यासः वेणीत्यर्थः। **विविधेति**—विविधैः नानाप्रकारैः मणिभिः मुक्ताविशेषैः जटिता जटलिता या †वालपाश्या पारितथ्या स्त्रीणां सीमन्तभूषणविशेषः तया, कनककुसुमैः सुवर्णपुष्पैश्च **अलङ्कृतम्** = मण्डितम् **शिरः** = उत्तमाङ्गम्। **सुवर्ण**-सूत्रस्य वेष्टनेन वलनेन आविष्कृता प्रकटीकृता बहुला प्रचुरा सुषमा परमाशोभा यस्या एवंभूता—**कुण्डलीकृत्य**=कुण्डलाकारं नीत्वा **वेष्टिता**=जूटिता। **वेणी**= केशबन्धनम्। 'वेणी केशस्य बन्धने' इति (मेदनी)। **सिन्दूररेखाङ्किता**=* नागसम्भवलेखालिखिता, **कवरी**मध्यरेखा=केशानां मध्यगता लेखा (अस्ति)। **मौक्तिक**गुच्छेति—मौक्तिकानां मुक्तामणीनां गुच्छेन स्तवकेन अङ्कितं जटितं यत् सुवर्णभरणं तेन अलङ्कृता भूषिता **नासा**=नासिका। **आरक्तेति**—आरक्तया समन्ततो रक्तवर्णया कौशिककञ्चुकिया=पवट्टस्त्रीयचोलिकया छन्नमावृतम्, **आरब्धः** समुपक्रान्तः कुचयोः स्तनयोः उन्नतिमहोत्सवः उद्गमनोद्भवो यत्र तत्, अवलोचकानां द्रष्टॄणां (यूनामेवं) नयनयोः वशीकरणं पाशीकरणम् एवंविशेषणविशिष्टं **वक्षः**=उरःस्थलम्। **कर्णिकायुगलेति**— † कर्णिकायुगलेन=तालपत्रद्वन्द्वेन चोचुम्ब्यमानं=पुनः पुनः संस्पृश्यमानम्, **दोलन**श्रमेण=दोलाखेलनग्लान्या उद्भूतानां जातानां स्वेदकणिकानां घर्मलवानां पटलेन=संघेन परिलसितं शोभायमानम्। **समीरसरणेन**=पवनसञ्चलेन आन्दोलितैः हिल्लोलितैः चूर्णकुन्तलैः कुटिलकेशैः वीजितं=सेवितं व्यजनितमित्यर्थः, एवंभूतं **कपोलयुगलम्**=गण्डद्वयम्। **सौवर्णेति**—सुवर्णस्य विकारः सौवर्णम्=कुन्दीकरणमित्यर्थः सौवर्णैश्च

---

* "**कवरी** केशवेशः" इति (अमरः) **जानपदकुण्डगोल०** (४।१।४२) इति सूत्रेण ङीप्। कंशिरो वृणोति आच्छादयतीति व्युत्पत्तिः। "कवरी केशविन्यासशाकयोः" इति (हैमः)।

† वालपाशे केशसमूहे साधुः। **तत्र साधुः** (४।४।९८) इति यत्। वालेषु पाश्या पाशसमूहो वा वालपाश्या।

* **नागं**=सीसं सम्भव उत्पत्तिस्थानमस्येति—नागसम्भवः। '**सिन्दूरं** नागसम्भवम्' इति (अमरः)।

† 'कर्णिका तालपत्रं स्यात्' इति (अमरः)। 'कर्णिका कर्णभूषणे। बीजकोशे सरोजस्य करमध्याङ्गुलावपि। कुट्टिन्यां हस्तिहस्ताग्रे' इति (हैमः)। **कर्णललाटात्कनलङ्कारे** (४।३।६५।) इति सूत्रेण कन्।

मौक्तिकैश्च राजितं मण्डितं यद् ग्रैवेयकं=ग्रीवायां भवं *कण्ठभूषेति यावत् तेनाऽङ्किता मण्डिता **कम्बुग्रीवा**=काम्बाकारा शिरोधरा। **कुलकुक्षिग्रीवाभ्यः श्वाऽस्यालङ्कारेषु** ( ४।२।९६ ) इति सूत्रेण भवार्थेऽलङ्कारे ढकञ् । अथवा—**ग्रीवाभ्योऽण् च** ( ४।३।५७ ) इति सूत्रेण पक्षे ठञि **ग्रैवेयम्** = ग्रैवेयमेव ग्रैवेयकम् । स्वार्थिकन् । **दोलादोलनेति**—दोलादोलनेन=दोलाया हिल्लोलनेन दोदुल्यमाना=पुनःपुनरुत्क्षिप्यमाणा या ललिता मनोहरा ललन्तिका=लम्बनाख्यं कण्ठभूषणं तया लालितं=लाडितं **उरः**=वक्षः । रसिकतया विशेषतः पुंसां कामोद्दीपकत्वेन पुनरप्युरो वर्णितम् । † **लम्बनं** ललन्तिका ' इति (अमरः)

पृ० १६०। **पञ्चकच्छभंग्या = हंसकेति**-हंसकं=नूपुरम् । काञ्ची=रशना । कङ्कणादि=वलयप्रभृति तैर्मण्डितानि=भूषितानि यानि अङ्गानि पादाद्यवयवाः। अल्पं वयो जुषाणा=सेवमाना ते द्वे अपेक्ष्य किञ्चिदल्पवयस्केत्यर्थः । **धम्मिल्लेति**—धम्मिल्लेन = संयतकचनिचयेन समुल्लसन् शोभमानो मूर्द्धभागो शिरोभागो यस्याः सा । **कुंकुमेति**—कुंकुमविन्दुना = विन्द्वाकारेण केसरातिलकेन सुन्दरं मनोहरं ललाटं गोधिर्यस्याः सा तादृशी । कज्जलाञ्जनेन रञ्जितं लोचनयुगलं यस्याः । सा । **नागवल्ली**दलरसना=ताम्बूलीच्छदवत् ( वर्तुलेत्यर्थः ) रसना यस्याः सा । **रक्ताधरेति**—रक्तेन शोणितेन अधरेण वर्धिता वृद्धिं नीता उच्चायिता रसिकजनानां कामुकानां पिपासा तृट्=तच्चुम्बनविषयिणी इच्छा यया सा । पुनःकीदृशी—"वक्षसा कञ्चुकीं बिभ्रती" इत्यन्वयः । **कञ्चुकीम्**=चोलिकाम् । कथम्भूतेन वक्षसा—**अभिनवेति** अभिनवो नूतनः समासादितः प्राप्तः मांसलतायाः स्थूलतायाः भावः स्थितिरवस्थाविशेषो येन तेन—उन्नत कुचेनेतितात्पर्यम् कथम्भूतां कञ्चुकीम्-**वृन्ताक**श्यामाम्=‡ भंटाकीवत् कृष्णाम् । **कौशेयसूत्ररचिताम्**=पट्टवस्त्रस्यूताम् । पुनः-**समावृत्ता**र्धबाहुम्=समावृत्ता प्रत्यावृत्ता अर्धबाहुर्यस्याः ताम् । ' **समावृता**र्धबाहुम् ' इति पाठं सम्पश्चं प्रपद्ये । चोलिका हि अर्धबाहुर्भवति । समावृतं आच्छन्नम् अर्धं बाहोर्यया सेति तामित्यर्थः । पुनः कीदृशीम्—**सुवर्णेति**—सुवर्णसूत्रेण सुवर्णविकारेण सूत्रेण 'कनारी' इति पदवाच्येन रचितानां लतानां वल्लीनां वितानेन विस्तारेण

---

* ' कण्ठा ' इति प्रसिद्धिः ।

† किञ्चिल्लम्बमानकण्ठभूषणं ' लम्बन ' मित्युच्यते ।

‡ वृन्ताकं स्त्री तु वार्ताकुर्भण्टाकी भंटिकाऽपि च इति ( निघण्टुः )

रोचितः भ्राजमानः प्रान्तः कोणभागो यस्याः ताम् ।

पुनः कन्यामेव वर्णयति—**दोलादोलनेति**—दोलायाः दोलिकायाः दोलनेन हिन्दोलनेन यो * वेगभङ्गः=जवरोधः तत्परवशतया तदायत्ततया **उच्छाल-मुच्छालम्**=उच्छाल्य २ **उरसि**=वक्षःस्थले **निपतन्तीम्**=स्खलन्तीम् **नक्षत्र-मालाम्** = सप्तविंशतिमौक्तिकनिर्मितांमालाम्, कथम्भूताम्—**कुचप्रदेशा-धस्तात्**=स्तनतलाधोभागात् **परिवेष्टितं** वलितं यत् शोणं रक्तं चैलं वसनं तस्या-ञ्चले कोणे आपातिनीम्=समन्ततः पतनशीलामपि **तदुपरि**भागे=तस्य चैलाञ्च-लस्य उपरि प्रदेशे प्रत्यक्षतः दरीदृश्यमानं=भृशमालोक्यमानं पूर्वार्धं यस्याः तां नक्षत्रमालां **धारयन्तीं**=परिदधानां । **सुवर्णेति**—सुवर्णस्य हिरण्यस्य विजि-त्वरो जयशाली वर्णो यस्याः सा तां गौरवर्णामित्यर्थः । **मूर्त्तिमती**वशोभा=आकृ-तिमती शोभेवेति, धारितो देहो यया एवम्भूता **प्रेमपरम्परेव**=प्रीतिलतिकेव, **कलितो** धृतोऽवतारो यया एवम्भूता **रतिः** कामपत्नीव आसीत् । अत्र सर्वत्रोत्प्रेक्षा अनुप्रासादिच्छटा तु स्वयमूह्या । **वेगः**=जवः । **ववृधे**=एधाञ्चक्रे । **साङ्ग-हारम्** = अङ्गहारेण अङ्गाक्षेपेण सह वर्त्तते तद् यथा तथेति क्रियाविशेषणम् । **हन्ति**=ताडयते गमयतीत्यर्थः । **मञ्जीर**रशनादीनाम्=नूपुरकाञ्च्यादिभूषणानाम् **विलक्षणम्**=अलौकिकम् । शिञ्जनम् । **शिञ्जितम्**=शब्दः । 'भूषणानान्तु शिञ्जितम्' इत्यमरः । **प्रतीति**—गमागमञ्चेत्यर्थः ।

**पृ० १७० ॥ कर्णेति**—कर्णयोर्भूषणीकृतानाम्, अवतंसीकृतानामिति यावत् ***पाटलि**कुसुमानाम् = अमोघपुष्पाणाम् । **केशेषु** = शिरोवालेषु । **व्या-सञ्जितानाम्**=व्याघुट्टितानां चितानामिति यावत् । **मल्लिकाकोरका-णाम्** = मालतीकलिकानाम् । **विशिथिल**दलानि = दोलादोलनेन विचलित-बन्धनानि पत्राणि । **परिस्खलन्ति** = परितः पतन्ति स्रंसन्त इत्यर्थः । † **महा-मधुरेति**—महामधुरम् = अतिस्वादु यन्माध्वीकम् = ‡ मधुमद्यं तस्य मधुरिम्णो = माधुर्यस्य धिक्कारे = न्यक्करणे योऽधिकारः सामर्थ्यविशेषः तस्य धारिणी 'गीति' रित्यस्य विशेषणम् । अत्यन्तं मधुरोन्मादकारिणी च । पुनः कीदृशी—**प्रफुल्लेति**—

---

* '**वेगः प्रवाह**जवयोरपि' इति (अमरः)।

* 'अमोघा **पाटलि** र्न स्त्री' इति (वैजयन्ती)।

† 'मधुमद्ये तु **माध्वीकं** कामिकान्तं मदोत्कटम्' इति (वैजयन्ती)।

‡ **अनुप्रास**प्रधानं गद्यमिदम् ।

प्रफुल्लो विकाशी उल्लासतल्लजः = प्रकृष्टोल्लासो यो § मल्लाररागः तदनुसारिणी—एवम्भूता ' गीति गातुमारब्धा ' इत्यन्वयः। **तथाही**ति तामेव गीतिं दर्शयति—**घनपटलीति**—घनानां मेघानां पटली राजिः बहु तोयं वर्षति। **अयम्** = असद्दृष्टिपथमवतीर्णः **पथिकः** = यात्रिकः **घनपटलीनमुखः** = घनपटे मेघखण्डे लीनं तन्मयतां गतं मुखं यस्य, मेघे दत्तदृष्टिरित्यर्थः। एतेन पथिकस्य **विप्रलम्भ**विजृम्भणा सूचिता। किञ्च—बहूनां धाराणामासाराः जलदेभ्यो निःसृता धारासम्पाताः **समुदिताः** = सम्यगुदिताः प्रवर्त्तमानाः सन्तीति शेषः। **रसिकाः** = रागिलोका अपि **बहुधा** = नानाप्रकारेण **रागैः** = मल्लारादिभिरेव स्वस्वप्रियाविषयकैश्चित्तवृत्तिविशेषैः कामैर्वा **मुदिताः** = हृष्टाः ' वर्त्तन्ते ' इति शेषः।

अत्र ' मुख—पुच्छक ' यमकयोः संसृष्टिः। यदि प्रथमः पादो द्वितीये यम्यते तदा ' मुखं ' नाम यमकम्। तृतीयः पादश्चतुर्थे चेद् यम्यते तदा 'पुच्छं' नाम यमकम्। एवमत्र प्रथमपादस्य द्वितीये, तृतीयस्य च चतुर्थे यमनमधोदर्शित स्थूलवर्णाकारेण स्पष्टम्—

> **घनपटली** बहुवर्षति तोयं
> **घनपटली**नमुखः पथिकोऽयम्।
> **बहुधारा**साराश्च **समुदिताः**
> **बहुधारागै** रसिका **मुदिताः** ॥

किञ्च—पादान्तगो **ऽन्त्यानुप्रासो**ऽप्यात्रालङ्कारः। उक्तञ्च **विश्वनाथेन**—

> **व्यञ्जनञ्चेद्यथावस्थं सहाद्येन स्वरेण तु।**
> **आवर्त्यतेऽन्त्ययोज्यत्वादन्त्याऽनुप्रास एव तत्॥** इति।

---

§ अमेव ' मल्लारी ' इत्याख्य इत्याभाति—**सङ्गीतदर्पणे**—श्रीरागाद्याः षडेव रागा उक्ताः तासां पृथक् २ रागिण्यः सन्ति। ' मल्लारी ' तु मेघरागस्य रागिणी। तथा च तत्रैवोक्तम्—

> **मल्लारी सौरटी चैव सावेरी कौशिकी तथा।**
> **गान्धारी हरश्रृङ्गारा मेघरागस्य योषितः॥** इति।

अग्रे सन्तः प्रमाणम्।

**एवम्** इत्यारभ्य 'आकलयत्' इत्यन्ते गद्ये श्रान्तनायिकाजातिः= (स्वभावोक्तिः) अलङ्कारः। **स्वेदैः** = घर्मलवैरित्यर्थः। **क्षालितौ** = धौतौ व्याप्ता वित्यर्थः। **वसनम्** = वस्त्रम्। **आर्द्रितम्** = क्लिन्नम्। **वपुः** = शरीरम् **वेपथुना** = कम्पेन, **चुम्बितम्** = स्पृष्टम्। शरीरञ्चकम्पे इत्यर्थः। **श्वास**प्रश्वासयोरिति—**त्वरिता** = वेगवती अजायतेति शेषः। **आननच्छटा** = मुखच्छविः। **काञ्चन**कमनीयाम् = किमप्यलौकिकं रामणीयकं दधानाम्। **शोणता** शोभाम् = रक्तालालित्यम्—**आकलयत्** = दध्रे। **ललिता**विशाखाभ्यामिति—**राधिकेव**' इत्यत्र—**उपमा**लङ्कारः। **इयमपरा** = किञ्चिदल्पवयस्का या तृतीया आसीत् अर्थात् सौवर्णीति प्रसिद्धा **कोशला**। **दोलापट्टि**कोपविष्टा सतीतिशेषः। * **नीपेति**—नीपशाखायाः कदम्बशाखाया प्रचुम्बिनी सङ्गिनी या दोला तस्या वेगं = रंहः **असहमाना** = अमर्षयन्ती। 'कदाचित् भुवम् कर्हिचित् आत्मानम्' इत्यादि द्वितीयान्तानां सर्वेषां पदानाम् 'अवलोकयन्ती' इति पदेन सम्बन्धः।

पृ० १७१ ॥ **समीरे**ति—समीरवेगेन पवनरंहसा आहतस्य = उच्छाल्यमानस्य वसनस्य वस्त्रस्य अग्रेण ताडयमानायां = आहन्यमानायां दोलायाम्—अवलम्बिनी सा चासौ शृङ्खला ताम् अर्थात् दोलाबन्धनभूतामेव। 'कदापि **पिक**शावकान्' इति सम्बन्धः। कथम्भूतान् पिकशावकान्—**तारेति**—तारस्वरेण= उच्चस्वरेण अर्थात् पञ्चमाख्येन स्वरेण यद् गानम् अथवा तारस्वरो यत्र तादृशं यद्गानं = गीतिः तस्य श्रवणेन आकर्णनेन विद्राविता पलायिता * निद्रा येषां तान्। **पुनः**—कदम्ब † शाखानां नीपशिखानां सन्धिषु ‡ जोडेषु विलम्बिनां दोलितानां नीडानां कुलायानाम् अन्तराले अभ्यन्तरे रिङ्खणं = § रिङ्खणं येषां तान्। **पुनः**—सिताः श्वेतवर्णाः पीताः = पीतवर्णाः सृक्कण्यः ओष्ठप्रान्तभागा येषां तान्। **पुनः**—न प्राप्ता आसादिता पत्त्रतीनां पत्त्रमूलानां पुष्टिः उड्डयनसामर्थ्य

---

* '**नीपः** कदम्बबन्धूकनीलाशोकद्रुमेषु च' इति (व्याख्यासुधा)।

* **जुड** बन्धने। तौदादिकः। भावे घञ्।

† '**शिखा** शाखा लता समा' इति (अभिधानचिन्तामणिः)।

‡ शावकगतिविशेषः।

§ **गुच्छे** गुच्छस्तवकगुत्सकाः। 'गुलुञ्छः' इति (अभिधानचिन्तामणिः)।

यैः तान् । **पुनः**—अर्धोन्मिषिते अर्धोन्मीलिते लोचने नेत्रे येषां तान् । **पुनः**—विहितः कृतः मञ्जीरानुकारी = नूपुरसदृशः रावः चुङ्कारो यैः तान् **पिकशावकान्** = कोकिलशिशून् । **कर्ह्यपीति—दोलान्दोलनेति**—दोलाया आन्दोलनैः गमागमैः दोल्यमाना हिल्लोल्यमानाः ( सञ्चाल्यमाना इति यावत् ) याः दोलाग्रे विलम्बिन्यः प्रतायमानाः लताः तासां प्रतानेभ्यः कुटिलतन्तुभ्यः निपत्यमानानि यानि कुसुमानि पुष्पाणि तेषां स्तवकान् = गुच्छान् । अथवा–निपत्यमानान् कुसुमस्तवकानिति योज्यम् ।

**भ्रमरिकाभिः** = भ्रमणकैः आकलिता व्याप्ता दृष्टिः यस्याः सा । **प्रतीति** = गतेर्भेदः गमागमरूपः गतिभेदं गतिभेदं प्रतीति प्रतिगतिभेदम् " अव्ययीभावः । **पतन्तीव** = पतनोन्मुखीव । **कम्पमानेव** = वेपथुमतीव । **आहतेव** = आताडितेव । **भीतभीतेव** = अतिभीतेवेत्यर्थः । **मुग्धा** = बाला शैशवतारुण्यसन्धौ वर्त्तमानेत्याशयाः । "**का नाम** बाला द्विजराजपाणिग्रहाभिलापं कथयेदलज्जा " इति नैषधे । **क्रिया**समभिहारेण = पुनःपुनरित्यर्थः **वक्तुमार**ब्धवती = लपितुं प्रचक्रमे । अत्र गद्येऽनुप्रासबाहुल्यम् । **साम्प्रत**मेवेति–नर्मोक्तिः । **दोला**विहाररसम् = दोलाखेलानन्दम् । **रसयिष्यसि** = अनुभविष्यसि वर्धिष्यसे वा । "**सौवर्णी** च–उभयतो ग्रीवां परिवर्त्त्य मन्दं सक्षोभमिवाऽचकथत् " इति सम्बन्धः । "**चारु**हासिनि ! " " विलासिनि ! " इति सम्बोधनपदे । **अलं** हासैः = हासैर्नर्मैः साध्यं नास्तीत्यर्थः "**गम्यमाना**ऽपि **क्रिया** कारकविभक्तौ प्रयोजिका " इति " हासै " रित्यत्र तृतीया । **भ्रमति** = अनवस्थितं भवति मे = मम **चक्षुः** = दृष्टिः। **क्षुभ्यति** = सञ्चलति। **मनः** = हृदयम् । **क्षमता** = सहनशक्तिः । तन्न **पारयामि** = नैव शक्ता भवामि । **ग्रीवां** परिवर्त्त्य = शिरोधरां मोटयित्वा । **सक्षोभ**मिव = किञ्चित्कोपकलुषितमिवेत्यर्थः । ततः—"**तृतीया**ऽपि सप्रेम समवादीत् इति सम्बन्धः ।

**पृ० १७२** ॥ अथ = तृतीयायाः कथनानन्तरम् । **प्रेमेति**—प्रेमालापः नर्मोक्तिः तत्परायणासु एव तासु। **तद्धस्ताव**लम्बनेनैव च सभयं सौवर्ण्यप्यवतीर्णा। एतेन सौवर्ण्या भयातिशयः खेलानभ्यासश्च सूचितः । **सावेगम्** = सचक्रम् दोलान्दोलनभ्रमरिकासहितमित्यर्थः । **प्राप्तधैर्या** = ( भ्रमरिकावतारकारणात् ) स्वभावस्थिता । **ते** = चारुहासिनीविलासिन्यौ । **खिन्नेति**—खिन्नानि = श्रान्तानि स्विन्नानि = आर्द्राणि सर्वाणि च तानि अङ्गानि अनयोः सन्तीति तादृश्यौ । **कदलीदलखण्डेन** = रम्भापत्रभागेन । आत्मानं **वीजयन्त्यौ** =

सेवमाने । **पर्यटितुम्** = भ्रमितुम्—**आरेभाते** = प्रचक्रमाते । **शाद्वले** = हरिते क्षेत्रे **पार्श्वस्थेति**—पार्श्वस्थायाः समीपवर्त्तिन्या मल्लिकायाः * विचकिलस्य स्तबकेषु गुत्सकेषु यत् परिक्रमणम् = सगुञ्जारवभ्रमणं तत्र परवशः तत्परो यो मिलिन्दवृन्दः भ्रमरसमूहः तस्मिन् दत्ता धृता दृष्टिर्यया: तस्याः सौवर्ण्याः । **एवम्**—वक्ष्यमाणप्रकारेण । **आलापाः** = वार्त्ताः । **मुग्धा** = बाला । **दुग्धमुखी** = क्षीरकण्ठी । **जहसतुः** = हास्यमकार्ष्टाम् **क्ष्वेलनानि** = नर्मवचांसि ।

**पृ० १७३** ॥ **रासपञ्चाध्यायीम्** = "जयति तेऽधिकं जन्मना व्रजः" इत्यादिम् । † **उरसि** मुरारेरुपहितहारे"—इत्यादि गीतानि । आदिना "विगलितवसनं परिहृतरसनं घटय जघनमपिधानम्" इत्यादि ग्राह्यम् । "गायन्ती—एव **वाष्पप्रवाहेण** = अश्रुपूरेण **अञ्जनम्** = कज्जलम्, **अधररागम्** = अधरे वर्त्तमानं यावकरागम् **वक्षःकेसरम्** = उरसि लिप्तं काश्मीरकुङ्कुमञ्च **क्षालयति** = धावयति । **ह्रेपयथः** = लज्जयथः । **विहरतम्** = क्रीडतम् । **हे ! सौवर्णि !** न **रोचन्ते** = नैव भान्ति । **अग्निहोत्र**विधिम् = अग्निहोत्राऽनुष्ठानप्रकारम् । **योगसाधन**पद्धतिम् = योगश्चित्तवृत्तिनिरोधः तस्य साधनानि प्राणायामप्रत्याहाराधारणाध्यानादीनि तेषां पद्धतिम् = रीतिम् । **वेदान्तोपदेशैः** ब्रह्मविद्याया उपदेशैः । **अपराम्** = द्वितीयाम् ‡ **गार्गीम्** वाचक्नवीं गार्गीम् ब्रह्मविद्याविदुषीम् । **असमत्साहचर्यैः** = अस्माकं सख्यैः । "सखि ! सखि !" इति । **सम्बोध्य** = आहूय **वञ्चनैः** = प्रतारणैः ।

**मास्म** उपेक्षिष्ठाः=मा उपेक्षां कार्षीरित्यर्थः **प्रीतिपात्रे** = प्रेमास्पदीभूते । **अन्तरङ्गित्वगर्विण्यौ** = रहस्यरक्षाऽभिमानिन्या । न **वदि** = नैव कथयसि । **अनुरागमिव** = आसक्तिमिव **वहसि** = धत्से । कदाचित् **विमनायसे** = उन्मना भवसि । **शृङ्गाररसप्लातानाम्** = शृङ्गाररसप्लावितानाम् अनुभूतशृङ्गाररसानामित्यर्थः । पुरातने लघुतराटिप्यणे तु—"गीतगोविन्दादि काव्यानुभवजन्योऽयं

---

* "**मल्लिका** स्याद्विचकिलः" इति (अभिधानचिन्तामणिः) । मालतीभेद एवेति तु वयम् ।

† "**घन इव तरलबलाके । तडिदिव पीते रतिविपरीते । राजसि सुकृतविपाके**" इति शिष्टं पादत्रयम् ।

‡ गार्ग्याः प्रसङ्गो बृहदारण्यकोपनिषदि वर्त्तते ।

रसानुभवः" इत्युक्तम् । गीतगोविन्दादिकाव्येषु विशिष्टतया शृङ्गाररसानुकर्ष-दर्शनात् ।

पृ० १७४ ॥ **गोपितः** = रहसि रक्षितः **अनुरागप्रवाहः** = प्रिया-सक्ति (प्रीति) पूरः । **नवेति** = नवो नूतनोऽभ्यस्तः शिक्षितः अपाङ्गप्रसारः = कटाक्षपातप्रकारः याभ्यां ते तव दृशौ = नेत्रे । **आलीढेति**—आलीढा चुम्बिता तालीदलस्य तृणद्रुमविशेषस्य छविः छटा यया एवंभूता कपोलपाली = गण्डस्थलम् । **सह्रीति**—ह्रीस्तम्भेन = लज्जाभरेण सहितो यो निःश्वासः = दीर्घश्वासः तेन यन् मान्थर्यमाधुर्यम् = आलस्यलालित्यं तस्मात् स्वरभङ्गो येषु एवम्भूता आलापाः = लपितानि । **सर्वम्** = तव हृदयगतं भावम्, **स्फुटयन्ति** = प्रकटयन्ति । **तदलमिति** = सम्प्रति न गोपनीयामित्यर्थः । **बाह्यैः** = बहिर्भूतैः । **आलापशतैः** = अनेकाभिर्व्याजवार्त्ताभिः सम्प्रति न किञ्चित् कार्यमस्तीत्यर्थः । "सत्यम्" इति । **किमिव** चिन्तयसि = योगिनीव वा वियोगिनीव वेति गूढोऽभिसन्धिः । केन च **महाभाग्येन** = महामहिम्ना **सहचरिताम्** = एकत्राऽवस्थितां मुक्तामिति व्यङ्ग्यम्, स्वमूर्त्तिम् पश्यसि । **स्वापेषु** = स्वप्नेषु । (हे !) "**सौवर्णि** ! इत्यारभ्य "भिद्यत इवावयोर्हृदयम्" इत्यन्तग्रन्थेन सौवर्ण्यां विरहो दर्शितः । **एकान्ते** तरुतले उपविशन्तीम्" इत्येतेन स्मररागस्य दुर्वारतया एकान्ते तन्निगूहनमिति * व्यज्यते । "क्वचन रहसि शिलासु—चिन्तयन्तीम्" इति इति * **चिन्ताख्या** द्वितीया स्मरसादशा । "कदाचित् कुञ्जान्तःप्रविश्य—प्रतिमूर्त्तिमिव लिखन्तीम्" इति स्मृतेः परा काष्ठाऽनुरागस्य च प्रगाढता सङ्गमाभिलाषश्चेत्यादिकम् । **कदाचनेति**—पाण्डुनि=विरहकृशे गण्डतले कपोलपाल्यां विसृत्वराणि=प्रपतन्ति **अश्रूणि**=अस्रबिन्दून् **पटप्रान्तेन**=अञ्चलकोणेन । **मार्जयन्तीम्**=प्रोञ्छयन्तीम्, एतेन **सम्प्रलापावस्था** 'क्वचित् लुण्ठितेनेव वञ्चितेनेवे' त्यादिना **उन्मादावस्था** । कञ्चिद् **धवलिमानम्**=श्वैत्यमिति अङ्गेषु वहन्तीम् इत्यनेन पाण्डुताकृशतादिरूपो **व्याधिरित्याद्याः**

---

* "खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः" इति (अमरः) ।

* चिन्ताद्याः कामदशा दश साहित्यदर्पणादावुक्ताः । तथाहि—

**अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।**
**उन्मादोऽथ व्याधिर्जडता मृतिरिति दशाऽत्र कामदशा ॥**

एतासां स्वरूपमपि तत्रैव द्रष्टव्यम् ।

कामावस्था उद्बुद्धानुद्बुद्धरूपतया यथायथं सुधीभिरूहनीया ग्रन्थगौरवभयात्तु न बहु प्रपञ्चितम् । **दर्शं** दर्शम्=दृष्ट्वा २ । **भिद्यते**=द्वैधीभवति संशयानं जायते विकलं भवतीत्यत्र तात्पर्यम् । **सर्वत** इति—**संवृत**:=निन्हुतः । अग्निः=अनलः ।

**पृ० १७५ ॥ अनुद्गीर्णम्**=न उद्गीर्णं वान्तमित्यनुद्गीर्णम् नञ्समासः । **विषम्**=हालाहलादि प्राणानपहरति=प्राणघातं करोति । **असूचित**:=अनाख्यातः **व्याधिः**—ज्वरादिरोगः । **अप्रतीकार**:=नास्ति प्रतीकार उपायो यस्य सः असाध्य इत्यर्थः ' या त्वं विश्वासमापितापि न वक्षि तत् संवृताग्न्यादीनामधिकतापादिकमि-वेति **निदर्शना**लङ्कारः **वाक्यार्थयोः सदृशयोरैक्यारोपो निद-र्शना** इति तल्लक्षणात् । ' अनुरागस्य निरोधः ' इति सम्बन्धः । **निरोधः**= अप्रकाशनम् । **दुःखाकरिष्यति**=दुःखिनीं विधास्यति । **सहाये**=सुखादि-विभागपात्रे । **सखीजने**=आलिजने । एतेन विश्वासस्य रक्षणीयत्वं व्यज्यते । ' अन्तर्ज्वरं न विभजसि ' इत्यन्वयः । स्पष्टमन्यत् ।

' **सौवर्णी** तु वाष्पविन्दुसन्दोहप्रवाहेण स्वान्तस्थं धैर्यं गाम्भीर्यञ्च बहिः प्रवाहयामास ' इति सम्बन्धः । **निरन्तरेति**—निरन्तरपरिक्रमणेन=बहुदोला-भ्रामणकरणेन यः क्लमः=श्रमः तेन क्लान्तं=म्लानं । **कमल**पल्लवोदरे=सरसिजपत्र-मध्ये, सुप्तं कलानाथमिव=चन्द्रमिवेत्युत्प्रेक्षा । **कदर्थयन्ती**=तिरस्कुर्वती । **विरहजन्मना**=रघुवीरवियोगजातेन **धवलिम्ना**=श्वैत्येन **भस्मना** रूषितेव= भसितेन छुरितेवेति—**उत्प्रेक्षा** । **वदरपाण्डुना**=वदरमिव पाण्डुना **गण्डेन**= कपोलेन । अत्र **लुप्तोपमा** । **उष्णेति**=उष्णश्वासप्रश्वासयोः आघातेन स्पर्शेन शुष्कः यः तेन अधरेण । **स्वेदजुषा**=घर्मार्त्तेन **वपुषा**=देहेन । कञ्चन **दुष्प्र-तीकारम्**=अशक्योपायमित्यर्थः । **आधिप्रधानम्**=मानसव्यथाहेतुकमित्यर्थः । ' पुंस्याधिर्मानसी व्यथा ' इति ( अमरः ) । **व्याधिम्**=कष्टम् । **स्पष्टयन्ती**= प्रकटयन्ती । **चक्षुषी**=नेत्रे । **धवलतया**=श्वेतीकुर्वता । **कपोलौ**=गण्डयुग-लम् । **मलिनयता**=धूसरयता । **अधरम्**=निम्नमोष्ठम् । **ताडयता**=आघा-तयता, **रागम्**=अधरस्थमेव यावकरसजम् **अपहरता**=मार्जयता । **वक्षसि**= उरसि **शतधारीभूय**=असंख्यातधारारूपेणाऽवतीर्य **पटसन्धिषु**=वस्त्रखण्डेषु **प्रवहता**=प्रसरता एवम्भूतेन—वाष्पाणां नेत्रवारीणां बिन्दुसन्दोहस्य कणसमू-हस्य प्रवाहेण=पूरेण **स्वान्तस्थम्**=हृदयवर्त्ति **धैर्यम्**=वियोगजनितदुःखसहनाऽ-क्षमताम् । **गाम्भीर्यम्**=( कुलाङ्गनात्वात् मुग्धात्वाच्च ) हृदयनिगूहनभावं च बहिः **प्रवाहयामास**=बहिःप्लावयाञ्चक्रे । सौवर्णी कर्त्री । अत्र—प्रियप्रश्न

स्मारितप्रियगावनाद्द्विगुणितविरहविह्वलताजनितरोदनवारिणा धैर्यगाम्भीर्यप्लावन-क्रियोत्प्रेक्षा ज्ञेया । वियोगातिशयश्च व्यंग्योऽपि । **"तां ते** सान्त्वयामासतुः" इति क्रियाकारकसम्बन्धः । **निःशब्दरोदनेन**=तूष्णींविलापेन **रोदसी**=द्यावापृथिव्यौ **रोदयन्तीम्**=विलापयन्तीम् । **अतिशयोक्तिः** द्यावापृथिव्यो रोदनाऽसम्बन्धेऽपि तत्सम्बन्धवर्णनात् ।

**सधडत्कृतिना**=धडत्कृत्या सहितेन **वक्षसा**=हृदयेन, **विवर्णेन**=म्लानेन **वदनेन**=मुखेन । **शून्यया**='दावान्दोलनया' निर्विषयिण्या इत्यर्थः **दृष्ट्या**=चक्षुषा **विकलया**=विह्वलया **अङ्गयष्ट्या**=देहेन । **अतीति**—अति=अत्यन्तं स्फुटीकृतः प्रकटीकृतः प्रियविरहस्य प्रियवियोगस्य क्लेशः कष्टं यया ताम् **आकलय्य**=निर्वर्ण्य । **परवशताम्**=पारतन्त्र्यम् अङ्गीकुर्वदिव हृदयं स्ववशंवदं विधाय' इत्येवं प्रत्येकमन्वयः । † **भज्यमानाम्** स्खलन्तीमिव वाचम्, **रुध्यमानम्**=वाष्पोच्छलनपरिपूर्णमिव कण्ठम्=गलम् । **वेपमानमिव**=कम्पमानमिव । **विग्रहेति**—विग्रहेण कलहेन प्लाव्यमानम् आकुलीक्रियामाणमिव च **चक्षुः**=नेत्रम् **कथकथमपि**=अतिकष्टेनेत्यर्थः **स्ववशंवदम्**=स्वाधीनम् । **विधाय**=कृत्वा । * **ते**=ते चारुहासिनी विलासिन्यौ । **अश्रुमार्जनैः**=अस्रप्रोञ्छनैः **कदलीदलवीजनैः**=रम्भाखण्डवातकरणैः । **शान्तवचनैः**="सखि ! धैर्यं धर, ग्लानिं मा गमः, भगवान् भद्रं वितरिष्यति, तव मनोरथः सेत्स्यति" इत्यादिभिः शान्तिप्रदैः हार्दैः वचनैः **सान्त्वयमासतुः**=धैर्यमापादयामासतुः ।

**पृ० १७६ । "भगिन्यौ !** भवत्यावेव मम जीवने" इत्यादि गद्यं प्रायश्चूर्णकम् **वैदर्भी**रीतियुतं **विप्रलम्भ**शृङ्गारानुगतं ज्ञेयम् । विस्तरेण नोच्यते । **वित्थ**=जानीथ '**विद्**' धातोर्लटि मध्यमाद्विवचने रूपम् । **भाग्यहीनायाः**=हतभाग्याया इत्यर्थः 'मम व्यतीतवृत्तान्तं युवां वित्थ" इत्यन्वयः **जननीति**—जनन्याः मातुः क्रोडे (गोदे) अङ्के या क्रीडा शिशुकेली तस्याः सुखम् । **ताललालनसुखस्य**=पितृपालनसुखस्य **तपोः**=भ्रात्रोः । **पार्श्वपरिवर्तिनः**=निकटचराः **प्रत्यर्थिनः**=प्रतिकूलवर्तिनः शत्रवः । **मृगतृष्णिकासु**=मरुमरीचिकासु । **तृष्णाभिः**=पिपासाभिः लालसाभिश्च ।

---

† इत्यादिषु उत्प्रेक्षालङ्कारः ।

* अत्र प्रगृह्यत्वात्सन्ध्यभावः ।

**आपतन्ती** मृगीव = अत्र—उपमालङ्कारः । यं **प्राणनाथम्** = तमेव रघुवी-रनाम्ना प्रसिद्धम् वस्तुतस्तु—**रामसिंहम्** । **व्यरमत्** = व्यरंसीत् । व्याङ्परिभ्यो रमः ( १ । ३ । ८३ ) इति परस्मैपदम् **प्राणनाथता**-सनाथितः वल्लभताविषयीकृत इत्यर्थः । **आवसथम्** = सद्मेत्यर्थः **पात्रे** = कुलीने । **अभिलाषः** = कामः । **सुपरिणामः** = सुशोभनः परिणामः फलं यस्य सः एवंभूतः **चित्तवन्धः** = मनोलग्नता प्रेमवन्ध इति परमार्थः । **प्रातिपदिक**चन्द्रमिव = प्रतिपदि भवः प्रातिपदिकः । भवाऽर्थेण्—सचासौ चन्द्रः । यद्यपि प्रतिपदि चन्द्रो न दृश्यते तथाऽप्यत्र प्रतिपच्छब्देन द्वितीयाग्रहणेन दोषाभावः । एतस्मिन्नेवार्थे **भारविरपि** प्रायुङ्क्त—"प्रतिपच्चन्द्रमिव प्रजा नृपम्" इति ।

पृ० १७७ । **चिरदाहदग्धम्** = चिरकालीनविरहोष्मणा परिप्लुष्टम् **हृदयहतकम्** = अभाग्यं हृदयमित्यर्थः । **दुःखकथेति**—महाकविः **कालिदासोऽपि**—"कुमारसम्भवे" "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इत्यकथयीत् । **अनुरुद्धाऽपि** = अनुकामिताऽपि । **अपवृणोमि** = **तत्सख्याविति**—मम हतभाग्याया मुखावलोकनमपि न कर्त्तव्यमित्याशयः । * '**हला**' इति सखीनां सम्बोधने प्रयोगः '**मास्म** वदः' = मैवं कथयेत्यर्थः "**मातृ**पितृसुखं सर्वे नाऽनुभवन्ति" इति विधातृसर्गे कर्मणां वैचित्री अनिवार्या तस्माच्छोको न कर्त्तव्य इति भावः ।

**विरहदुःखमननुभूय** = वियोगजनितं क्लेशं मुक्त्वा । **प्रेयसा** = इष्टेन । **संयुङ्क्ते** = मिलितो भवति । **पारावारेति**—पारावारस्य सागरस्य तरङ्गिणीनां वीचिविक्षोभानाम् आघातम् = आताडम्, **असोढ्वा** = असमर्पयित्वा । **मुक्ताः** = मौक्तिकानि न **आप्यन्ते** = आसाद्यन्ते । **शतशः** = अनेकशः **शङ्कलाभिः** = छेदिनीभिः **अनुत्कृत्ता** = अतनूकृता **देवमूर्त्तिः** = दुर्गादि-प्रतिमा **सुसिंहासनार्हाम्** = महासिंहासनस्थितियोग्यां **सुषमाम्** = परमशोभाम् । **न कलयति** = नैवासादयते **तत्** = उक्त हेतोः । **समाश्वसिहि** = धैर्यन्धरेत्यर्थः । † अत्तिके । अत्तिके ! इति **दूराहूतिः** = दूरादाह्वानम् **अवाचि** = उक्तम् । **प्रजावति** ! भ्रातृजाये इत्यर्थः । "प्रजावती भ्रातृजाया" इति ( अमरः ) ।

* "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीम्प्रति" इति ( अमरः )

पृ० १७८ ॥ **सोत्प्रासम्** = सोल्लासम् सोपहासं वा। **अनुमतिम्** = अनुज्ञाम्। **आसाद्य** = प्राप्य। **स्वकटीति**—स्वकट्याः पटप्रान्तेन = अञ्चल-कोणेन आसञ्जितम् लग्नम् एकं **गजदन्त**पट्टिकाफलकम् = हस्तिदन्तखण्डिका-खण्डम् **उत्सार्य** = "निकालकिरवा"। "स्वयमपि चित्रलिखितेव यावत् काञ्चन क्षणान्—**अतिवाहयति** = यापयति। **श्वासभङ्गम्** = भग्नं श्वासम्—उच्छ्वासमित्यर्थः। **प्राणाधारम्** = जीवनौषधम्। † **अदर्शत्** = अलोकिष्ट। **मुदिता** = प्रियदर्शनेन हृष्टा, **मोहिता** = अकाण्डदर्शनप्राप्तया विचित्ता, **कम्पिता** = वेपथुमती हृदयसत्त्वोद्रेकेण कम्पनभावोपेता इत्यर्थः **भीता** = कश्चिन्मां न पश्येदिति त्रस्ता। **ह्रीता** = प्रथमसमागमहेतोर्लज्जां प्राप्ता। अत्र **दीपका**लङ्कारः एकस्यैव कर्त्तृकारकस्य अनेकाभिः क्रियाभिरन्वयदर्शनात्। **नतमुखी** = नम्रमुखी **फलकम्** = फलकलिखितं रघुवीरचित्रम् **गोपायन्ती** = छुपयन्ती, **सन्तस्थे** = आसाञ्चक्रे "**रघुवीरस्तु**—इतः समायात" इत्यन्वयः। **सवैलक्ष्यम्** = साशङ्कम्। **अवीक्षितः** = अदृष्टः। **आजानेयवल्गाम्** = अश्वरश्मिम्। आयोज्य=बद्ध्वा। **उपवनपर्यटनेन** = उद्यानभ्रमणेन हेतुना **स्वेदान्** = घर्मान् **अपनेतुम्** = दूरीकर्त्तुम्। **स्विन्नकपोलयोः** = स्वेद-युक्तयोर्गण्डयोरित्यर्थः। **चूर्णकुन्तलाः** = अलिकलम्बिनोऽलकाः। **श्मश्रुप्ररोह-स्थली** = मूर्च्छतिकोद्गमनस्थाली **स्वेदबिन्दु**व्रजेन = घर्मकणगणेन **मौक्ति-कव्रातेनैव** = मुक्तामणिराजीव—इति **उत्प्रेक्षा**। **अङ्कितैव** = आस-ञ्जितैव। **प्रेयसी** = वल्लभा। **रहसि** = एकान्ते। **पुनरुद्वेल्लित** इव स्वेद-प्रवाहः। पुनरुच्छलित इव घर्मपूरः। केनापि **व्याजेन** = भावितेन हेतुना **परिक्रमाम्** = परिक्रमणम्। **वाटिकाया** = पुष्पोपवनिकायाः। **धीरेति**—धीरो मन्दश्चासौ समीरः पवनः तस्य स्पर्शसुखम् = स्पर्शजनितमानन्दम् **अनुभवति** = भुङ्क्ते।

पृ० १७९ ॥ **चिरतृषिते** = अतितृष्णालुनी अत्यन्तमनुरागिणीत्यर्थः **नयने** = नेत्रे। **सन्तर्पयति** = आनन्दयति। **कमलोदरसोदरे** = सरसिजमध्यभागसदृशे एतेन करयो र्बहुलालित्यं कोमलत्वञ्च व्यज्यते। **स्वप्रति-कृतिः** = स्वकीया प्रतिमा। **साक्षात्कृता** = दृष्टा। **प्रेयस्याः** = वल्लभायाः सौवर्ण्या एव **विलुलितेति**—विलुलितः विलुठितः वारिबिन्दूनां = अश्रुकणानां व्रजः समूहो यत्र ते **लोचने** = नयने। **अहह** = महान् खेदः **किमिति** = कस्माद्धेतोरित्यर्थः **ताम्यसि** = ग्लायसि। **शुष्यसि** = कार्श्यमेपि। **ग्ला-**

**यसि** = क्षीणहर्षा भवसि **खिद्यसे** = दैन्यं प्राप्नोपि । **पथिकजने** = अध्व-नीने । **रज्यसे** = रक्ता भवसि अनुरागमनुबध्नापि । **अश्वपृष्ठमेव**=घोटकपृष्ठमेव । **अशरणम्** = निर्गृहम् । **अव्यवस्थम्** = नियतावासमर्यादारहितम् । **चेतः**= हृदयं **चञ्चलयसि** = व्याकुलीकरोषि । **उद्विजे**=खिद्ये । अहम्—**चीत्**कार, विललाप, उत्तस्थौ ( करौ ) प्रससार, रुरोद (च)"—अत्र सर्वत्र—**परोक्षे लिट्** ( ३ । २ । ११५ ) । उत्तमपुरुषप्रयोगश्चित्तविक्षेपादिना ज्ञेयः । **जटालाभिः**= दीर्घाभिरित्यर्थः । **चिन्ता**ज्वालाभिः = चिन्तार्चिषां मालाभिरित्यर्थः । **कुसु-मानीव** कोमलानि अङ्गानि मास्म **धाक्षीः** इति सम्बन्धः । **दह** भस्मीकरणे—धातुः । लुङि मध्यमपुरुषैकवचनं रूपम् । माङ्योगे अटो निषेधः ।

चक्षुषी **परिमृशन्ती** = परिमार्जयन्ती । **परिवर्त्तित**वदना = अर्थात् तदभिमुखीभूता सती **अभ्यधात्** = अगादीत् । "**वीर !** अभाग्य एष जनः" इत्यारभ्य "किमिव भावयामि" इत्यन्तं गद्यं सौवर्ण्याः स्वप्रेमोद्गिरणबोधकम्, सुस्पष्टञ्च । अत्र व्यङ्ग्यानि—"अस्वायत्तम्" इति त्वयैव हृतम्, "विगलितं धैर्यम्" इति कामस्य परा जागृतिः मुग्धताया अपसरणकालश्च, "पराधीनं चित्तम्" इति पूर्वोक्तमपि अर्थं पुनः प्रकाशयन्त्या स्तस्या उन्मादः, "अप्रतिरोध्या कर्मरेखा" इति त्वयैव सह मे सङ्घटना इत्यादीनि ज्ञेयानि ।

**भावयामि** = आलक्षये । * **वज्रादपि** = अशनेरपि ।

**पृ० १८०** ॥ **निष्ठुरम्** = कठोरम् । **व्यरचि** = निरमायि **विधात्रा** = प्रजापतिना । **स्वेति**—स्वस्मै समर्पितं जीवनं यैः तेषाम् । न अन्यत् शरणं रक्षकं येषां तेषाम् । **सुधासारसारैः** = पीयूषधारानिर्यूहैः 'आलापै' रित्यस्य विशेषणम् । **ज्वलदिति**—ज्वलतो भस्मीभवतो जीवजी-वनस्य = प्राणिप्राणनस्य जीवातुभूतैः जीवनौषधिरूपैः **आलापैः** = लपनैः **आलोकैः** = दर्शनैरपि **दुःखेति**—दुःखमेव दावो वनवह्निः तेन दन्दह्यमानं= जाज्वल्यमानम् **देहम्** = शरीरम् । **न** = नैवेत्यर्थः । **शीतलयन्ति** = शिशिर-यन्ति । **स्वप्राणाधारभूताम्** = स्वजीवनावलम्बभूताम् । **आलोक्य**=दृष्ट्वा अश्रूणि **मुञ्चन्तीम्** = रुदन्तीम् । **विस्मृतात्मा** = विस्मृतः आत्मा स्वरूपं येन सः । **सपदि** = शीघ्रम् । **स्वकक्षगुटिकातः** = स्वकक्षगुटिका-

---

* वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥

काशादित्यर्थः । **पटखण्डम्**=कर्पटमित्यर्थः । " स्वहस्तेन तद्वाष्पाणि अपहरन् "=स्वकरेण तदश्रूणि मार्जयन् । द्वित्रैः **मौक्तिकैः**=मुक्ताफलैः इव । स्वचक्षुषः पतितैः स्खलितैः **कवोष्णैः**=ईषदुष्णैः बिन्दुभिः=कणैः । **तद्धम्मिल्लेति**—तस्याः धम्मिल्लमतल्लिकाम्=प्रशस्तान् कचानित्यर्थः । **आसिञ्चन्**=आर्द्रयन् । **भग्नेन**=त्रुटितस्फुटितेन ।

**अत्र**=विषये । किं **संशेषे**=संशयं करोषि । **कोऽत्र** सन्देहः=नैवेत्यर्थ इति काकुः । **विचिकित्सा**=संशयः पुनरुक्ति नं दोषः विवक्षितार्थस्य दृढीकरणात् । वस्तुतस्तु—एतेन रघुवीरवैक्लव्यातिशयो व्यज्यते । **कौमारेति**—कौमारब्रह्मचर्यम्=बालब्रह्मचर्यम् एव महाव्रतं तेन । **गात्राणि**=अङ्गानि । **जर्जरयिष्यामि**=जीर्णानि करिष्यामि । त्वामेव वा **परिणेष्यामि**=उद्वाहयिष्यामि इति दृढः=अकाट्यः मे **नियमः**=प्रतिज्ञा '**त्वं क्षत्रिय**-कन्याऽसी " त्यादिना समानदेशकालादियोग्यतामतां विवाहो न्याय्य इति व्यक्तीकरोति । **परिणयः**=विवाहः ।

**पृ० १८१ ॥ दूराह्वतिः**=दूरादाह्वानम् । **शाद्वलम्**=हरितं क्षेत्रम् **रिक्तम्**=शून्यम् **अकुरुताम्**=व्यधाताम् । **सुकुमारो** गुणः । '**कन्यका** हि ' इति—एतेन—' उद्बुद्धयौवनानां पितृगृहनिवासो नोचित ' इति व्यज्यते । स्पष्टमन्यत् ।

**पृ० १८२ ॥ समवयस्कैः**=समानं वयो येषां तैः । **विवाहखेला**=खेलारूपो विवाहविधिरित्यर्थः । **व्यधायि**=अकारि । **प्रत्यज्ञासीत्**=प्रतिज्ञामकरोत् । प्रतिज्ञां दर्शयति—**युवभा**विति ।

**तस्य**=वीरसिंहस्य रघुवीरपितुः । **सेनेति**—सेनायाः निवेशः शिविरकृत्यमित्यर्थः तस्य शैथिल्यं त्रुटिम् । **भूसम्पत्तिः**=क्षेत्रधनम् । **विसूचिका**-पीडिता=विसूचिकारोगाक्रान्ता । **चरमं** निरश्वसत्=अन्तिमम् श्वासं प्राप ममारेत्यर्थः । **वीरश्चेति**—वीरः स एव वीरसिंहः **सपुत्रपुरोहितः**=पुत्रपुरोहिताभ्यां सहितः । एतेन विपन्निपातेऽपि 'पुरोहितानां सार्थो न हातव्यः नापि पुरोहितैर्यजमाना' इति प्राक्तनं—व्यक्तीकृतम् । महाभारतेऽपि—युधिष्ठिराद्युपाख्यानेऽयमर्थः स्फुटं-वर्णितो **व्यासेन** भगवतेति नाऽविदितं भारतजुषां विदुषाम् ॥

**प्रफुल्लनयना**=विकसन्नेत्रा भ्रातृसन्दर्शनेन सोदर्यभावोद्बोधनादित्यर्थः **गव्यूत्यन्तराले**=क्रोशद्वयावकाशे ' गव्यूतिः स्त्री क्रोशयुगम् ' इत्यमरः । **यवनसादिभिः**=म्लेच्छाश्वारोहैः । **मल्लहस्तैः**=मल्लः खड्गविशेषः हस्ते पाणौ

येषां तैः । **धानुष्कैः** = धनुषा प्रहरणकैः धनुर्धरैरित्यर्थः । **प्रहरणम्** ( ४ । ४ । ५७ ) इति सूत्रेण प्रहरणवाचिनः प्रथमान्तादस्येत्यर्थे ठक् । उसन्तात् इसुसुक्तान्तात्कः ' ( ७ । ३ । ५१ ) इति ठस्य कः । ' इणः षः ' (८।३।३९) इति षत्वम् धनुः प्रहरणमस्येति 'धानुष्कः' तैः । **शाक्तीकैः** = शक्तिप्रहरणैः । **याष्टीकैः** = यष्टिप्रहरणैः । **शक्तियष्ट्योरीकक्** ( ४ । ४ । ५९ ) इति सूत्रेण शक्तियष्टिभ्यां प्रहरणवाचिभ्यां प्रथमासमर्थाभ्यामीकक् प्रत्ययः । शक्तिः प्रहरणमेषां तैः ' शाक्तीकैः ' । एवम्—**सुरक्षिता** = अधिष्ठिता एवं **शिविका** = नरयानम् । **निरचैषम्** = निश्चयमकार्षम् । **अवेदिषम्** = अज्ञासिषम् ।

पृ० १८७ **दिल्लीश्वरः** = अवरङ्गजीवः । **तत्साक्षात्काराय** = तन्मेलाकरणाय । **तद्दुहिता** = तस्यैव पुत्री **रत्ननारी** = 'रोशनआरा' इति नाम्ना ख्याता । **कन्दरद्वारि** = पर्वतमुखे **मृगीव** स्वयमापतिता—**उपमा** । **हत्ययापि** = तं मारयित्वाऽपीत्यर्थः । न **शाम्यति** = नैव शान्तो भवतीत्यर्थः । **परवधूकन्याहरणम्** = परेषां वधूनां कन्यानाञ्च हरणम् = बलादादानम् । **कथमिव** = किम्प्रकारकं कीदृशमित्यर्थः । **अरुन्तुदम्** = मर्मवेधि । **अनुभावयिष्यामि** = तदीयकन्याहरणेन बोधयिष्यामि । **अनुमन्यताम्** = अनुज्ञाप्यताम् । **त्वरिताम्** = शीघ्रम् । **आर्यैः** = पूज्यैः । सैन्धवारोहाः = सादिनः । **स्वाधिष्ठितेति**—स्वाधिष्ठितं स्वाक्रान्तं यत् कुटीरं ततः । * कटिपटे = श्रोणिवस्त्रे आच्छन्नाः छुरिकाः कृपाण्यो येषां तान् । **सान्तरिति**—अन्तर्भल्लेन सह वर्त्तमाना इति ' सान्तर्भल्लाः ' ते च ते कृत्रिमाः दण्डाः हस्तेषु येषां तान् **शतम्** = शतसंख्याकान् † **मस्करिवेषान्** = संन्यासिवेषान् । **वीरान्** = भटान् सह नीत्वा । **पर्वतप्रान्ते** = पर्वतैकदेशे ।

पृ० १८८ ॥ **वर्षेति** = वर्षावारिणा वार्षिकेण जलेन पूर्णम् = भरितम् । **कुण्डम्** = गर्त्तविशेषम् । **विषाक्तम्** = विषेण अक्तं = संसृष्टं विधाय । **तदिति** = तस्य प्रान्ते = तटे प्ररूढानि यानि कुसुमानि पुष्पाणि तेषां स्तवकेषु गुच्छेषु अपि **घ्राणमात्रेण** = गन्धोपादानमात्रेण **मूर्च्छावहम्** = निःसंज्ञ-

---

* **कटिः** श्रोणिः ककुद्मती इति ( अमरः ) ।

† **मस्करमस्करिणौ वेणुपरिव्राजकयोः** ( ६ । १ । १५४ ) इति सूत्रेण निपात्यते ।

ताम्रदं **गरलम्** = विषम् **आयोज्य** = सिक्त्वा । **तदिति**—तस्य परिसरः = प्रान्तभूमिः तस्य वदनं = पुरोभागः तदग्रे एव सर्वे **समाच्छन्नाः** = छुपिताः । **समतिष्ठन्त** = सावधानाः स्थितिमकुर्वन् ।

**सगणाः** = सभटाः । शिविकावाहाः = नरयान ( पालकी ) चालकाः । **रुन्धि** = स्थगितो भव । **तत्रैव** = विपाककुण्डपरिसरभूमौ एव । **विरेमुः**= विश्राममकार्षुः । **बुभुक्षवः** = क्षुधार्त्ताः एको **वृद्धः** = जठरः । **करधृतेति**–करे पाणौ धृतः गात्राणामवयवायाम् अवलम्बः आश्रयभूतो दण्डा येनेति— '**वृद्धजाति**'। **पिटकम्** = मञ्जूषाम् । 'पिटकः पेटकः पेटा मञ्जूषा' इति ( अमरः )। **दृष्टः** = आलोकितः तैरेव बुभुक्षुभिरित्यर्थः । **अरेरे** ! इति नीचसम्बोधनम् । **दशमीहतक** = नवतेरूर्ध्वमवस्थां प्राप्त ! नीच ! **ईषत्त्रस्तः** = किञ्चिद् भीतिं नाटयन्निवेत्यर्थः । **गृह्णीध्वम्**=इति साहसोक्तिः इत्यहम्पूर्विकया **लुलुण्ठुः** = प्रत्यघ्नन् । **लुठ** प्रतीघाते । लिटि रूपम् । **कृत्रिमपथिकः** = पथिकवेषधारी । **सकपटेति**—सकपटाक्रन्दनेन इव सव्याजविलापेन, **गलद्भिः** = स्खलद्भिः जलैः नेत्रवारिभिः **मुखम्** = आननम **क्षालयन्** = प्लावयन् । **तिरोबभूव** = अच्छुपीत् । **मधुरमोदक-वृन्दम्** = लड्डुककन्दवृन्दम् । बुभुजिरे = चखदुः । **अशयिषत** = अस्वाप्सुः । **शूलाकृतम्** = शूल्यम् **मांसम्** = आमिषम् । **काचेति**—काचपात्रम् काच-कूपिका 'बोतल' इति प्रसिद्धपात्रम् । **मद्यम्** = सुरा । **तदेति**—तयोरास्वा-दनेन खानेन पानेन च आसादिता प्राप्ता तृप्तिर्येन सः **जागर्त्ति स्म** = अजागारीत् ।

**पृ० १८५॥ मेघदण्डः** = घनपटलः । '**नकोऽपि—उदस्थात्**' = उत्थितोऽभूत् । '**अत्यन्तं समशयिष्ट अध्यक्षः**' = संशयं भेजे । **वाहकान्** = शिविकायाश्चालकान् **आह्वयमानाम्** = आकारयन्तीम् । **शिविकान्तःस्थाम्**= पालंक्यन्तर्वर्त्तमानाम् । **दास्याः पुत्राः** = नीचा इत्यर्थः । **षष्ठ्या आक्रोशे** ( ६ । ३ । २१ ) इति षष्ठ्या अलुक् । 'इति रसनारीं बोधयित्वा' इत्यन्वयः । **पादाघातेन** = पादताडनेन । **कराकर्षणेन** = करेष्वाकर्षणेनेत्यर्थः करेण कर्षणेन वा । सत्यं मूर्च्छितान् = निःसञ्ज्ञान् **अवगत्य** = निश्चित्य । **सुगन्धि-कुसुमानि** = सौरभवन्ति सुमानि, **जिघ्रापयिषुः** = घ्रापयितुमिच्छुः । **पार्श्वेति**—पार्श्ववर्त्तिनः समीपवर्त्तिनः क्षुपस्य ह्रस्वशाखिन अग्रात् पुरोभागात् इत्यर्थः एकम् **आचिनोत्** = अग्रहीत् । **गुच्छकम्** = स्तबकम्

**नवेति**—नवस्य नूतनस्य कुसुमस्तवकस्य पुष्पगुलुञ्छस्य रूपदर्शनेन मोहितः मोहं = प्राप्तः आसक्तो भूतः सन् । **गाढम्** = अत्यन्तम् । स्वयमेव—**अघ्रात्** = घ्राणेनाचुम्बीत् । तत्क्षणात् भूमौ **पपात** = चस्खाल, **मुमुर्च्छ** = मोहं जगाम । **प्रशशाम** = निववृते । **संन्यासि**कदम्ब-संवलितः = मस्करिव्रातोपेतः । **घृणाम्** = ग्लानिम् , **आवहन्तः** = धारयन्तोऽपि * **क्षात्रधर्मम्** = क्षत्रियाणां रक्षाधर्मम् **आकलय्य** = विचार्य । **तत्कञ्चुकैः** = तेषां चोलकैः । **दिल्लीति**—**दिल्ली**श्वरनाम्ना अङ्कितेन मुद्रितेन रजतफलकेन = † रूप्यखण्डेन अलङ्कृतानि सज्जितानि यानि उष्णीषाणि = शिरोवेष्टनानि तैः । तादृशाः दिल्लीश्वरनाम्नाऽङ्किता या पित्तलपट्टिकाः = ‡ आरकूटमय्यः पट्टिकाः ताभिरङ्किताः ये कटिबन्धाः श्रोणिबन्धाः तैश्च, आत्मानम् = स्व-स्वरूपम् **अलञ्चक्रुः** = भूषयाम्बभूवुः । वेषपरिवर्तनं दधिरे इत्यर्थः । **तरुशाखा**लम्बितान् = वृक्षशाखावद्धान् । **वाजिनः** = अश्वान् । **उन्मुच्य** = खोर (ल) यित्वा । "खोलृ" गतिप्रतिघाते । अनेकार्था धातवः । **वल्गादियोजनैः** = रश्म्यादिबन्धनैः । **सज्जीकृत्य** = तात्कालिकीकृत्य । **वलितवारवाणाः** = वलिताः परिहिता वारवाणाः कवचा यैः । **सुप्तेति**—सुप्तानां शयानानां सादिनामश्वारोहिणां शस्त्रैर्धनुरादीभिरवे ¶ **धानुष्काः** = धनुःप्रहारिणः । * **काण्डीराः** = वाणवन्तः । **शाक्तीकाः** = शक्ति ( हेति ) प्रहरणाः । **याष्टीकाः** = यष्टिप्रहरणाः । † **पारश्वधिकाः** = परश्वधप्रहरणाः । **प्रासिकाः** = प्रासप्रहरणाः । **नैस्त्रिंशिकाः** = निस्त्रिंशप्रहरणाः । **कौन्तिका** कुन्तप्रहरणाः । **फलकपाणिनः** = चर्मवन्तः = करधृतचर्माणः । **तान्** = अश्वान् **आरुरुहुः** = अधितष्ठुः । **जङ्घालाः** = जङ्घाकरिकाः । **वाह**कताम् = शिविकाया इत्यर्थः । **पालङ्कीम्** = शिविकाम् ।

---

* अत्र बहुवक्तव्यमाभाति परन्तु ग्रन्थगौरवभयादिह नोक्तम् ।

† **दुर्वर्णं** "रजतं रूप्यं खर्जूरं श्वेतमित्यपि" इति ( अमरः ) ।

‡ "रीतिः स्त्रियामारकूटो न स्त्रियाम्" इति ( अमरः )

¶ व्याख्यातं पूर्वमपि ।

***काण्डाण्डादीरन्नीरचौ** ( ५ । २ । १११ ) इत्यनेन मत्वर्थे "काण्ड" शब्दात् ईरन् ।

† **परश्वधाट्ठञ्च** ( ४ । ४ । ५८ ) इति परश्वधशब्दात् प्रहरणार्थे ठञ् ।

पृ० १८६ ॥ **दुर्गाध्यक्षम्** = दुर्गपालम् । **तन्निगालम्** = अश्वीयं गलोद्देशम् । **आस्फोट्य** = पोथयित्वा । **आस्कन्दितैः** = * उत्तेरितैः । "पोईया" इति प्रसिद्धैर्गमनैः । **धौरितकैः** = धौरणैः । "चाल" इति प्रसिद्धैः । **वल्गितैः** = उच्छलनविशेषैः "टपोसीमारना" इति ख्यातैः । **निम्लोचति** = अस्तमुपेयुषि । प्लुतैः = प्लवनैर्गमनैरित्यर्थः ।

**पश्चिमाशा**कुण्डलमिव = पश्चिमाया वारुण्या आशायाः दिशायाः (नायिकायाः) कुण्डलं कर्णभूषणमिवेत्युत्प्रेक्षा । **मार्त्तण्डमण्डलम्** = सूर्यविम्बम् । **अस्ताचलेति**—अस्ताचलस्य अस्तगिरेः चूडायां शिखरे शोणोष्णीस्य भावः तत्तां, रक्तशिरोवेष्टनमूर्त्तिं **भेजे**—दध्रे । **युद्धसज्जाम्** = सङ्ग्रामस्य तात्कालिकीं स्थितिम् । **भूषणकविः** यस्य वृत्तं पूर्वमागतं सः । * **वीररसकवितापाठैः** वीररसप्रधानं कवित्वश्रावणैः ।

**उत्साहम्** = हृदयसत्त्वम् । **द्विगुणयति** स्म = अवीवृधदित्यर्थः । अन्तर्लौहं वर्म = कवचम् **तदुपरि** = वर्मोपरि । **माङ्गलिकवर्णैः**=मङ्गलप्रयोजनकैः वर्णैः श्वेतपीतरक्तादिभिः । मङ्गलं प्रयोजनमस्य इति 'माङ्गलिकम्' ।—**प्रयोजनम्** ( ५ । १ । १०९ ) इति सूत्रेण ठञ् । ‡ **वारवाणैः** = लोहवर्मभि **अङ्गरक्षिकाभिः** = अङ्गरक्षिणीभिः । आयसीभिर्जालिकाभिरित्यर्थः । आत्मानमाभूष्य = मण्डयित्वा **सारसनम्** = कटिबन्धविशेषम् । **आयस**शीर्षाच्छादकस्य = लोहमयं यच्छीर्षाच्छादकं शिरस्त्राणं तस्योपरि **चक्रोष्णीषम्** = चक्राकारमुष्णीषम् शिरोवेष्टनम् ।

'अथ' इति वृत्तान्तरमारभते—**रिङ्गिदिति**—रिङ्गतां सञ्चलतां तरङ्गाणां भङ्गैर्वलितैः आहतं तीरं तटं यस्याः सा, **शीतल**समीरा = शीतलः शिशिरः समीरः पवनो मया यस्या वा । धलद्धलद्ध्वनिना धीरा मन्दचाला **गम्भीरा**= गूढजलतला "नीरा" नाम्ना नदी प्रवहति ।

---

* "**उत्तेरित**मुपकण्ठमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमनं कोपादेवाखिलैः पदैः ॥

इति (हैमाला) । "आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः" इति (अमरः) ।

‡ **वाणं** वारयति वृणोति वा । वृञ् धातोः कर्मण्यण् राजदन्तादित्वात्परनिपातः । कञ्चुकविशेषोऽपि ।

**दक्षिणा** = दक्षिणस्याम, **प्रतीच्याम्** = पश्चिमायाम् **गिरिराजी-नाम्** = पर्वतश्रेणीनाम् **परतः** = उत्तरोत्तरतः **गिरिराजयः** = पर्वतश्रेणयः। **अभ्रंलिहैः** = मेघमण्डलचुम्बकैः **उच्चोच्चैः** = अत्युच्चैरित्यर्थः **सानुभिः** = शृङ्गैः **अधित्यकास्थैः** = पर्वतोर्ध्वभूमिवर्त्तिभिः अरण्यानीसंस्थानैः=महाजङ्गल-सन्निवेशविशेषैः। **मेघमालेति**—मेघमालायाः नीरदरात्रेर्मण्डलस्यबिम्बकान्तेर्भ्रं भ्रान्तिमित्यर्थः । " **गिरिराजयः** उत्पादयन्ति " इति कर्तृक्रियान्वयः। **उदीच्यामिति** । = उत्तरस्यां दिशि—**सुदूरविस्तृतम्** = महाविशालम्।

**पृ० १८७ ॥ दूरवीक्षण**नलिकातः = 'दूरबीन' इति प्रसिद्धयन्त्रेण। **चित्रमिव** = प्रतिकृतिरिव । **साकल्येन** = सामग्र्येण नगरम्—**एनत्** = " द्वितीयाटौस्स्वेन " ( २ । ४ । ३४ ) इति अन्वादेशे एनादेशः ।

**रजन्याम्** = रात्रौ । दुर्घटा = अचिन्त्या, **घटना** = दशा । इति **पर्या-लोचयन्ति स्म** समीचाञ्चक्रिरे ।

**बहुदर्शी** = दीर्घदर्शीत्यर्थः । **शिवेति**—शिवस्य पितुः करपल्लवच्छायायां पाणिपल्लवाश्रये यापितं गमितं बाल्यं वयो येन सः । **एवम्** = वक्ष्यमाणप्रकारेण **आलपुः** = अभाषिपत ।

**धैर्यम्** = धीरताम् । **गाम्भीर्यम्** = गूढप्रकृतिम् । **चातुर्यम्** = नैपु-ण्यम् । **वीर्यम्** = सामर्थ्यम् । **विजेष्ये** = जयं लप्स्ये । **वीरगतिम्** = निर्भयं युद्धे मरणम् ।

**कुशलिषु** = जीवत्सु । **प्राप्तशरणः** = प्राप्तं शरणं रक्षिता येन तादृशः। **वैदिको** धर्मः = * सत्यसनातनहिन्दुधर्मः ।

**पृ० १८८ ॥ कम्पः** = वेपथुः । **वक्षःसु** = उरःसु । **भारतेति**—भारतस्य ये प्रत्यर्थिनः शत्रवो यवनाः तेषां पत्नीनाम् दाराणाम् । भारतभुवं **विरहयन्तु** = त्यजन्तु—अर्थात् वीरगतिं गच्छन्तु । **धुरम्** = राष्ट्रभारम् **धर्मः** = वैदिक एव । **आलम्बिष्यते** = आश्रयिष्यते । **भारतेति**—भारता-भिजनस्य भारतदेशस्य स्वातन्त्र्यभारः स्वतन्त्रताधूः । **नवोन्नतिम्** = नवां राष्ट्र-सम्पत्तिम् । तदलमालप्यान्यत् = अन्येनालपनेन कार्यं नास्ति । **सहेति**—सहचरैः अनुयायिभिः सह वर्त्तमानाय मह्यम् **स्वस्ति** = स्वस्तिवचनम् । **प्रमत्तहत-कान्** = नीचान् प्रमादिनः इत्यर्थः । **आशीराशीन्** = आशीर्वाक्यावलीः

* अयमेव " वर्णाश्रमधर्म " इत्युच्यते ।

**सप्रेमेति**—प्रेम्णा सह आशीर्भिश्च सह **उदन्तम्** = वृत्तान्तम् । 'वरयात्रा-प्रस्थानात् प्रागेव वधूप्रवेशो जातः' सहर्षोक्तिः । इदं भङ्गिवचनं रसनारीकाराकारी-करणविपयकम् । **विशकलय्य** = विभागशः कृत्वा । विस्तरेणेत्यर्थः । **अति-माङ्गलिकमिदम्** = मङ्गलहेतुभूतम् । **मूर्तिमती** = देहधारिणी **जयश्रीः** = जयलक्ष्मीः । **युद्धकार्येषु** = रणाङ्गणक्रियासु । **तोषितवानसि** = प्रसन्नम-कार्षीः । **मङ्गलम्** = शुभम् **आचक्षाणः** = कथयन् । **पुरस्कार्यः** = परि-तोषकप्रदानेन सत्कार्यः **अध्यक्षतायाम्** = आधिपत्ये । **विनियुनज्मि** = स्थापये । **समस्तकनमनम्** = शिरःप्रह्वीकरणपूर्वकम् । **शिवेङ्गितेन** = शिवा-भिप्रायं ज्ञात्वेत्यर्थः । **तत्पदार्हाणि** = **पञ्चसहस्र**सङ्ख्याकसादिप्रभुताया-ग्यानि **वासांसि** = वारवाणादीनि । **विश्राणयति** = ददति सति **सुरेश्वरे** भावेसप्तमी । **सुवर्णपट्टकम्**=हिरण्मयफलकम् । वक्षसि = सुवर्णकोशेन सहितं एकं **खड्गम्** = असिम् । **कटिप्रदेशे** = **शिवः** = महाराष्ट्राभिजनाधीश्वरः **स्वहस्तेन** = निजपाणिना स्वयम**योजितवान्** = बन्धयामास ।

पृ० १८६ ॥ **तदुदारतेति**—तस्य शिवस्य या उदारता = उद्भटता तस्याः वर्णनकवितां **रचयन्तम्**=निर्मिमाणम् । **भूषणम्** = भूषणाख्यं कविम् । **मौक्तिक**मालया = मुक्तानां मालया । **सम्मान्य** = सत्कृत्य । **चिरसहचरः** = पुरातनः सखा । **नयनेति**—नयनजलैः अस्रैः क्षालितं स्रावितं कपोलं यस्य सः **सहेति**—सहगमनस्य अनुमतिम् = अनुज्ञाम् । पारितोषिकम् = प्रासादम् ।

**प्रत्यज्ञासीत्** = प्रतिज्ञामकरोत् । **साम्प्रतम्** = इदानीम् । **असाम्प्रतम्** = अनुचितम् । 'द्वे युक्ते साम्प्रतं स्थाने' इति (अमरः)। **आज्ञाप्यः** = अनुज्ञाविषयीकर्त्तव्यः । **विधेयः** = सेवकः । **चित्रम्** = आश्चर्यम् । **सन्देशहरपदे** = जङ्घाकरिकपदव्याम् । **अतीति**—अति = अत्यन्तं शिक्षितानां निपुणानां वीराणां कार्यप्रवाहे = क्रियासरण्याम् । साहसम्= अविचारितं कर्म । **आधत्से** = करोषि ।। **आयतिः** = उत्तरकालः । **मङ्गल-मयी** = मङ्गलस्वरूपा । **आपिप्रच्छिषमाणम्** = आप्रष्टुमिच्छन्तम् ।

पृ० १६० ॥ **पञ्चशतीम्** = पञ्चानां शतानां समाहारः पञ्चशती ताम् । "समाहारेऽत ईप् द्विगुः" इति अदन्तात् द्विगोः स्त्रियामीप् । **प्रतीक्षस्व** = प्रतिपालय । **रक्तम्** = शोणितवर्णम् एकं **अग्निपुष्पम्** = 'गुरज' इति ख्यातम् । **समुड्डीयमानम्** = विहायसा गच्छत् **पश्येः** = द्रक्ष्यसि **सर्वः** । **आक्रमणम्** = आक्रान्तिम् । "स्वर्गदेवोऽपि चोमिति"

इत्यत्र **ओमाङोश्च** ( ६ । १ । ९५ ) इति सूत्रेण .ओमि परे पररूपम् । **त्रिपुरमथनः** = महादेवः **अर्पिता** = दत्ता । ' ब्राह्मणः—अद्युतान् ' इति—स्पष्टम् । **पराभवम्** = पराजयम् । **शाम्यन्तु** = नश्यन्तु **घोराणि** = उपद्रवकराणि ।

पृ० १९१ ॥ **रिपुनिकरम्** = शत्रुवृन्दम् **दिधन्नन्त** इव = दग्धुमिच्छन्त इव । **तूष्णीम्** = समौनम् । **अदीपप्रकाशा** = दीपप्रकाशविहीना। **अवाग्विलासा**=वाग्व्यापारविहीना । **पञ्च**विंशतिं वा **उत्साहधनान्**=धैर्यशालिनः धीरान् = कुशलान् वीरान् **गाढान्धकारे** = सन्तमसे । **आम्रवणे** = आम्राणां वनम् † आम्रवणम् तस्मिन् रसालवन्यामित्यर्थः । **प्रतीक्षमाणः** = प्रतिपालयन् । **वाद्यनिनदम्** = वाद्यवादनम् । **वरयात्रा** = जन्या । **वरयात्रामण्डने** = जन्याजनमण्डले । **सपादाताः** = पादातैः सहिताः । **सवाडवाः** = घोटीभिरुह्यमाणाः । **घाण्टिकेति**—घण्टया चरन्ति "घाण्टिकाः" चक्रेण समूहेन चरन्ति 'चाक्रिका' । **चरति** (४।४।८) इति सूत्रेण ठक् । बहवो मिलित्वा ये राज्ञां स्तुतिपाठादि कुर्वन्ति ते घाण्टिकाः चाक्रिकाः बन्दिविशेषाः । '**चाक्रिका** घाण्टिकार्थकाः' इति ( अमरः ) आयुधेन जीवन्ति " आयुधिकाः " । **आयुधाच्छ च** (४ । ४ । १४) इति सूत्रेण चात् ठन् । वैजयन्त्येषामस्तीति ' वैजयन्तिका ' = पताकिनः । **व्रीह्यादिभ्यश्च** (५।२।११७) इति ठन् । अथवा—" चरितं " ( ४ । ४ । ८ ) इति सूत्रेण ठक् वैजयन्त्या चरन्ति ते । " पताका वैजयन्तिका " इति ( अमरः ) वादयन्तीति '**वादका**' । एतेषां द्वन्द्वः । तदादि = तत्प्रभृतिसहिताः । **कृशानुक्रीडेति**—कृशानुक्रीडायां: अग्निखेलायाः आकलेने करणे कौतुकिनः = कुतूहलिनः अलातखेलननिपुणा इत्यर्थः । " एते " यत एव ( मार्गात् ) यान्ति स्म तत एव गवाक्षेभ्यः इत्यन्वयः । **गवाक्षेभ्यः** = वातायनेभ्यः । **क्रोडेति**—क्रोडे = उत्सङ्गे स्थापिताः धृताः स्तनन्धयाः शिशवो याभिस्ताः एवंभूताः—**गृहिण्यः** = पतिपुत्रवत्यः साध्व्योऽङ्गनाः । **उच्चकुचेति**—उच्चानामुन्नतानां कुचानां पीनानां स्तनानामित्यर्थः अग्रेण अर्थात् चूचिकाप्रदेशेन आस्फालिताः=आमर्दिताःगवाक्षाणां जालानां दण्डा याभिस्ताः। **स्वप्रेमेति**—स्वस्य

---

† "प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि" ( ८।४।५ ) इति सूत्रेण नस्य णत्वम् ।

प्रेम्णः रतेः पात्रं यः प्रियजनो वल्लभलोकः तस्य दन्तक्षतव्रणेन विषमाः सक्षताः तथा ताम्बूलीरागेण रञ्जिताः शोणिता अधरा यासां ताः एवम्भूताः **चिरण्ट्यः** = युवतयः च—**अंगुल्या** = करशाखया **निर्दिशन्त्यः** = बोधयन्त्यः।

पृ० १६२ **समारोहः** = संघट्टः । **शास्तिखानेति**—शास्तिखानेन अध्युषितम् अधिष्ठितं यद् गृहं तस्य द्वारपर्यन्तम् । **सीमन्तिन्यः** = योषाः। **धमदिति**—धमद्धमद्ध्वनेः वाद्यादिनिनदस्य समाकर्णनेन श्रवणेन जातं कुतूहलमाश्चर्यं यासां ताः। **निराहततन्द्राः** = तन्द्रारहिताः । **मन्दाक्षेति**—मन्दाक्षेण = ह्रिया मन्दः प्रचारः इतस्ततः संसरणं यासां ताः । **प्रतिसीराः** = जवनिकाः । द्वितीयाबहुवचनम् । **अपसारम**पसारम् = अपसार्याऽपसार्य । **लशुनेति**—लशुनम् = रसोनकम्, पलाण्डुः = गृञ्जनम् तयोर्गन्धेन कटुभिः, **जृम्भा** परम्पराभिः=गात्रविनामव्रातैः। **नासेति**—नासाया मौक्तिकानि मुक्ताभूषणानि **मलिनयन्त्यः** दूषयन्त्य इवेत्युत्प्रेक्षा। सा च वाचक—शब्दाऽनुपादानात् गम्या ( लुप्ता ) । **लोलत्कुण्डलाः** = लोलन्ति स्वस्थानात् गमागमं कुर्वन्ति चञ्चलानि कुण्डलानि कर्णभूषणानि यासां ताः । **दोलल्ललन्तिकाः** = दोलन्त्यो हिल्लोलमाना ललन्तिकाः कण्ठिका यासां ताः । **स्खलद्वसनाः** = स्खलन्ति स्थानभ्रष्टानि भवन्ति वसनानि उत्तरीयादीनि वासांसि यासां ताः। **वलद्धसनाः** = अतिहसन्त्यः । **मदेति**—मदेन = मद्येन व्याघूर्णितानि नयनानि यासां ताः । **विहितेति**—विहितं कृतं मेचकस्य कृष्णवर्णस्य कुञ्चितस्य गुच्छितस्य कचप्रचयस्य = संयतकेशनिचयस्य संचयनम् = स्वावस्थापनं याभिः ताः । **अञ्जन**रञ्जिताभिः = कज्जलाक्ताभिः **दृग्भिः** = दृष्टिभिः इन्दीवरमालाः इव = नीलोत्पलमालाः **वर्षन्त्यः** = प्रकिरन्त्यः इवेति क्रियास्वरूपोत्प्रेक्षा। **रोलम्बकदम्बमिव क्षिपन्त्यः** = रोलम्बाः भ्रमराः तेषां कदम्बं समूहमिव क्षिपन्त्यः प्रसारयन्त्यः "शास्तिखानसीमन्तिन्योऽपि वीक्षितुमारेभिरे" इति क्रियाकारकपदान्वयः।

**अन्यूनाः**=न न्यूनाः। **त्रिंशत्** = **वीराः** = महाभटाः। **तद्भवनेति** तस्य शास्तिखानस्य यद् भवनं गृहम् तस्य नेदिष्ठा = अतिशयेन समीपवर्तिनी या वाटिका अर्थात् पुष्पक्षेत्रिका तत्र विटपानां वृक्षाणाम् अन्धतमसच्छायासु = गाढान्धकारच्छायासु एव **समवलयिन्त** = लीना अभूवन् अच्छोप्सुरित्यर्थः।

**वरयात्राकलकलः** = जन्यासञ्चलनकोलाहलः । नागरिकानां नगरभवानां जनानां रवः = आहारविहारवार्त्तादिकरणकोलाहलः। **श्यामश्यामे** =

अत्यन्तं नीलैः **तिमिरसान्द्रता** = अन्धकारगाढता **द्विगुणिता** = वर्धिता।
**झिल्लीति** = झिल्लीनां झिल्लिकानां रवः शब्दः तस्य अनुसृतः तत्सदृशः।
**नैशीथः** = निशीथे भवः। भवार्थेऽण्। अर्धरात्रकालिकः **स्वभावसिद्धः** =
प्राकृतिकः। **अनाहतानुकारी** = योगशास्त्रप्रसिद्धनादविशेषसदृशः ध्वनिः
**श्रूयत** = आकर्ण्यत। **प्रतीहाराः** = द्वारपालाः। गृहीतः भित्तिकानां कुड्यानां
आश्रयः स्तम्भनं यैः तादृशाः, घुरघुरायिताः घोरा भयङ्करी घोणा नासिका येषां ते।
**श्लथत्करवालाः** = स्थानशिथिलखड्गाः **समशयिषत** = सम्यक् (गाढम्)
शयाना अभूवन्। सम्पूर्वः शीङ् धातुः संशयेऽर्थे वाचको न तु गाढनिद्रार्थे तस्मात्
**अवाचकदोषः** प्रतीयते।

"अथ" इति वृत्तान्तरमन्वाख्यायते—"अर्धसुप्ताभिः—**महामदमहिलाभिः**
= शास्तिखानयोषाभिः किञ्चित् शब्दजातमश्रावि" इत्यन्वयः। निद्रया गाढम्
यथा तथा आक्रान्ताभिः = व्याप्ताभिः उत्थातुम् निर्णेतुं वा **नाऽपार्यत** = नैव
पारितं न समार्थ्यतेत्यर्थः।

पृ० १६३। "हण्डे" इति दासी सम्बोधनम्। "हण्डे हञ्जे हलाऽऽह्वाने
नीचां चेटीं सखीम्प्रति" इत्यमरः।

**रन्धनगृहे** = रसवत्याम्। **सशब्द**मास्खलितम् = सध्वनि किञ्चिद्रापतित-
मित्यर्थः। **निद्रेति**—निद्रायाः भरेण भारेण मन्थरा = आलस्योपेता। **भट्टिनि**
इति राज्याः सम्बोधनम्। **शेष्व** = स्वपिहि। **विडालः** = मार्जारः। **आखुः** =
मूषिकः।

भित्तिं भित्त्वा = सन्धिं छित्त्वेत्यर्थः। **विकोशखड्गाः** = नग्नासयः
**गृहेति**—गृहावग्रहणीषु = गृहदेहलीषु सम्यक् उद्घातेन उच्छालमारणेन आ-
तानि आघातं प्राप्तानि स्फुटितानीति यावत् प्रपदानि यासां ताः **प्रघाणे** = द्वार-
द्वारप्रकोष्ठके। **कान्दिशीकाः** = भयद्रुताः भीत्या पलायिताः। **अट्टेषु** =
अट्टालिकासु। **सेनान्यम्** = सेनानायकं शास्तिखानम्। **समबूबुधन्** =
बोधितमकार्षुः। **अचकथंश्च** = अवादिषुः। **नग्नासिहस्ताः** = विकोश-
खड्गाः। "**सेनानीस्तु**—शिवराजं पश्यन्नासीत्" इत्यन्वयः। **अकस्मात्**
त्थापितश्च = अकाण्डतः सहसेत्यर्थः जागरायितः। **सीमन्तिनी**जनग्रीवां स्प-
लिङ्गन् इत्यादि चेष्टनमस्य पराजयसूचकमशुभमिति ज्ञेयम्। **अन्तःपुरक्रमः**
अवरोधक्रान्तिमपि **ह्यगुः** = अकार्षुः।



पृ० १६४। **स्वाधिष्ठित**विशालकोष्ठस्य = स्वाक्रान्तमहाप्रासादस्य

**पक्षद्वाराणि** = खडकिकाद्वाराणि **प्यधात्** = अवन्धयत् । एकलः = एकाकी। **पुरुषान्तःस्थः** = पुरुषमध्ये लुकायितः । **प्रच्छन्नतया** = गुप्तभावेन । **व्यचेष्टिष्ट** = चेष्टामकरोत । **रक्षकाः** = रक्षिपुरुषाः । **चन्द्रशालासु** = शिरोगृहेषु । **श्येनाः** इव = बाजपक्षीवेति **उपमा** । **समापतन्** = आक्रान्ति व्यधुः । "अक्रियत" इति "कृ" धातोः कर्मणि लङ् । **महानिनदः** = महती गर्जना ।

**कुट्टिमे** = निबद्धभूमौ । **अट्टे** = अट्टालिकायाम् । **प्राङ्गणे** = चत्वरे । **खड्गेति**—खड्गानामसीनां खणत्कारः आघातजनितः शब्दविशेषः, * क्ष्वेडा= सिंहगर्जनम् अथवा खणत्कारक्ष्वेडा इति खणत्कारशब्दः, हुङ्कारध्वनिः एतेषां प्रतिध्वनिभिः प्रतिशब्दैः धर्षिताः = धडात्कारिताः प्रतिवेशिनां पारिपार्श्विकानां निचयः समुदायो येन तादृशम् । **मुहूर्त्तं** यावत् = घटिकाद्वयपर्यन्तमित्यर्थः । **तुमुलम्** = सङ्कुलम् । परितो **विशस्यमानाः** = समन्ततो विहन्यमानाः । **स्वमज्जेति**— मज्जा = शरीरस्य धातुविशेषः रुधिरं = शोणितम् मेदः=अस्थितेजः एतेषां निचयैः **मेदिनीम्** = पृथिवीम् । **मेदस्विनीम्**=स्थूलामित्यर्थः **पङ्किलाम्**=कर्दममयीम् **तावत्** = तस्मिन्नेव काले इत्यर्थार्थः । **कुसुमाकारम्**=पुष्पसदृशम् । **स्फुलिङ्गनिकुरम्बम्** = अग्निकणवृन्दम् । **चुचुम्ब** = अन्तरिक्षं प्रति डिड्ये ।

"शिवराजस्तु—उक्तवान्" इति सम्बन्धः । सेनापतिमिव—**अन्विष्यन्** = गवेषयन् । **शुद्धान्तदिशि** = अन्तपुराशामेव **आपतितः** = अनुधावितः । **मार्गम्** = वर्त्म । **अवरुध्य** = प्रावार्य । **चान्देण** = चान्द्रखानेन **संवादिनीम्** = संवादवर्तीं सदृशीमित्यर्थः । तदाकृतिम् = तस्य यवनयुवकस्य आकृतिम् । निर्धारयन् = निश्चयन् । **मृषा** = निष्फलम् । **स्वपित्रिति**—स्वस्य पितुः अर्थात् चान्द्रखानस्य शोणितेन रुधिरेण दिग्धः श्लिष्टो यो मत्करवालः चन्द्रहासः तस्य धारैव तीर्थम् तस्मिन् **विसिसृक्षसि** = विस्रष्टुमिच्छसि ।

पृ० १६५ । **मुग्धम्** = मनोहरम् । **करुणापरवशः** = एतेन हिन्दूनां धर्मस्वभावदार्ढ्यं व्यज्यते ।

**क्रौर्यम्** = क्रूरस्य भावः क्रूरतामित्यर्थः । **तस्य** = शिववीरस्य । अकस्मात् = सहसा **उत्प्लुत्य** = कूर्दयित्वा । **मूर्ध्नि** = शिरसि **प्राहिणोत्** = प्राक्षिपत् । **रिपुबालः** = शत्रुशिशुः । **स्तिमितः** = स्तब्धीभूतः **एकतः** = एकस्मिन्

---

* "क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति । लोहितार्कपर्णफले घोषे नपुंसकम् । कुरारे च कुटिले वाच्यलिङ्गः प्रकीर्तितः" इति ( मेदिनी )

पार्श्वे इत्यर्थः । **स्वखड्गत्सरुम्** = स्वतलवारमुष्टिम् । "दृढम्" यथा तथेति क्रियाविशेषणम् । "तावत्—**अद्राक्षीत्**" = अलोकिष्ट । **भयानक**शल्यया = तीव्रभल्लेन **हृदयं** भित्त्वा = अर्थात् तस्यैव चान्द्रखानपुत्रस्य हृदयं विदार्य **परतः** परभागेऽपि निःसृतं निर्गतमग्रमग्रभागो यस्याः तया **शक्त्या** = कृपाण्या । **भूमौ** शायितः = पातितः ।

**पिचण्डिलः** = तुन्दिलः । **कृष्णेति**—कृष्णकूर्चप्रचयेन = नीलश्मश्रु-निचयेन चुम्बितः स्पृष्टो वक्षोभागो यस्य सः **दिधक्षन्निव** = दग्धुमिच्छन्निव । **सक्ष्वेडम्** = सगर्जम् । अरे ! रे ! **अपसद** ! = नीच ! । **उदतूतुलत्** = उदस्थापयत् । **विदीर्यमाणम्** = द्वैधीक्रियमाणम् । वेपमानाः कम्पमानाः अवयवा गात्राणि यस्य तम् । **विघ्नहर्त्तारम्** = अन्तरायध्वंसकम् । **शत्र्विति** शत्रोः शोणितेन रुधिरेण शोणीकृतं रक्तीकृतं करद्वयं पाणियुग्मं यस्य तम् । **इन्द्रगोपेति**— इन्द्रगोपः रक्तवर्णो वार्षिकः कीटविशेषः तस्य द्युतिरिव द्योतिताः ये बिन्दवः अर्थात् शत्रुरुधिरबिन्दवः तेषां वृन्देन समूहेन आच्छादितो वारवाणो यस्य तम् "रघुवीर इति **पर्यचेष्ट**" = निश्चिकाय । **सोत्फालम्** = सोत्कूर्दनम् **अविहितो**त्फालानाम् = अकृतकूर्दनानाम् । **सविदरम्** = सच्छिद्रम् । **परिपत्य** = उत्प्लुत्य **उत्तिष्ठासताम्** = उत्थातुमिच्छताम् । **शिरोधराम्** ग्रीवाम् । अशिरोधरां व्यधित = चकर्त्तेत्यर्थः । **मेदो**मांसपिच्छलकर्दमे चलितान् = स्खलितान् । **चरणान्** = अङ्घ्रीन् । **असञ्चरणान्** अकृत = चिच्छेद इत्यर्थः । **खड्गेति** = खड्गस्य असेरुत्क्षेपणेन उत्क्षिप्तान् ऊर्ध्वीकृतान् **करान्** = पाणीन् । **निजेति** = निजासिना वृकणं बाहुमूलं येषां तान् **उदक्षैप्सीत्**=उदभैत्सीत् ।

**समिद्धक्रोधाः** = उद्दीप्तकोपाः । "**तञ्च** अभिमन्युमिव महारथैराक्रान्तम्" इति पूर्णोपमा । **तम्** = रघुवीरमित्यर्थः । **चन्द्रहासेति**—चन्द्रहासस्य तलवारस्य चालनचातुरी = मारणनैपुण्यं तस्य महिम्ना = सामर्थ्येन । **आघातान्**=चोटान् **प्रतिरुन्धन्**=वारयन् । **यमसदनम्**=यमलोकम् अनैषीत् =अवधीदित्यर्थः । काकोलान्=द्रोणकाकान्, सर्पान् इव वा **अतिलोलान्**=अतिचपलान् बहुस्फुरतिकरातित्यर्थः। **दोलायोग्यान्** अकार्षुः=कृत्तावयवान् व्यधुरित्यर्थः। **अवरोधम्** = अन्तःपुरम् । **अवरोद्धुम्** = आक्रान्तुम् । **रुद्धानि** = पिहितानि बद्धकपाटानि इत्यर्थः । **अरराणि** = द्वाराणि **पादाघातैः** चरणाहतिभिः । प्रासानां=कुन्तानां निपातैश्च **गवाक्षिकातः** = खडक्किकातः । **चरेण** भृत्येन भटेन । **तस्य** = शास्तिखानस्यैव **प्रसारितकरस्य** = स्फारितपाणेः ।

**सोत्फालम्** = सकूर्दम् । अन्धकार एव महान् उदधिः समुद्रः तत्र **निमग्नः** = ब्रुडितः ।

पृ० १६७ ॥ **इतस्तु** = अन्यस्मिन् भागे । "**दानवा** इव मानवान्" इत्यत्रोपमा । "**व्यर्थहत्या** शिवेन निवारिता" इति शिवस्य वैदिकसंग्रामधर्मवित्त्वं व्यज्यते ।

**त्यक्तेति**—त्यक्तानि अवतारितानि रुधिराक्तानि = शोणितशोणानि वसनानि वस्त्राणि यैः ते । **प्रत्यर्थीति**—प्रत्यर्थिनां शत्रूणां परिचारकवसनैः सेवक-वस्त्रैः पट्टिकाभिः शस्त्रैश्च । **आलोचकान्** = द्रष्टॄन् । **यामिन्याम्** = रात्रौ । **विजितेति**—विजितं स्वायत्तीकृतं बाह्यसेनानिवेशम् = शिविरम् । **उन्मुद्रितेति** उन्मुद्रितं सर्वगोपुरम् = पुरद्वारम् **संस्थापितेति**—संस्थापिताः निजयामिकाः स्वीयप्रहरिणः द्वाररक्षकाश्च यत्र तत् । "साक्षात्कुर्वन्" इत्यशुद्धम् । "साक्षादकुर्वन्" इति क्रियापदं युक्तमाभाति । अन्यथा पूर्वोत्तरानन्वय एव । **पाणि-न्धमम्** = महान्धकारावृतम् **अध्वानम्** = मार्गम् । **पराजितप्रत्यर्थिभिः** = परास्तशत्रुभिः । **आरुरुहुः** = उत्ससृपुः ।

---

इति (नूतन) शिवराजविजयपताकायां सप्तमो निश्वासः ।



* ॐ *

# अष्टमो निश्वासः ।

योधर्मरक्षणपरो निजकर्मनिष्ठः
पूतान्तरो व्यसनपाशशतात्सुदूरः ।
रम्भाऽपि तं न निजदम्भवशे विधातुं
शक्ता कथा किमु भवेद्बत ! चान्यनार्याः ॥ १ ॥

निःशस्त्रं शरणागतं भयगतं क्लान्तं तृषा मूर्च्छितं
बद्ध्वा पाणियुगं तवाऽहमधुनेत्येवं वचोवादिनम् ।
भग्नास्त्रञ्च न हन्ति धर्मकुशलः शूरो बुधो द्वेषणं
यस्तं नीतिविदं शिवैकचरितं प्रातर्न कः संस्मरेत् ॥ २ ॥

**अष्टमे** निश्वासे कारान्तःकृताया अपि सत्कृताया "रसनार्याः" समागमे शिवस्य महाधैर्यं वर्णयन् मायाजिह्मस्यापि च प्रसङ्गे शिवस्य धन्यं धर्म्यं यशस्यमायुष्यं वृत्तञ्चोपनिबध्नन् तत्तत्प्रसङ्गोपक्षेपकरीत्या कुवलयानन्दधृतमाप्पय्यदीक्षितं पद्यमुद्धरति—'**वेधा द्वेधा**' इति । अस्येयं व्याख्या—**वेधाः**=प्रजापतिः **कान्तासु**=कामिनीपु **कनकेषु च**=सुवर्णेषु । विषये सप्तमी—कान्ताविषये कनकविषये चेत्यर्थः **द्वेधा**=कान्ताधर्मिकत्व—कनकधर्मिकत्वरूपविधाद्वययुक्तं **भ्रमम्**=अन्यस्मिन् अन्यताबुद्धिरूपं प्रत्ययं **चक्रे**=निर्ममे । **तासु**=कान्तासु **तेषु**=कनकेषु अपि **अनासक्तः**=आसक्तिरहितः पुमान् । **नराकृतिः**=नराकारः साक्षाद्भर्गः=साक्षाच्छिवः अस्तीति शेषः । तादृशपुरुषस्य शिवस्य च मानुषाऽमानुषाकार एव विशेषो नान्यः कश्चिदित्याशयः ।

अत्र—साक्षादिति विशेषणेन विरक्तस्य=वशिनः प्रसिद्धशिवतादात्म्यमुपदिश्य नराकृतिरिति दिव्यमूर्त्तिवैकल्यप्रतिपादनात् न्यूनाभेद**रूपक**मलङ्कारः ।

**पृ० १९८** ॥ सम्प्रति रसनारीवृत्तान्तं कीर्त्तयन् आह—'तोरणदुर्गे' इति । "तोरणदुर्गे तु रसनारी—किमपि न वेत्तिस्म" इति सम्बन्धः । **प्राप्तसंज्ञाभिः**=प्राप्तचैतन्याभिः । **चेटीभिः**=दासीभिः ।

**मञ्चासन्दीति**—मञ्चादीनां द्वन्द्वः । केचित् समानार्था अपि किञ्चिद्विशेषं विवक्षिता उपात्ताः । आसन्दी=वेत्रासनिका । वितानम्=उल्लोचः । तूलिका

तूलवती, उपबर्हम्=उपधानम् तदादि यः सकलः परिच्छदः उपकरणं तेन परिष्कृतायां मण्डितायाम्। अतिरम्यस्य हर्म्यस्य = प्रासादस्य अट्टालिकायाम्। **अवरुद्धा**=कारागारिता। तदिति—तस्याः परिचर्यायां सेवायाम्। **वाचम्**=वाणीम्। अछुन्ति स्म=मूकतामेव भेजिरे। एतेन—महाराष्ट्राधीशस्य गुप्तमन्त्रस्य परा काष्ठा व्यज्यते, दासदासीनाञ्च परमाप्तत्वम्। **कोष्णम्**—ईषदुष्णम्। येन शरीरस्वास्थ्यं मलापकर्षश्च सम्यग्भवेदित्यर्थः। **यूथिकेति**—यूथिकादिभिः सुरभीकृतम्। **स्नानीयम्** = स्नानार्हम्। **कर्पूरेति—कर्पूरः**=हिमवालुका, काश्मीरपाटीरम्=काश्मीरभवं कुंकुमम्, तयो चोदेन चूर्णेन रचितम् **उद्वर्त्तनम्**=देहनिर्मलीकरणद्रव्यम्—"उब्टना" इति प्रसिद्धम्।

**सौवर्ण**प्रान्तानि=सुवर्णविकारतन्तुप्रोतप्रान्तभागानीत्यर्थः। **नानेति**—नानावर्णानि अनेकरङ्गानि यानि कौशेयकुसुमानि पट्टनिर्मितपुष्पाणि तेषां रचनया विचित्रतानि वासांसि—वस्त्राणि। **प्रसाधनीम्**=कङ्कतिकाम्।

**पृ० १९९ अङ्गरागम्**=अङ्गं रज्यतेऽनेनेति अङ्गरागः अङ्गविलेपनं कुंकुमादि. चूडाबन्धम् = जूटाबन्धम् 'परांदा' इति प्रसिद्धम्। **विविधासु**=अनेकासु **दासीषु**=भुजिष्यासु। तैलाभ्यङ्गेन सह वर्त्तते, उत्सादनमुद्वर्त्तनं तेन सह वर्त्तत इति, केशमार्जनं=कङ्कतिकाकरणं तेन सह वर्त्तत इति यथा तथा स्नानसेवां विहितवतीषु=कृतवतीषु। **धारितधौतकौशेया**=परहितशुद्धपट्टवासा। महा-**द्राक्षेति**—द्राक्षाद्रवः=गोस्तनीरसः, दाडिम्बः=दाडिमीफलम्, दुग्धादि, महामधुरा चासौ महोपस्कारमयी ताम् आहारसामग्रीम्=भोजनोपकरणम्। **उपलभते** स्म=प्राप्नोतिस्म।

'**त्वरणचर्ये** च—अखिलं सुसज्जमेव अवलोकयतिस्म' इति सम्बन्धः। किन्तदखिलमिति दर्शयति— * जातीपत्रेति—जातीपत्रम् = जातिकोशः, केसरः=कुंकुमम्, कर्पूरः=घनसारः, लवङ्गम्=देवकुसुमम्, एला = चन्द्रवाला एतेषां द्वन्द्वः। जातीपत्रादिभिः **सुवासितानि**=सुरभीकृतानि ताम्बूलानि। प्रहरे २ **धूमपानयन्त्रञ्च**—कीदृशं तत्—पाटलेन आशुव्रीहिना सुगन्धिशोभनगन्धि यत्, ताम्रकपिष्टकम् अर्थात् पिष्टं ताम्रकं तेन अङ्गारकेण च परिपूर्णां

---

* 'अथ जातीकोशजातीफले समे' इति 'अथ कर्पूरमस्त्रियाम्—घनसारश्चन्द्रसञ्ज्ञः' इति 'लवङ्गं देवकुसुमं श्रीसञ्ज्ञकम्' इति च सर्वत्र—इति (अमरः)।

या साच्छानिका आच्छादनेन सह वर्त्तमाना हाटकामात्रिका = सुवर्णमयी पात्रिका तया अलंकृतः ऊर्ध्वभागो यस्य तत् । **केतकेति**—केतक्या क्रकचच्छदस्य पुष्पं केतकः ( केतकः ) तस्य तोयेन अर्थात् केतकार्केण परिपूरितानि यानि पयःपात्राणि तैः परिलसितं मूलमधोभागो यस्य तत् । **पुनः**—काञ्चनचञ्च्वा सौवर्ण्या मुखकोट्या चमत्कृता सुसज्जिता या प्रलम्बा दीर्घा नलिका तया संवलितं = संयुतम् । **व्यजनेति**—व्यजन-चामर—पतद्ग्राहाः हस्ते यासां ताः दास्यः । ' **प्रति**ग्राहः पतद्ग्रहः ' इति ( अमरः ) ।

**मर्यादाम्** = परदारसन्दूषणाभावरूपां सनातनीं परिपाटीम्, न = नैव **भनक्ति** = आमर्दयते उल्लङ्घयते इत्यर्थः ।

"**पुरुष**" इत्यादि गद्यं निगदव्याख्यातम् । "**अथ** एकदा अट्टालिकायां पर्यटन्त्या अकस्मात् बहूनां पादध्वनिरिव अश्रावि" इत्यन्वयः । कथम्भूतया तया—( तेषां तेषां ) षष्ठ्यन्तपदबोध्यानां शोभाः **पश्यन्त्या** । तेषां केषाम्—**दक्षिण**-दक्षिणस्यां दिशि सुदूरम् = अतिमात्रं विस्तृतानां **काननानाम्** = जङ्गलानाम् । तथा—**अभ्रंलिहानाम्** = अत्युन्नतानां **शैलशिखराणाम्** = पर्वतकोटीनाम् । तथा—**उपत्यकानाम्** = अद्रेरासन्नानां भूमीनाम् ।

**पृ० २००** ॥ कथम्भूतानां—**कालिन्दीति**—कालिन्द्याः यमुनाया ललितसौन्दर्यस्य = महालावण्यस्य विजित्वराः = जयशीलाः अतिहारिताः अत्यन्त-हरिद्वर्णा ये वनौषधयः तेषां वृन्देन समूहेन व्याप्तानाम् । **पुनः** उच्चावचानां अनेकेषां तलानामन्तःस्रवन्ति प्रस्रवणानि = वारिप्रवाहा येषां तादृशानि यानि स्रोतांसि तेषां समीपे नरीनृत्यमानानां सहर्षं नृत्यतां मेघनादानुलासिनां = मयूराणां लास्येन नर्त्तनेन ललितानां मनोहरन्तीनाम् ।

"**द्रुमात्** द्रुमम्" इति । **दन्तकात् दन्तम्** = कुञ्जात्, कुञ्जम् । अथवा—आद्रिकटकात् अद्रिकटकम् । "**दन्तो**ऽद्रिकटके कुञ्जे दशनेऽथौषधौ स्त्रियाम्" इति ( मेदिनी ) । **पादात्** = प्रत्यन्तपर्वतात् **पादम्** = प्रत्यन्तपर्वतम् । "**सपत्र**कम्पनम्" इत्यादिना पक्षिजातिः । **सपक्षति०** इति—पक्षतिः = पक्षमूलं, तस्याः कण्डूयनेन कर्षणेन सह यथातथेति क्रियाविशेषणम् । **तनूरुहाः** रोमाणि । **प्रडी**नाद्याः पक्षिणां डयनप्रकाराः । **कलविङ्कानाम्** = चटकानाम् । **कर्करेटूनाम्**=करेटूनाम् । "कर्करेटुः करेटुः स्यात्" इत्यमरः । किकीदिवीनाम् = चाषाणाम् । "अथ चाषः किकीदिवीः" इत्यमरः । **कपोतानाम्** = पारावतानाम् । **कोकानाम्** = चक्रवाकानाम् । **काकानाम्** = वायसानाम् । **कीरा**

णाम् = शुकानाम् । क्रौञ्चानाम् = पक्षिविशेषाणाम् **कुरराणाम्** = कुरलानाम् उत्क्रोशपक्षिणामित्यर्थः द्वारोपरिस्थगवाक्षात् = द्वारदेशोपरिवर्त्तमानात् वातायनात् । **ईषच्छ्यामलः** = किञ्चित्कृष्णवर्णः । **विधृतेति**—विधृतं मरकतादिगुच्छैरङ्कितं = जटितमुष्णोपं शिरोवेष्टनं येन सः । **सौवर्णसूत्र**रचित कञ्चुकः = हिरण्मयसूत्रव्यूतचोलकः । **जाम्बूनदेति**—जाम्बूनदं = सुवर्णम् । **कौशेयम्** = पट्टम् एतयोः कुसुमचित्रैः अञ्चितेन सज्जितेन प्रावारेण परिलसितः शोभमाना वामस्कन्धो दक्षिणेतरबाहो यस्य सः । **महार्हेति**—महार्हस्य = महामूल्यस्य वज्रकस्य हीरकस्य प्रचयेन आकलितः = रचितो यः कोशः अस्याधानं तत्स्थः चञ्चन् = चमत्कुर्वन् यश्चन्द्रहासः खड्गः तेन अवलम्बितं दोलितं कटितटं=कटिप्रदेशो यस्य सः। **मरकतेति**—मरकतमहामणिमालया लसितः गलः = कण्ठो यस्य सः एवम्भूतः **कमनीयः** = मनोहरः । **युवा** = तरुणः । **भुशुण्डिकेति**—भुशुण्डिका = वन्दूकम् । तोमरम् = पाट्टिशम् = सौवर्णदण्डाः हिरण्मययष्टयः एतैः आकलिताः युक्ताः करा येषां तान् ।

पृ० २०१ ॥ **भटान्** = वीरान् । **सम्बोभोति** = अतिशयेन भवति । यङ्लुकि–लटि रूपम् । **परिवृढः** = स्वामी । **प्रभौ परिवृढः** (७।२।२१) इति सूत्रेण निपातः । **भीता** = मां मारयिष्यति किं करिष्यति वेति विचारेण । **स्तब्धा** = निश्चेष्टा । **खिन्ना** = दीना । **क्षुब्धा** = सञ्चलिता । **उद्विग्ना** = भयचालिता धडत्कृतहृदयेत्यर्थः । इवेति संभावना । **समवित्त** = अज्ञासीत् ।

**स्विन्नाम्** = स्वेदवतीम् । **परिमार्ष्टि** = प्रोञ्छयति । **प्रतिसीराम्** जवनिकाम् । **उत्क्षिप्य** = उत्तोल्य । **शिरोनमनपुरः**सरम् = वन्दनगिरमुच्चारयन्नित्यर्थः । **परमादरा**चारम् = परमं सत्कारव्यवहारमित्यर्थः । **इयम्** = रसनारी । **तम्** = वीरवरं शिवमेवेत्यर्थः । "तम्—पिपासिताभ्याम्" इत्यन्वेतव्यम् । **आदरेङ्गितैः** = आदरैः = बाह्यैर्नमनादिसत्कारैः इङ्गितैः = हृद्गतैर्भावैः । **तद्वचनेति**—तस्य शिवस्य वचनमेव सुधा पीयूषं तस्याः धारा परम्परा तस्याः पिपासिताभ्यां = पातुमिच्छद्भ्यामिव **कर्णाभ्याम्** = श्रवणाभ्याम् । **परमैकतानेति**—परमा मात्रामतिक्रान्ता चासौ एकतानता = अनन्यभावता तया जडीकृताभ्याभ्यामिव = निश्चेष्टीकृताभ्यामिव **नयनाभ्याम्** उपलक्षिता सतीत्यर्थः उपलक्षणे तृतीया । **चित्रार्पितेव** = चित्रलिखितेव । उत्प्रेक्षा ।

**बद्धकरसम्पुटः** = कृताञ्जलिः । **समवर्तत** = अभूत् । "न च बिन्दुमपि विसर्गमपि चास्तु" = किञ्चिदपि बोद्धव्यमित्यर्थः । **पराधीना** =

परतन्त्रा **तदाकारेति**—आकारः = मूर्तिः, सौजन्यम् = सज्जनता सभ्यजनतेति यावत्, लावण्यम् = सौन्दर्यम्, गाम्भीर्य्यम् = महाहृदयताम्, आदरः = सत्कारः आचारादिः = आचारव्यवहारादिः एतेषामवलोकनेन मोहिता तस्मिन्नासक्तेत्यर्थः। **स्वयमे**वेति—पूर्वं स्वयमेव वाचोभङ्गीः प्रास्तौदित्यर्थः।

**आसन्दी** = वेत्रासनिका । **सनाथ्यताम्** = सत्क्रियतामित्यर्थः। सार्धेति—अर्धेन सह वर्त्तत इति सार्धः स चासौ हस्तः तस्य उच्छ्रायः ऊर्ध्वता यस्याः तस्याः । **कौशेय**वसनाच्छन्नायाः = कृमिवमनप्रावृतायाः । **सजलेति** = सजलकुसुमस्तवकैः = जलसहितैः पुष्पगुच्छैः अलङ्कृतं मध्यं यस्याः तस्याः **वर्त्तुल**पीठिकायाः = गोलमञ्चिकायाः **प्राक्** = पूर्वस्यां दिशि, **प्रत्यक्** = पश्चिमायां दिशि च ( यथायोगम् ) **उपाविक्षताम्** = आसिषाताम्।

**पृ० २०२ ॥ वीर** इत्यारभ्य 'दिनानि गमयामि' इत्यन्तं गद्यं निगदव्याख्यातम् । तत्र—* **शम्बरः** = मृगविशेषः । **शल्लकी** = श्वाविधः शशकः = शश एव शशकः वनाखुः । **शिवाः** = शृगाल्यः एतासां पलायनानि = कूर्दनोत्फालनानीत्यर्थः ।

**कर्णशष्कुलीम्** = कर्णभिल्लीम् श्रुतिरन्ध्रमित्यर्थः **अस्पार्क्षीत्** = अच्छौप्सीत् । 'स्पृश' धातोर्लुङि रूपम् । **कदर्याणि**=कुत्सितानि । **दग्धहृदयाः** =हतहृदयाः नीचा इत्यर्थः ।

**पृ० २०३ ॥ 'प्रतिप्रभात**म् = प्रतिसायम्' इत्यत्राऽव्ययीभावसमासः। **वाष्पेति**—वाष्पवारिबिन्दूनाम् = अस्रजलकणानां सन्दोहैः आर्तैः । आननं = मुखम् **क्षालयन्तः** = स्नापयन्तः । विलापं कुर्वन्त इत्यर्थः । धमद् **धमद्धमनीति**-धमद्धमन्तीषु = त्रासेनात्यन्तं धडत्कुर्वतीषु धमनीषु = रुधिरवहासु स्थूलनाडीषु धावमानं सञ्चरणशीलं यद् रुधिरं तस्य धाराभिः दुर्धर्षं वदनं मुखं येषां ते तादृशाः अर्थात् अतित्रस्ता मलीनवदनाश्च । तव **तातस्य**=पितुः **उच्छेदाय** = ध्वंसाय § **शपन्ति** = आक्राशन्ते ।

---

* '**शम्बरो** दानवान्तरे । मत्स्यैणगिरिभेदेषु **शम्बरी** पुनरौषधौ' इति ( हैमः ) ।

§ उक्तञ्च—( श्रीमद्भागवते )

**यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्व्यसाधुभिः ।**
**तस्य मत्तस्य नश्यन्ति कीर्त्तिरायुर्भगो गतिः ॥**

**शासनकाले** = राज्यशासनसमये पक्षपातो नावश्यकः, प्रत्युत पक्षपात-रहितः सन् शासको राजा इहामुत्रफलभाग्भवतीति भावः । भगवती **विश्वम्भरा** = पृथिवी । **युद्धेति**—युद्धे आहतानां मारितानां वीराणां रमण्यः कामिन्यः । **अत्रभवती** = पूज्या । **मौद्गलराज्यम्** = मुगलराष्ट्रम् । **बलात्कार**साध्वसम् = बलात्कारपीडनम् । **यत्र** = महाराष्ट्रराष्ट्रे 'परिपन्थिनामपि दुहितरः सम्मान्यन्ते' इति सम्बन्धः । **युवजनेति**—युवजनानां तरुणानां मनोमोहनं हृदयवशीकरणं यस्मात् तेन **अतिमधुरेण** = अतिप्रियेण **कौमारात्** परेण वयसा = तारुण्येनेत्यर्थः **आलिङ्गिताः** = व्याप्ताः । **सौन्दर्येति**—सौन्दर्यस्य लावण्यस्य यः सारः = निर्यूपः तेन विरचिता इवेति—**उत्प्रेक्षा**-लङ्कारः । **सम्मान्यन्ते** = आद्रियन्ते । ननु **अवहेल्यन्ते** = तिरस्क्रियन्ते । **प्रमाणम्** = मदुक्तः साधकम् ।

**पृ० २०४** ॥ अपाङ्गेति—अपाङ्गे नेत्रप्रान्तभागे क्षिप्ता प्रेरिता लोला चपला तारका अक्षिकनीनिका यस्य तेन **लोचनेन** = नेत्रेण । **असकृत्** = पुनः पुनः । **ईक्षमाणा** = पश्यन्ती । **उरोजयोः** = स्तनयोः **स्रंसदिव** = स्खलितमिव **वस्त्रम्** = उत्तरीयम् । **स्कन्धयोः**=वहयोः । **क्षिप्त्वा** = धृत्वा । एतेन—**रसनार्याः** स्तनयोरुद्वर्तुलत्वं पीनतरत्वञ्च व्यज्यते, शिथिलाभ्यां स्तनाभ्यां तथा वस्त्रपातस्याऽसम्भवात् । 'इव' पदेन शिवासक्तिमत्या तथा स्वतोऽपि स्तनवसनं स्खालितमिति गम्यते । आसक्तानां चेष्टासु तथादर्शनात् ।

**उपतिष्ठते** = सेवार्थं स्थितः । **धृष्टवादिनीम्** = निर्लज्जामित्यर्थः । **मनोरमैः** = हृदयहारिभिः **नर्मालापैः** = कोमलालापैरित्यर्थः । **मनसापि** । हृदयेनापि **अकल्पनीयः** अभावनीयः । **सपत्नः** = शत्रुरपि । **आदरेषु** = सत्कारेषु एव भवान् **सयत्नः** = सोद्यतः ।

**चकितयोः** = विस्मितयोः । **मुदितयोः** = हृष्टयोः **अनुरक्तयोः** = परस्परासक्तिमतोः ।

**अथ** समार्दवम् = प्रेमालापपूर्वकमेव **तदनुमतिम्** = रसनार्याः अनुज्ञाम् 'सिंहदुर्गं, प्रतिनिवर्त्तमानः' इत्यत्र प्रथमाऽसङ्गतेवाऽभाति अग्रे अनन्वयात् किन्तु—'प्रतिनिवर्त्तमानेन—माल्यश्रीकः समागच्छन् आलोकि' इति सम्बन्धो युज्यते † । कथम्भूतो माल्यश्रीकः—**दुग्धधवलेन** = क्षीरनिभेन घोटकेन =

† एतावित्—सहनिस्ताः प्रश्नाङ्कनः इतोऽग्रे पण्डिताः प्रमाणम् ।

आजानेयेन **धावमानः** = शीघ्रं चलन् । कीदृशेन घोटकेन—**महता** = विशालेन । हिमगिर्यादिविशेषणैः घोटकधवलिमानमु**त्प्रेक्षते**—हिमगिरिः=हिमालयः **कर्पूरपूरः** = हिमवालुकासंघः तेन निर्मितेन = रचितेनेव । तथा—चन्द्रस्य चन्द्रिकायाः = ज्योत्स्नाया चयः समूहः तेन रचितेन **मूर्त्तेन** = आकृतिमता **महाराष्ट्रयशसा** = शिववीरयशसेव । पुनः कीदृशो माल्यश्रीकः—**सादिभिरनु**गम्यमानः = अश्ववारैरनुस्रियमाणः । कथम्भूतैः सादिभिः—**सुप्रसादनयनैः** = विकसितनेत्रैः **उत्साहम्** = हृदयसत्त्वं **वमद्भिरिव** = उद्गिरद्भिरिव = इत्यु*त्प्रेक्षालङ्कारः । **प्रत्यर्थीति**—प्रत्यर्थिनां शत्रूणां प्रतापं = प्रभुतामिव **अरुणरश्मिबन्धम्** = रक्तमश्वप्रग्रहबन्धनम् । सव्येन = दक्षिणेन करेण **वशयद्भिः** = स्वायत्तीकुर्वद्भिः इव । **निजेति**—निजो यो विजयध्वजः = विजयपताका तेन **मन्दम्** = शनैः २ आघूर्णमानेन = उत्फाल्यमानेन **कशाग्रेण** = अश्वताडन्याः पुरोभागेन **हयान्** = अश्वान् **हेषयद्भिः** = हेषारवं कारयद्भिः **कटितटेति**—कटितटविलम्बिनः लोलाः चञ्चलाः करवालाः चन्द्रहासाः येषां तैः । **उष्णीषेति**—उष्णीषस्य परेण प्रान्तेन अञ्चलेन दोदुल्यमानः उत्क्षिप्यमाणो योऽनिलः समीरः तद्बलेन विलोलं = अतिचपलं वालजातं = शिरोरुहवृन्दं येषां तैरित्यर्थः । स्पष्टमन्यत् ।

**न्यवीविदत्**=निवेदनं कृतवान् । **शिवेङ्गितम्**=शिवाभिप्रायम् । '**धनुषां** विंशत्यामिव=विंशतिसंख्याकधनुषामन्तराल इवेत्यर्थः । **तुरगनिगा**लेति—तुरगस्य=अश्वस्य निगालः गलप्रदेशः तस्य आस्फोटनं=स्थापितीकरणं तत्पूर्वकम् । 'प्रचलत्सु अश्वारोहेषु' इत्यन्वयः । **स्वभावोक्तिः** ।

**पुरुषमयं** पारावारप्रावाहमिव=पुरुषमयं समुद्रोच्छलनमिव **इत्युत्प्रेक्षा** । **मायाजिह्मः**="सुल्तान मुआजिम्" इति ख्यातः । **गव्यूतिः** सप्तक्रान्तराले= चतुर्दशसंख्यकक्रोशान्तराले इत्यर्थः । **उपकार्याः**=शिविराणि । **समासज्य**= सम्यगायोज्य । **प्रतीक्षमाणः**=युद्धावसरमिति शेषः ।

**पृ० २०६ ॥ तृणाय** मन्यन्ते=**नृसिंहस्य** सटामित्यादि ‡ अतिशयोक्तिः । **सटा** जटेति समानार्थौ शब्दौ । स्फटाः=फणा ताम् । **लम्पटः**= परस्त्रीलोलुपः **लाम्पट्यम्**=लम्पटस्य भावः कर्म वा तद्धर्मे यस्य तादृशम् ।

---

* अत्रोत्साहस्य प्रकटनं वमनेन रूपेण सम्भावितम् ।

‡ नृसिंहावतारादीनां सटादिभिः सह [illegible]

**अभिलाषम्**=इच्छाम् । **पाञ्चसाहस्रिकः**=पञ्चसहस्राध्यक्षः पञ्चसहस्रेण चरति । **चरति** (४। ४६) इति ठक् । अनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः । 'मायां रचितवान्' इति—मायाविपु मायारचनमावश्यकमिति भावः ।

पृ० २०७ ॥ **दिवाकीर्त्तिम्**=नापितम् । 'क्षुरिमुण्डिदिवाकीर्त्ति-नापितान्तेवसायिनः' इति ( अमरः ) । **मसृणमुखः**=स्निग्धाननः मुखवालानां मुण्डनात् । **संवृत्य**=सम्भूय । **पटवासेति**—पटवासेन सौगन्ध्येन वासितं सुरभीकृतं दिशामन्तरमवकाशो येन तादृशः **रतिप्रतिकृतिरिव**=रतिः कामस्त्री तन्मूर्त्तिरिवेत्यर्थः । **स्मितैः**=हास्यैः । **कटाक्षैः**=नेत्रप्रान्तभागसञ्चालनैः । **मधुरवचनैः**=प्रेमालापैः परवशीकरणमन्त्रभूतैरित्याशयः । **सजघनेति**—'स्त्रीकट्याः जघनं पुरः' इति ( अमरः ) । जघने कम्पेन सह वर्त्तमाना इति सजघनकम्पाः ते च ते पादक्षेपाः वेश्याजननां गतिविशेषाः तैः । **सकृत्रिमेति**—कृत्रिमयोः कुचयो वेपनेन=कम्पेन सह यत् वलिभङ्गेन ललितं=युवजनमनोमोहन-समर्थं कञ्चुकिकादर्शनं तैः । **यूनाम्**=तरुणानाम् । मनः **मन्मथोन्माथितम्**=कामपीडितं कामातुरमिति यावत् **विदधत्**=कुर्वन् । **ब्रह्मचारिकुटीरेति**—ब्रह्मचारिणः कुटीरे वासिनो ये सन्यासिनः परिव्राजः तेषाम्—एव मध्ये इत्यर्थः । **परिवर्त्तितवेषैः**=परिवर्तितः अन्यथाकृतो वेषो नेपथ्यं यैः तैः । **कलित-मृदङ्गैः**=धृतमृदङ्गैः=**तानपूरि**केति—तानपूरिकातालझर्झराः करे येषां तैः । **व्यजनेति**—व्यजनम्=वातकरः । पतद्ग्रहः=थूत्कारपात्रम् । **ताम्बूलकरङ्कम्**=ताम्बूलिकाधारगुटिका । मञ्जीरपोटलिका = नूपुरगुप्तिका एतदादिवाहकैः । सौवर्णेति—सुवर्णमयप्रावरणपटप्रावृतामित्यर्थः । **शिविकाम्** = नरयानम् पालङ्कीमित्यर्थः । **वीरैः** = भटैः । **आकलितेति**—परिवर्त्तितभारिकनैपथ्यैः । '**भारवाहस्तु** भारिकः' इति ( वैजयन्ती ) । **पद्मिनी**नाम्नीति—अनेन नाम-करणेन झटिति मायाजिह्मभाववशीकरणप्रयोजनं व्यज्यते । 'नाम श्रवण-मात्रेण'—इत्यादि गद्यमपि दर्शितार्थोपपादकम् । **आदिदेश** = आज्ञप्तवान् । **रङ्गशिविरम्** = नृत्यशालाम् । '**रङ्गो** ना रागे नृत्यरणक्षितौ अस्त्री त्रपुणि' इति ( मोदनी ) । **यत्र**=शिविरवर्त्तिनि रङ्गे । **दुरोदरम्** = द्यूतम् । '**दुरोदरो** द्यूतकरे * पणे द्यूते दुरोदरम्' इति ( अमरः ) । **नर्मशर्माणि** = क्रीडा-सुखानि ।

---

* **पणो** ग्लहः । 'पणं' प्रतिमाजरचणे' इति ( मेदनी ) ।

पृ० २०८ ॥ **पानक**परम्परा = पानगोष्ठिकेत्यर्थः । **निविशन्ते** = प्रवेशं लभन्ते । **भट्टारकाः** = स्वामिनः शिबिरादीनाम् । **वितस्तीति**— वितस्तिः द्वादशांगुलः उच्छ्रायः औन्नत्यं यस्याः सा **कनकमयी** = सौवर्णी । **तूलिका** = शय्योपकरणम् । 'तुशाई' = 'गद्दा' इति भाषा । '**तूलिका** कूर्चिकायाञ्च शय्योपकरणेऽपि च' इति ( मेदनी )। **उपबर्हाः** = उपधानानि। **प्रलम्बनलम्** = प्रलम्बो दीर्घो नलः नलिका यस्य तत् तादृशम् कटुविति— कटुमधुरामोदेन मोदितानि सुरभीकृतानि दिशामन्तराणि येन तत्—'धूमपानयन्त्रम्' **राजत**पीठिकायाम् = दुर्वर्णचतुष्किकायाम् । **विन्यस्तानि** = स्थापितानि । 'काचपात्राणि'। इति सम्बन्धः तानि विशेषयति—

**अन्तःस्थेति** । अन्तःस्था अन्तर्वर्तमाना या रक्तपीताऽरुणद्रवस्य आभेवाऽभा तस्याः भारधारया = समुदायरेखया स्नापितानि व्यापितानि आस्तरणानि यैः तानि तथा—**मध्यस्थेन**=मध्यभागे स्थापितस्य द्योतेन प्रकाशेन द्योतितानि प्रकाशितानि च तानि दीप्तिप्रचयेन प्रभापिण्डेन विहितं कृतं चाकचक्यं चमत्कृतिर्यैः तानि । तथा— **अधोमुखं** (यथा तथा) विन्यस्तानि स्थापितानि विविधानि अनेकानि चषकवृत्तानि चषकामत्राणि । तथा—**माध्वीकम्** = मधुना = मधूकपुष्पेण निर्वृत्तं माध्वीकम् = मधूकपुष्पजातं मद्यम् । **मैरेयम्** = आसवः । "मिरा" देशविशेषः तस्यां भवम् । अथवा ओषधिविशेषः । **नद्यादिभ्यो ढक्** (४।२।९७) इति ढक् । **जगलः** = मद्यकल्कः । "मेदको जगलः समौ" इति (अमरः)। "**जगलो** मदनद्रुमे । मेदके पिष्टमद्ये च" इति ( मेदनी )। **वारुणी** = सुरा। "सुरा प्रत्यक् च **वारुणी**" इति ( अमरः )। "वारुणी गण्डदूर्वायां प्रतीचि सुरयोः स्त्रियम्" इति (मेदिनी) । एताभिः—माध्वीक—मैरेय—जगल—वारुणीभिः परिपूरितानि = भरितानि । **अष्टापदेति**—अष्टापदेन रचितम् अष्टापदम् = शारीफलकचतुष्पाटीति प्रसिद्धम्। रत्ननिर्मिता **शारिवाटिका—दन्तिदन्तेति** दन्ती गजः तस्य दन्तानां सारेण रचिता **पाशकाः** = दलानि । **व्यजनयुताः** व्यजनहस्ताः । **भरण्यभुजः** = वैतनिकाः । "भरण्यभुक् कर्मकर" इति (अमरः)

पृ० २०९ ॥ **ताम्बूलेति**—ताम्बूलस्य चर्वणेन चञ्चलाः कर्च कर्चायिताः रदनाः दन्ताः यस्य तादृशं वदनं मुखं यस्य सः । **पिबन्निव** = सादरमीक्षमाण इवेत्यर्थः । विविधेति—विविधेन नानाप्रकारेण परिमलेन = जनमनोहारित्वेन परिमर्दितं ललाम अग्रम् मध्यदेशो यस्याः सा तथा **घोणया**

कया **जिघ्रन्निव** = गन्धोपादानाक्रियां कुर्वन्निव "**मायाजिह्मः**" तूलिकामलञ्च-कार" इति सम्बन्धः ।

**ताम्बूलेति**—व्याख्यातप्रायम् । **स्मयमानेव** = चकितेव वस्तुतस्तु न चकिता कृत्रिमवेषत्वात् । **लज्जमानेव** = व्रीडां दधतीव । **सग्रीवेति**—ग्रीवा-भङ्गेन कन्धरा परिवर्त्तनेन सह यथा तथा अवनतमुखी = नम्रानना कामिवशीकरण प्रकारोऽयं नारीणाम् ।

**स्वस्मिन्नेव** निविशमाना = स्वशरीरे गुलुञ्छायमानेव । **तूष्णीङ्कारेण** = मौनेन । **अङ्गीकारम्** = स्वीकृतिम् आचक्षाणा=कथयन्ती अनुकूला भवन्तीत्यर्थः । **चूर्णकुन्तलमूलम्** = अलकामूलम् **कण्डूयितुम्** **आरेभे** = प्रचक्रमे । **भ्रूभङ्गेन** = भ्रकुटिन्यासेन । **हाटकामत्रात्** = सुवर्णपात्रात् । **उत्थाप्य** = उत्तोल्य **पञ्चषाः**—पञ्च वा षट् वा ।

पृ० २१० ॥ **एला** = चन्द्रवालाः । **रजतसम्पुटम्**=रौप्यकाडिब्बिकाम् । इतोऽग्रे बहु सरलं गद्यम् । "**सरकेऽप्यनुतर्षणम्**" इति (अमरः) । * **कादम्बरी** मदिरा । **अतितीक्ष्णा** = महामदकारिणी । **अवदंशम्** = भक्षणम् † अव-दंशस्तु भक्षणम्" इति (अमरः) । **शेष्व** = स्वपिहि **पालङ्क्याम्** = शिविकायाम् । शाकविशेषार्थोऽपि पालङ्कीशब्दः वर्णसादृश्यमादाय शिविकायां प्रयुक्त इति कवेराशयो वर्णितः प्राक्तने लघुटिप्पणे । **चेटीरालपन्ती** = दासीः कथयन्ती, पद्मिन्येव । **अतिष्ठिपत्** = स्थापयामास ।

पृ० २११ ॥ **उदतारीत्** = उत्तरमदात् । **वाहकाः** = शिविकानेतारः । **पालङ्कीम्** = शिबिकाम् । "**धिक्त्वाम्**" इत्यत्र धिक्-योगे द्वितीया धिगुपर्यादिषु त्रिषु" इत्युक्तेः । **नल्वद्वयान्तरे** = चतुःशतहस्तमितप्रदेशान्तरे **प्रतीक्षमाणान्** = प्रतिपालयतः । **त्यक्तेति**—त्यक्तःपरिहृतः चेटीवादकादिवेशो यैः ते **वीराः** = **प्रनष्टम्** = लुप्तम् । **विवर्णाः** = हतकान्तयः ।

**अथोमिति** अत्र—**ओमाङोश्च** (      ) इति सूत्रेण पररूपम् । **महाराष्ट्रभूपरिवृढे** = महाराष्ट्रदेशाधीश्वरे, सति सप्तमीयम् ।

पृ० २१२ ॥ **समुद्धतध्वजाः** = सञ्चालिते **सन्देशहराः** = जङ्घा-

---

* कुत्सितं मलिनमम्बरं वस्त्रं यस्य सः **कदम्बरः** बलभद्रः तस्येयं प्रियेति कादम्बरी ।

† पानरोचिजनकं भक्ष्यमित्यर्थः ।

कारिकपदे नियुक्ताः **सादिनः**=अश्ववाराः **घोटकै**र्धावमानाः = अश्वैश्चङ्क्रममाणाः, **दूरादेव** जयजयेतिवादिनः समागताः" इति सम्बन्धः । कथम्भूतैर्घोटकैः–**फेना**ऽविलवल्गैः = फेनेन = मुखनिर्गतडिण्डीरेण आविलाः लिप्ताः वल्गाः रश्मयो येषां तैः **पुनः**–हेषया हिनहिनेत्यश्वजातिशब्देन विहितं जयध्वनिप्रातिनिध्यम् = जयध्वनिप्रतिनिधिभूतं कर्म यैः तैः । **पुनः** "सचामरै" रिव **इत्युत्प्रेक्षा** । **उत्थितपुच्छैः** = उत्थितं पुच्छं लाङ्गूलं येषां तैः ।

**पुनः**—कलितं धृतं कमलदलद्वयं सरोजपत्रयुग्मं यैः तैरिवेति – **उत्प्रेक्षा** । **ऊर्ध्वकर्णैः** = उद्धतकर्णैः **हर्षस्नातैः** = हर्षेण स्नातैः व्याप्तैरिव **स्विन्नैः**= स्वेदवद्भिः । **समासा**दितः प्राप्तः शुभसंवादः विजयसमाचारो यैः तान् **अवगत्य**-ज्ञात्वा । **निजेति**–निजस्य आजानेयस्य घोटकस्य रश्मिं वल्गाम् आकृष्य स्वगतिं **निरुरोध** = प्रतिहस्तयाञ्चक्रे । **जयध्वनि**धाराभिः = जयजयेतिशब्दपरम्पराभिः। **धराधरम्** = पर्वतम् । **धाराधरम्** = मेघम् । **धराम्** = पृथिवीम् । **ध्वनयत्सु** = नादयत्सु । अनुप्रासोऽलङ्कारः । **पोतेति**—पोतानां समुद्रनौकानां परम्पराभिः लतिकाभिः राजिभिरिति यावत् धावमानाः चङ्क्रममाणा ये सांयात्रिकाः पोतवणिजः तैः सकौतुकं सकुतूहलं वीक्षितः दृष्टः । संयात्रा प्रयोजनमस्य **सांयात्रिकः**। **तदस्य प्रयोजनम्** (५।१।१०९) इति ठञ् । **पारावारेति**-पारावारः समुद्रः तस्य वीचिव्रजैः = लहरीततिभिर्मार्जितः सावितः कोङ्कणदेशः । **सागरेति**=सागरे संसर्पिणां सञ्चलतां प्लवानां तरणीनां कूपकेषु गुणवृक्षेष्वपि । **महाराष्ट्र**मण्डलाखण्डस्य=महाराष्ट्रदेशाधीश्वरस्य ।

**पृ० २१३** । विक्रमकथा=शौर्यकथा गीयते=प्रस्तूयते । **सगुल्फाहति**= गुल्फौ=घुटिके ताभ्यां तयो र्वा या आहतिः ताडनं तेन सह यथा स्यात् तथा "आनीय" इति कृदन्तक्रियाया विशेषणम् । "गुल्फेन कुक्षावाहन्यमानाः सपदि चलन्ति हयाः" इति प्राक्तने लघुटिप्पणे । एवम्—**सवल्गास्फालनम्**=रश्मीनामास्फोटनसहितम् । "**विजयतां**—महाराष्ट्रमण्डलाखण्डलः" इति सम्बन्धः । कथम्भूतः—**पाथोधीति**—पाथोधेः समुद्रस्य पयःपूरे जलप्रवाहे परिवर्तिताः सञ्चालिताः परःशतं शतात् परे ये पोताः समुद्रयानानि तत्स्थानां सांयात्रिकानां समुद्रवणिजां समूहेन सङ्घेन जेगीयमाना पुनः पुनः अतिशयेन वा कीर्त्यमाना या कीर्त्तिरेव चन्द्रिका ज्योत्स्ना, तस्याश्चुलकने चुलुकीकरणे चातकीभूतः स्तोककीभूताः कोङ्कणान्तर्गतपश्चिमसमुद्रतटमण्डले प्रजागणो यस्य सः । **पुनः**—

तत्कालं छिन्नाः कृत्ताः प्रत्यर्थिनां वैरिणां पृथिवीपतीनां भूपानां याः कन्धराः शिरोधराः, ताभ्याः विगलत्=अत्यन्तं स्रवत् कवोष्णम् ईषदुष्णं शोणं रक्तं शोणितं (रक्तं) रुधिरं तस्य प्रवाहेन परितर्पिता या शाकिनीडाकिनीभूतानां मण्डली, तस्या विलोडितेन विलोलितेन ताम्रश्मश्रुणा रक्तवर्णकूर्चेन गण्डेन मुण्डमालया (च) छिन्नकन्धरशिरोमालया मण्डिता भूषिता चण्डी येन सः तथाविधः । **सनातन**धर्मरक्षणे=वैदिकधर्मपालने सक्षणः सोत्कण्ठः । **पुनः**—रिपुनिकराणां वैरिव्रातानां सम्पत्तिः= राज्यश्रीरेव सीमन्तिनी केशवेशवती बधूः तस्याः धम्मिल्ले=केशवेशे वेल्लितं दोलितं यत् मल्लिकामतल्लिकामाल्यम्=प्रशस्तमल्लिकारचितशेखरं तेन सुवासितः करपल्लवतल्लजः—प्रशस्तपाणिपल्लवो यस्य स तथाभूतः जितशत्रुश्रीक इत्यर्थः ।

**पृ० २१४ । सविजयेति**—विजयध्वजस्य विजयपताकायाः आन्दोलेन सह । **बाधमानाः**=पीड्यमानाः । **युयुत्सवः**=युद्धं कर्त्तुमिच्छवः । **महाराष्ट्रेति**—महाराष्ट्रानां रिष्टयः असयः तेषां धारैव तीर्थं तत्र **मुक्तिं गताः**= मृता इत्यर्थः । **चमूः**=सेना । **तुमुलम्**=भयङ्करम् । जन्यम्="युद्धमायोधनं जन्यम्" इति ( अमरः ) । **वेभिद्यमानाः**=चेच्छिद्यमानाः । **पुरन्दरमन्दिरम्**— इन्द्रपुरीम् । युद्धे निर्भयं मृतत्वात् "हतो वा प्राप्स्यसि स्वर्गम्" इत्युक्तेः । **गिरिकन्दरम्**=पर्वतगुहां । भेजुः=पलायाञ्चक्रिरे इत्यर्थः । **इङ्गितज्ञैः**=स्वाम्यभिप्रायज्ञैरित्यर्थः । **समीरंग्रसमानैः**=अतिवेगशालिभिः **अतिशयोक्ति**रियम् । **वियदङ्गणेति**—वियदेव अङ्गणं चत्वरं तत्र रिङ्गणं कूर्दनं तत् **ईहमानैः**=कामयमानैः उत्सवमानैरित्यर्थः । **मुमुदिरे**=मोदं भेजिरे । **मुद्** हर्षे । लिट्येकवचने रूपम् । **परिषस्वजिरे**=आलिलिङ्गुः । **षञ्ज**—परिष्वङ्गे ।

**पृ० २१५ । गततन्द्रे**=निर्निद्रे प्राप्तसञ्ज्ञे इत्यर्थः । **"स च वाचंयम** एवाऽवर्त्तिष्ट" इत्यन्वयः । **आश्चर्यपुषी**=विसयविसेरे **तन्द्रासम्पर्कजुषी**= प्रमीलासम्बन्धभाञ्जी । **चक्षुषी**=नेत्रे । **चिरालस्ये**ति—चिरमालस्येन मन्थराभ्याम् अलमाभ्याम् **सम्मर्द्य**=निमंथ्य । **सान्द्रेति**—सान्द्रा घनीभूता या श्यामता=हरितिमा तया श्यामीकृतो दिशां वलयो मण्डलं यत्र तादृशं वनम् । **उत्तोलमुत्तोलम्**= उत्थाप्योत्थाप्य । **चिञ्चा**किसलयाग्रेषु=चिञ्चा=तिन्तिडीवृक्षः तस्य किसलयानां पत्राणामग्रेषु । चिञ्चापत्रमतिसूक्ष्मं भवति तत्र लक्ष्यवेधे कृताभ्यासा भटाः सङ्ग्रामे शत्रुलक्ष्यं सम्यक् भिन्दन्ति । **हाटकेति**—हाटकं सुवर्णं, करहाटः शिफाकन्दः तयोः छविः शोभा यस्य तादृशः कपोलो यस्य सः । लोलतारकः=चपलनेत्रकनीनिकः । **विविधेति**—विविधानां भावानां करन्यासानां ... ... ... तासां भङ्गेन

नाशेन भज्यमानो भावो हृदयं यस्य स तथाविधः । "**नोर्मिति** न वा नेति=न स्वीकारं न वा निषेधमित्यर्थः ।

पृ० २१६ ॥ **प्रजागरमन्थरः** = जागरणेनालस्योपेतः । **गतयामिन्याम्** = यातायां रात्रौ । **दीपोद्योतेति**—दीपानामुद्योतेन=प्रकाशेन लटलटज्वलनेन चतुर्गुणितं चाकचक्यं चमत्कारो येषां एवम्भूतानां चन्द्रहासानां खड्गानां भासाभिः भयानकानां भीतिप्रदानां **प्रहरिणाम्** = यामिकानाम् । **रेणुकाराशिम्** = धूलिराजिम् । **आहितवान्** = प्रक्षिप्तवानसि ।

**कथं वा** = केन वा प्रकारेण । गगनोल्लेदाभ्यासेन इव **निशिततरैः** = खरतरैः । **वाताघातेन** वायुस्पर्शेन क्षालितैः शोधितैरिव **मयूखपूरैः** = किरणपुञ्जैरिव । **विहितेति**—विहितं कृतम्—आतपत्राणां छत्राणां विडम्बनम् अनुकरणं यैः तादृशैर्**भल्लैः** = क्षुरकैः **भयङ्करान्** = भीतिजनकान् **प्रतीहारान्** = द्वारपालान् । **साधुवादवर्षाभिः** = "साधु साधु" इति वचनवृष्टिभिः । **व्याघ्रमृगयाव्यसनी** = शार्दूलखेटककर्मण्यः । "**वीरगतिं** गतो मार्तण्डमण्डलं = सूर्यमण्डलं भित्त्वा नन्दनवनाविहारम् = स्वर्लोकारामविश्रामं आससाद = अकरोत्, स्वर्गङ्गामित्यर्थः । सौकुमार्यं नाम गुणः । वाचां प्रचाराः = वार्त्तालापाः ।

पृ० २१७ ॥ **प्रौढिः** = अभिमानः । **उदर्काऽभिलाषिणम्** = उत्तरकालिकशुभफलकामिनम् । **विक्रमेति**—विक्रमव्यापारेषु व्यत्यायितं = गमितं यौवनं येन तम् । सदाचारः = शास्त्रीय आचारव्यवहारः । "हविष्यभोजिनम्" इति ब्रह्मचारित्वात् । **विविधेति**—विविधानामनेकेषां देवानां महादेवहनुमदादीनाम् अनुष्ठाने उपासने एकोऽनन्योऽद्वितीयः तानो लवो यस्य तम् **क्षत्रियकुलकलशम्** = क्षत्रवंशावतंसम् ।

**विचिकित्सा** = संशयः । मम **तातपादस्य** = खड्गसिंहस्य । न **शाम्यति** = शान्तो भवति । **उद्वेगः** = जिज्ञासारूपा कलना । **शङ्केति**—शङ्का = संशयः एव पङ्कः कर्दमः तेन पङ्किलस्य मलिनस्य हृदयस्य । **जनिभूः** = उत्पत्तिस्थानम् । स्पष्टमन्यत् ।

पृ० २१८ ॥ **आश्वीनम्** = अश्वेन एकेनैव दिनेन गम्यम् । "अश्वस्यैकाहगमः" (५।२।१९) इति सूत्रेण खञ् । **जितवारनामा**=जटवारा इति प्रसिद्धः । **लब्धाश्वनाम्** = [illegible] । **अपि** = किंच । **आपृच्छे** = प्रश्नयामि

**भूमिभुजः** = ¹भौमायमोक्तारः "जागीरदार" इति ख्यातः । **अकस्मात्** = दुर्दैववशादित्यर्थः । **ज्वरितेषु** = ज्वररोगेण आक्रान्तेषु **कर्णेजपैः**= पिशुनैः । **ईर्ष्यापरवशैः** = मत्सरिभिः । **असूचितयात्रः** = न सूचितः यात्रा येन सः । **सादिसङ्ख्याम्** = अश्वारोहसङ्ख्याम् । **विनैव** विचारम् = साहसमाचरन्नित्यर्थः ।

**पृ० २१६ ॥ वज्रेण** रचितम्' इत्यादि जर्जरीभवति इत्यन्ते गद्ये **यथासंख्य**मलङ्कारः । **करुणो** रसः। (अत एव) **वैदर्भी** रीतिः ।

**परिवर्त्ती** = परिणामी । **अवितर्कणीया** = इदमित्थमेवभाव्यमित्यनाकलनीया । **दैवघटना** = भागधेयपरिस्थितिः । **सुखदुःखमयः** = सुखदुःखप्रचुरः सुखदुःखस्वरूपो वा । **दुःखाऽसम्भिन्नम्**=दुःखेन अनाविद्धम् । **अभिलाषाः** = वासनाः । **अपरिचितेति**—न परिचिता नाऽनुभूता पश्चात्तापस्य संघर्षः सम्बन्धो येन तत् । **धैर्य**मेवेति—विपदि धैर्यधरणस्य सतां लक्षणत्वात् ।

**आकलयितुम्** = रचयितुम् । **वात्या** = वातसमूहः । **पारावारः** = समुद्रः । 'पर्वतानिव पयसः तरङ्गभङ्गान् = (लहरीनिचयान्) इति सम्बन्धः । पोतेन = **दोलितुम्** = कम्पयितुम् । **उद्विग्नान्** = खिन्नहृदयान् **कर्णधारान्** **क्रन्दन**कोलाहलम् = रोदनाह्वानशब्दम् । **यात्रिनिकराः** = सांयात्रिकसमूहाः । **रामबालस्य** = रामसिंहस्य । अयमेव रघुवीरः ।

**पृ० २२० । कार्पासभाराः**=कर्पास्याः विकारः कार्पासः तस्य भाराः । **तस्य विकारः** ( ४ । ३ । १३४ ) इत्यण् । " तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च" इति (अमरः)। **प्लवप्रान्तस्थेन**=पोतप्रान्तभागे स्थितेन । **तुन्दिभः**= तुन्दी । तुन्दिलस्तुन्दिभस्तुन्दी" इति (अमरः) **तुन्दिवलि**भटैर्भः ( )
**पृथुकम्**=शिशुम् । **गोपायिष्यामि**=रक्षयिष्यामि । **व्याहृत्य**=उक्त्वा । **स्वपृष्ठदेशे**=त्रिकभागे । **अतित्रस्तम्**=महाभीतम् । **दोधूयमानस्य**=कथ्यमानस्य उच्छलतिं कुर्वाणस्येत्यर्थः । " दोदुल्यमानैः लोललोलैः कल्लोलैः " इत्यत्र **अनुप्रासः** । **चङ्क्रम्यमाणौ**=अतिशयेनोच्छाल्यमानौ । **अस्ताचल**चूडाचुम्बिनम्=अस्तंयान्तम् । **लोकलोचनम्**=सूर्यम् । **आलोक**मालोकम्= दृष्ट्वा दृष्ट्वा । **वाष्पेति**—वाष्पविन्दुभिः स्नाता साविता श्मश्रूर्यस्य तम् **रोरुद्यमा**-

¹ भौमस्य भूमेः आयो लाभ इति भौमायः तस्य भोक्तारः ।

**नम्**=अतिविलपन्तम । **अजीगमाव** = आवामयीयपाव । **तरङ्गोत्तमाङ्गे** = तरङ्गाणां वीचीनाम् उत्तमाङ्गे शिरसि उपरिप्रदेशे इत्यर्थः । कदाचित् **तरङ्गतले** = तरङ्गाधोभागे । **अभ्रीः** = नौकामलघर्षणार्थं काष्ठरचितान् कुद्दालान् । "**अभ्रिः** स्त्री काष्ठकुद्दालः" इत्यमरः । "कृदिकारात्"—( ग० ४ । १ । ४५ ) ङीपि "अभ्री" इत्यपि । **क्षेपणीः**= नौकादण्डान् । **सेवनानि** = नौकाद्यर्थं बन्धनानि । **आनायान्** = जालानि । जालमानायः(३।३।१२४) इति घञन्तो निपातितः । **कुवेणीः**=‡मत्स्याधानीः।

पृ० २२१ **क्रन्दमानम्**=रुदन्तम् । **वीचिभङ्गैः**=लहरीपरीवर्त्तैः । **अतिलोलम्**=दोदुल्यमानम् । **कोलम्**=प्लवम् । **अकूपारस्य**=सागरस्य । **झञ्झावातः**=महावातोत्पात इत्यर्थः । **उदन्वान्**=समुद्रः । **तरङ्गेति**—तरङ्गाणां लहरीणाम् उच्छालनस्य उत्फालनस्य वेगं जवम् । **वीचिपातघातैः**= तरङ्गप्लावनानामाहननैः । **घोरा**=भयङ्करा । **रजनी**=रात्रिः । **अन्तरालः**= व्यवधानम् । **अवर्धिष्ट**=वृद्धिं गतः । **सक्रन्दम्**=सरोदम् । **प्रतिपादम्**= प्रतिक्षणम् । **पयःपूरेण**=जलसंघेन । **प्लाव्यमानः**=उह्यमानः । **तिमिङ्गिलैः**=मत्स्यविशेषैः । **ग्राहैः**=नक्रैः । **सामुद्रिकसत्त्वैः**=समुद्रान्तर्वर्त्तिभिर्मकरादिभिर्जीवैः । **परीवाहैः**=प्रवाहैः । **यमेन**=कालेन मृत्युना । "कालेन" "मृत्युना" चेत्येक एवार्थः आवेगोद्वेगव्यञ्जनाय पुनरुक्तोऽपि न दोषवहः ।

पृ० २२२ ॥ **तारकितम्** = सञ्जाततारकम् । **तरङ्गितम्** = सञ्जाततरङ्गम् । **प्रेङ्खितम्** = उल्लोलितम् । **वीचिप्रचयम्** = वीचीनां पुञ्जम् । **क्षारेति**—क्षारच्छेदेन = समुद्रशोषेण क्षीयमाणं = कृशीभवन्तम्, क्षारस्य कृशीकरणस्वभावत्वात् । **क्रन्दनैः**=विलपनैः । **तमीम्**=रात्रिम् । अहम्—**अतिवाहयाम्बभूव**=गमयाञ्चक्रे । 'समुद्रफेनेष्विव लीयमानेषु'—**तारकानिकरेषु**=नक्षत्रसंघेषु इति—**उत्प्रेक्षा** । **उडुपे**=पोते इव **प्रतीच्याम्**= निमग्ने **उडुपे**=चन्द्रे अस्तङ्गते इत्यर्थः । "**उडुपश्चन्द्रभेलयोः**" इति ( धरणिः ) । **सरस्वतः** = समुद्रस्य । **तरङ्गेति**—तरङ्गेभ्यः उच्छलितान् उद्गतान् **तोयकणान्** = जलबिन्दून् **माणिक्यानीव** = मुक्ताफलानीव ।

‡ "मत्स्याधानी कुवेणी स्यात्" इत्यमरः । कुत्सितं वेणन्तेऽस्यां मत्स्या इति **कुवेणी** । 'हलश्च' (३ । ३ । १२१) घञ् । वेणृ धातुर्गत्यर्थः । गौरादित्वात् (४ । १ । ४१) ङीष् ।

विदधत् = दर्शयन्नित्यर्थः । **कुंकुमेति**—कुंकुमस्य केसरस्य बलाहकानां मेघानां निकरैः व्रातैः आक्रान्ताम्=व्याप्तामिव अकार्षीत्—**भास्वान्**=सूर्यः ।

**वीचिक्षोभः**=लहरीसञ्चलनम् । **उद्ग्रीवेण**=उन्नतकन्धरेण । **विस्फारित**चक्षुषा=उद्घाटितनेत्रेण । **गुणवृक्षकमिव**=नौकायाः मध्यवर्त्ती दण्डविशेषमिव । "मास्तूल" इति ख्यातः । **प्लवः** एको दृष्टः=प्लवस्य प्रथमं गुणवृक्षदर्शनेन पृथिव्या गोलत्वं स्पष्टंभवतीति वैज्ञानिकाः । **तन्नियामकाः** = पोतप्रबन्धकाः ।

**पृ० २२३ ॥ वायुविधूतान्**=समीरचालितान् **क्षारोदेति**—क्षारोदः = क्षारजलः समुद्रः तस्य क्षारेण=क्षारनीरेणेत्यर्थः नीलीकृतो वर्णो यस्य एवम्भूतः । * **उल्लाघः**=रोगनिर्मुक्तः '**मा स्म** ग्रसिष्ठाः अमङ्गलचिन्तया'=अशुभचिन्तनेन ग्रस्तो माभूरित्यर्थः । **कुशलिनौ**=क्षेमवन्तौ । **तुरुष्केति**—तुरुष्काद्याः म्लेच्छजातयः । **विचित्रा**=मनुष्यबुद्ध्यतिक्रान्ता ।

**पृ २२४ ॥** '**पीतं** रक्तं श्याममिव च दिक्चक्रमालोकयन्" इति महावीरचपेटाहतस्य आसन्नमरणावस्था **जातिः** ।

**पृ० २२५ ॥ कथोपकथनैः**=वाकोवाकैः । '**यदि** जीवेद् वयसा रूपेण चेदृश एव सम्बोभूयेत रामसिंह' इति कविना **दण्डी** कविरनुक्तः ।

**पृ० २२६ ॥** विकचसारसम्=प्रफुल्लकमलम् । **सारसेति**—सारसाः=पुष्कराह्वः कारण्डवाः=पक्षिविशेषाः ।

तदादिपक्षिविशेषैः—कूजितं=नादितम् "सर" इत्यस्य विशेषणम् । **चिरेति**—चिरतृष्णया=बहुकालपिपासया गलितः भग्नः उत्साहः धावनोत्प्लवनादिविषयकोत्कण्ठाविशेषो यस्य तम् **वाहम्**=अश्वम् । सैन्धवस्य=अश्वस्य । **फेनेति**—फेनेन डिण्डीरेण क्षालितं लिप्तं खलीनं कविका "लगाम" इति प्रसिद्धं यस्य तम् । **रश्मिम्** = वल्गाम् । **पाणिपीडाम्** = विवाहम् । शिष्टं निगदव्याख्यातम् ।

**पृ० २२७ ॥** '**शल्यानीव** निमग्नानि=कीलकानीव खचितानि । **अधरसीधु**समास्वादनेन=तस्याः सौवर्ण्या अधरमेव सीधु मद्यं तस्य समास्वा-

---

* 'वार्त्तो निरामयः कल्प उल्लाघो निर्गतो गदात्' इति (अमरः)। 'उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि' इति (हैमः)। **उपसर्गात्फुल्ल**—(८।२।५५) इति सूत्रेण साधुः ।

दनेन चुम्बनेन । **सुधासुखम्** = अमृतानन्दम् । **अधरीकुर्याम्** = न्यक्कुर्याम् ।

'**मानसाः** कथाप्रसाराः इत्यारभ्य जीवयसि' इत्यन्तगद्येन रघुवीरसिंहस्य **विप्रलम्भो** वर्णितः ।

**पृ० २२७ ॥ चिन्तेति**—चिन्तायाः सन्तानः प्रसारः तस्य वितानमुल्लोचो व्याप्तिरिति विवक्षितोऽर्थः तत्परवशः । **निःशब्दम्** = तूष्णीम् **रुदतीम्** = विलपन्तीम् । **कितव !** धूर्त्त ! । **शाखिशाखायाम्** = वृक्षस्कन्धे । **रोषारुणाभ्याम्** = क्रोधेन रक्ताभ्याम् । **अनिमेषं** = निर्निमेषं प्रेम्णां गाढत्वात् । **व्याहृतवती** = अवोचत् । **अवहेलिताऽसि** = न्यक्कृतासि ।

**पृ० २२८ ॥** '**एवं वि**लक्षणा संवृत्ता दैवघटना'—इति तामेव घटनां दर्शयति—'**ज्वाला**मुखपर्वता इव जाज्वल्यन्ते इत्यन्तेन ग्रन्थेन । **धर्षयितुम्** = भर्त्सयितुम् भीषयितुं वा । **न्यवीविदत्** = निवेदनमकार्षीत् । **पुष्पाणि** अवचिन्वतीम् = पुष्पावचयं कुर्वतीमित्यर्थः । **मदसि**विलीढम् = मदीयखड्गहतम् । **वरिष्यसि** = विवाहयिष्यासि च्योतद्रक्ताभ्याम् = इव क्रोधरक्ताभ्यामित्यर्थः । **सान्त्वयित्वा** = धीरयित्वा । **प्रास्थित** = प्राचलत् । शान्तः सौवर्ण्याः **आधिः** = मानसी व्यथा । क्रूरसिंहस्य ततोपसरणादितिभावः । **अवसीदति** = दुःखमनुभवति । **रामसिंहेति**—रामसिंहस्य आलुलोकयिषया = दिदृक्षया लोलुपे = लुब्धे लोले = चपले लोचने नेत्रे ययोः । **विषीदतः** = क्लिश्यतः ।

**पृ० २२९ ॥** '**परतो** रघुवीराय लज्जया विरहय्य—कोशला दिवसान् गणयति' इति सम्बन्धः । कोशलामेव उत्प्रेक्षया वर्णयति—'**वितीर्णेव** उत्कण्ठया' इत्यादिना । उत्कण्ठा = रुहरुहिका हृदयस्येच्छाविशेषः तया वितीर्णा = दत्तेव । **इन्द्रियगणेन** = चक्षुरादिना । **कुसुमेषुघातैः** = पुष्पमयबाणवेधैरित्यर्थः । **मदनेन**—कामेन । **दुर्मदेति**—दुर्मदः असह्यमदो यो मदनः तस्य मदैः **मामद्यमाना** = अत्यन्तं मादिता सती अपि अधिकं **सम्मदय्य** = मादयित्वा, **अनुरागेण** = प्रीत्या दत्तेव । **कोशला**विप्रलम्भं वर्णयित्वा **रसनार्या** विप्रलम्भमपि ग्रन्थयति—'**ततो** रसनारी च' इत्यादिना । '**रसनारी** खिद्यते' इति दूरमभिसम्बन्धः । **मन्मथोन्मथितेन** = मदनविलोडितेन । **एतेन** = शिववीरेण महाराष्ट्रमण्डलाखण्डलेनेत्यर्थः । **विरहेयम्** = विहारक्रीडां कुर्य्याम् । **स्वमनोरथम्** = पाणिपीडनरूपम् निजासक्तिरूपं वेति ।

**विधित्सिष्यति** = विधातुमिच्छिष्यति । **चक्रवर्त्ति**नन्दिनी=सार्वभौमपुत्रीति व्यर्थः = मुधा मे मम **अभिमानः** = अहङ्कारः । **वाचालताम्**=बहुभाषित्वम् वावदूकतामित्यर्थः ।

**पृ० २३०** ॥ **स्तवः** = स्तुतिः । परिभवः निन्देत्यर्थः । **विलापः** = रोदनम् । **परिदेवनम्** = विलपनम् । **भषणम्** = बुक्कनं कुक्कुररव इत्यर्थः । **मारेण दुराचारेण** = दुष्टेन कामेन **इति** जल्पन्ती = उक्तप्रकारेण व्यक्तं वदन्ती । **केनचन** धवलिम्ना = वक्तुमशक्येन शिवविरहजनितेन श्वैत्येन । धवलस्य भावः "धवलिमा" । **आलिङ्ग्यमाना** = आश्लिष्यमाणेव । **रोमपञ्जरेण** = रोमाण्येव पञ्जरं तेन **निगृह्यमाणा** = कारीक्रियमाणा जातरोमाञ्चेत्यशयः । **स्वेदेति**—स्वेदबिन्दूनां घर्मकणानां सन्दोहैः समूहैः **अभिषिच्यमाना** = कृताभिषेकेव । **प्रेमनिगडबद्धा** = प्रीतिशृङ्खलानिगडिता । **अनुरागेति**—अनुरागः शिवविषयकः प्रेमा एव कारागारा वन्दीगृहं तत्र संयन्त्रिता = शृङ्खलीकृता **उच्छ्वसन्ती** = ऊर्ध्वं श्वासं कुर्वती । **खिद्यते** = दैन्यं भजते ।

अपरां दैवघटनामाह—'**इतः क्रूर**' इति । **क्रूरः** = क्रूरसिंहः । **रघौ**= रघुसिंहे । **क्रूरं** कर्म चिकीर्षुः = जिघांसुरित्यर्थः । **कोशला**कामनया=कोशलायामासक्तया **क्लिश्यति** = खिद्यते । **क्रूरक्रूरताम्** = क्रूरसिंहस्य दुष्टताम् । **आकलय्य** = निश्चित्य । **ग्लायति**=क्षीणहर्षा भवतीति । **ज्वालामुखपर्वताः** इवेति उपमालङ्कारः । **जाज्वल्यन्ते** = अतिशयेन ज्वलन्ते ।

**पृ० २३१** ॥ 'मायाभवने मायाजिह्ववृत्तं' ग्रथ्नाति—**इतश्चेति** । **नृशंसम्** = घातुकक्षत्रं स्वमरणरूपम्, अन्यत् बहु स्पष्टम् । 'स्वागतम्' इति गृहागतशत्रुणा सहापि वर्त्तने कीदृशी प्रशंसनीया सभ्यता हिन्दूनामासीदिति शिववृत्तेन स्पष्टं भवति म्लेच्छानाञ्च तद्विपरीतैवेति अग्रे शिवं रोधयित्वा अवरङ्गजीवस्य वृत्तेन ज्ञातं भाविष्यति ।

**दासेराः** = भृत्याः । **कुमारः** = मायाजिह्मः । **ह्रीपरवशः** = लज्जितः । **कथमपीति** क्लेशाधिक्यं लज्जाधिक्यञ्च व्यनक्ति । **स्वागतेति**— स्वागतवाणी = सत्कारवागेव वाणाः सायकाः तैः । **मर्मसु** = जीवनतन्तुषु । **अलापिष्टाम्** = वार्त्तामकार्ष्टाम् । पारस्परिकाः = परस्परस्मिन् भवाः **सन्धि**-विरोधरूपाः = सन्धिविग्रहरूपाः ।



**यौवनेति**—यौवनस्य तारुण्यस्य उद्भेदः स्फुटनं तेन कुमारमिसुन्दरतरेव

अङ्गानि = अवयवाः ।

**साक्षात्काराय** = परिचयाय ।

**पृ० २३२** ॥ रामणीयकानि = सौन्दर्याणि । रमणीयस्य भावः रामणीयकम् **योपधाद्गुरूपोत्तमाद्वुञ्** ( ५ । १ । १३२ ) इति भावे वुञ् । **निविवर्त्तिषते** = निवर्त्तितुमिच्छति । **आस्माकीनाः**=अस्मदीयाः । सादिनः अश्ववाराः सैनिकाः । **दयिष्यते**=दयांकरिष्यते । **वशंवदानाम्**=वशमागतानाम् **व्याहरमाणानांम्** = ब्रुवताम् । **सदाचारेति** = सदाचारसौष्ठवाभ्यामाधिक-मत्यन्तं मधुरं प्रियं **वचनामृतम्** = वाक्सुधाम् । **पीत्वा** = सादरमाकर्ण्य । **दौरात्म्ये** = दुरात्मनो भावो दौरात्म्यम् तस्मिन् दुष्टे व्यापार इत्यर्थः । **घृणाम्** = अवहेलनाम्, **आवहन्** = कुर्वन् । **प्रस्थिते** = प्रचलिते सति " श्यामसिंहः समुपतस्थे " इति सम्बन्धः । **महाराष्ट्रेति** = महाराष्ट्रराष्ट्रमेव त्रिविष्टिपं स्वर्गः तस्य नाथे सुरेन्द्रे महाराष्ट्रदेशाधिपतावित्यर्थः ।

**पृ० २३३** ॥ नर्त्तित **काम्बोजैः**=चालितकम्बोजदेशाश्वैः अश्वारोहैः **अनुसृतः**=अनुगतः । कीदृशः श्यामसिंहः—"श्यामेन=श्यामवर्णेन एकेनं **वनायुजेन**= वनायुदेशे जातेन प्रशस्ततरेण घोटकेन सहित इति साऽर्थोऽन्वयः । कीदृशन—वनायुजेन—**सुवर्ण**वल्गेन=सुवर्णस्य हिरण्यस्य वल्गा रश्मिर्यस्य तेन । **पुनः**-**राजत**खलीनेन = रौप्यकविकेन । **पुनः**—मौक्तिकानां मुक्ताफलानां राज्या श्रेण्या राजितं निगालं लण्ठप्रदेशो यस्य स तेन । **पुनः**—रत्नानां वज्रवैडूर्यादीनां प्रचयस्य = समूहस्य या रुचिरा हृद्या रोचिः शोभा तया छुरितो बालधिः पुच्छं यस्य सः तेन । **पुनः**—सुवर्णसूत्रैः—" सुनहरी कनारी " इति प्रसिद्धैः सुवर्ण-तन्तुभिः ग्रथितं प्रान्तं यस्याः सा चासौ पीतकौशेयस्य पीतकपट्टवस्त्रस्य उपवेश-निका = आसानिका " काठी " इति प्रसिद्धा तया आच्छन्नं मध्यं पृष्ठभागो यस्य तेन । **कशाङ्कित**कक्षेण = कशा ताडनी " चाबुक " इति प्रसिद्धा तया अङ्किता कक्षा यस्य सः तेन । एकेन नियन्त्रा धृतरश्मिना, तथा **मन्दमन्द**—मानीयमानेन **तेन** = श्यामसिंहेन । **आलप्य** = वार्त्तयित्वा । **प्राविक्षत्** = प्रविवेश । रम्भास्तम्भान् = कदलीस्तम्भान् । **कुट्टिमे** कुट्टिमे = प्रतिकुट्टिमम् । " कुट्टिमोऽस्त्री निबद्धा भूः " इत्यमरः । **अवलम्बितेति**—अवलम्बितानि दोलितानि माणिक्यदीपकानि मुक्ताप्रदीपा येषु एवंभूतान् **उल्लोचान्** = वितानानि **वीक्षमाणः** = पश्यन् । **ग्रैवेयकेति**—ग्रैवेयकैः ग्रीवाभूषणैः अलङ्कृताः सज्जिताः कन्धराः ग्रीवा येषां एवम्भूतान्—**सिन्धुरान्** = गजान् । **उच्चैश्रवसः** =

इन्द्राश्वस्य । **वान्धवान्**=सहोदरानिव । **सैन्धवान्** = अश्वान् । **धारितानि**= परिहितानि अभिनवानि नूतनानि वस्त्राणि यैः तान् **पौरान्** = नागरान् । **समुद्धूतेति**—समुद्धूताः = सम्यक् वायुना कम्पायमानाः ध्वजाः पताका येषु एवम्भूतान् गेहान् = गृहान् **उपलभमानः** = वीक्षमाणः ।

**सौरतान्** = सुरतभवान् **विद्रोहिणः** = शत्रून् । **पोतयोधिनः** = सामुद्रान् साङ्ग्रामिकान् । **समुदतारीत्** = सम्यगुत्तरमदात् ।

**पृ० २३४ ॥ ततो** निवृत्तः ( मायाजिह्मः भवनमद्राक्षीत् " इति सम्बन्धः । कीदृशं भवनम् **महाप्रघणम्** = महान् प्रघणः अलिन्दो यत्र तत् । पुनः—**शारदः** = शरदि भवो यो घनः = सान्द्रः जलपूर्णो घनाघनः मेघः तस्य विडम्बना = अनुकरणं यस्य तत् शारदनवनीरदसदृशमित्यर्थः । **निर्मीयमाणाः** रच्यमानाः । **कर्कम्** = शुभ्राश्वम् । **समलुलोकत्** = अद्राक्षीत् ।

"**तावत्** एकतः रघुवीरसिंहः समागतः" इति सम्बन्धः । **धौरितकेन** = अश्वगतिविशेषेण । **अश्वारोहशतकेन** = सादिनामेकेन शतेन **अनुगम्यमानः** = अनुस्रियमाणः । **पारसीकम्** = पारसदेशोद्भवमश्वम् । **अतिलोलकुन्तलः** = चपलतरकचः । **अरुणैः** = रक्तैः वासोभिः = वस्त्रैः । **अपरिचीयमानः**= परिचयमप्राप्तः । " शतमश्वारोहान् " = इत्यत्र शतामित्येकवचनं " विंशत्याद्याः सदैकत्वे " इति नियमेन ज्ञेयम् । **समस्तकनमनम्** = शिरो नमयित्वेत्यर्थः ।

**पृ० २३५ ॥** सेनानिवेशान् = शिविराणि । **पदातीति**—पदातीनां पत्तीनां निकरैः समूहैः विरचिताः कृताः व्यूहरचनाः । **विहायसि** = आकाशे । **प्रयुज्यमानाः** = चाल्यमानाः अभ्यासार्थमिति शेषः भुशुण्डिकाः । **ह्लादिनी-निर्ह्रादम्** = ह्लादिनी वज्रं तस्या निर्ह्रादं कडकडाशब्दं **ह्रेपयन्त्यः**—लज्जापयन्त्यः ततोऽप्यधिकं धडधडायमानाः । इत्यर्थः **शतघ्नीः** = तोफान् । **चन्द्रेति** = चन्द्रहासस्य खड्गस्य चालनचातुरीम् = मारणविद्याम् । **प्रासेति**—प्रासानां कुन्तानामसनस्य क्षेपणस्य साहसं = बलकर्म । **पट्टिशप्रयोगपाटवम्** = **प्रमोदेति**—प्रमोदो हर्षः तस्य पूरेण प्रवाहेन प्रफुल्लितान्=हृष्टान् । **विविधेति**—

' **श्यामसिंहस्तु**—महाराष्ट्रं द्रष्टुं राजदुर्गं प्रचलितः ' इति सम्बन्धः । **तम्**=मायाजिह्मम् । **तत्र**=मायाप्रसादे । **साकारे**=मूर्तिमति प्रताप इवे-त्युत्प्रेक्षा **महति**=विशाले स्वर्णसिंहासने । **समारूढम्**=स्थितम् । मूर्त्तिमता यशसेवेति अत्रापि उत्प्रेक्षा । **सुशोभितम्**=राजमानम् । **प्रजाभिः**=प्रकृति वर्गैः । **आद्रियमाणम्**=नयनोत्सवमापद्यमानम् । स्पष्टमन्यत् ।



इति ( नूतन ) शिवराजविजयपताकायामष्टमो निश्वासः ।

* ॐ *

# नवमो निश्वासः ।

चिन्तितं दूरतो याति यन्न चिन्तितमेति तत् ।
गतिर्दैवी विचित्रेयं नरो यच्चिन्तनाऽक्षमः ॥ १ ॥
अमन्दानन्दसन्दोह–दोहदः पुरुषोऽस्ति यः ।
स कथं दुःखिताज्वालामाला–हालाहलं पिबेत् ॥ २ ॥

गतेषु निश्वासेषु उत्तरोत्तरं शिवसाम्राज्यमहिम्नो वृद्धिरेव गुम्फिता, सम्प्रति "दैवी घटना विचित्रा" इति समर्थयितुमिव सहसैव तस्या वृद्धेः प्रतिरोधं निरुपयितुकामः अस्मिन्नवमे निश्वासे महाराज—"जयसिंह" प्राज्यबलसन्निपातेन अवरङ्गजीवाधीनतामिव शिवस्य प्रदर्शयन् तद्वृत्तोपक्षेपकरीत्या प्रतीकद्वयमादत्ते—**दैवी** इति, **येनामन्दमरन्दे** इति च । "येनामन्द"—इति भ्रमरान्योक्तिः पण्डितराजानाम् । येन ( मधुकरेण ) अमन्दमरन्दे = प्रचुरमकरन्दे दलदरविन्दे = विकसितकमले दिनानि = अहानि अनायिषत = अगमयिषत तेन मधुकरेण = भ्रमरेण कुटजे=गिरिमल्लिकायाम् ईहा=इच्छापि कथम् = केन प्रकारेण तेने = चक्रे इत्यर्थः । "हा" इति कष्टम् । धीरोदात्तेन विपन्नेन नायकेन महत्यामापद्यपि नीचपरिचरणकरणं नैव कर्त्तव्यं स्यादिति भावः । अत्र करुणो रसः ।

**पृ० २३६ ॥ अकाले**=असमये । **पुंस्कोकिलाः**=पिकाः । **काकली**कलकलैः=पञ्चमस्वरैः । **दिगन्तम्**=दिशामन्तम् । **बधिरयन्ति**=मूकयन्ति ।

**मिलितेति**—मिलितेन=सङ्गतेन मलयानिलेन=दक्षिणसमीरेण लोलाः चपलाः **लवङ्गलताः**= * देवकुसुमवल्ल्यः । **दोलन्ति**=कम्पन्ते । **माध्वीति**- मधुगन्धेन=मकरन्दगन्धेन अन्धाः मत्ता ये मधुव्रताः भ्रमराः तेषां व्रातेन समूहेन विधुताः विधूनिताः, सञ्चालिता इत्यर्थः **माकन्दमञ्जर्यः**=रसाल (आम्र) शिञ्जर्यः, **माञ्जुल्यम्**=मञ्जुलस्य भावो माञ्जुल्यं=सौन्दर्यम्—**वमन्ति**=उद्गिरन्ति, प्रकटयन्तीति लक्ष्यम्, सौन्दर्यातिशयो व्यंग्यः । **नितान्तेति**—नितान्तम् अत्यन्तं विरहे या प्रियावियोगेन क्लान्तः=म्लानिङ्गतः परमश्रान्तः=अत्यन्तं स्थगितः,

---



* 'लवङ्गं देवकुसुमं श्रीसञ्ज्ञम्' इति ( अमरः ) ।

शून्यस्वान्तः=हृदयलयहीनः सचासौ कान्तजनः युवजनः ❀ तस्य ज्वालाभिर्जटालः सटालः यो दावज्वलनः=वनाग्निः तेन जाज्वल्यमानानाम् अतिशयेन ज्वलताम् अङ्गाराणां कदम्बं समूहमिव **पाटलपटलम्**=पाटलाराजिः **उल्लसति**=प्रकाशते। **पुष्पपरागैः**=कुसुमरजोभिः **पीतः** = पीतवर्णः । **मकरन्देति**—मकरन्दः पुष्परसः तस्य बिन्दूनां कणानां सन्दोहैः = समूहैः **आर्द्रः** = स्विन्न इत्यर्थः । प्रफुल्लानां विकसितानां वल्लीनामालिङ्गनैः = संस्पर्शनैः **शीतः** = शिशिरीकृतः ।

**पृ० २३७ ॥ कुञ्जसंश्लेषैः** = लतातानद्वारैः **धीरः** = ( गतिप्रतिरोधात् ) मन्दः, **समीरः** = पवनः **वहतिस्म** = ससार ।

**दुःशकुनरूपत्वात्** = अकालपुष्पादीनामुद्गमो भाव्यऽभव्यं भावयतीति शकुनशास्त्रविदां परामर्शः । **आगामीति**—आगामिभयम् = जयसिंहादिसमुत्थमग्रे वक्ष्यमाणपराजयात्मकम् ।

**अवहुदूरम्** = नातिदूरम् । ' तत्र = ( पुष्पवाटिकायाम् ) च— ( महाराष्ट्रराजः ) अकस्मात् यवनकामिनीमद्राक्षीत् इति सम्बन्धः । किं कुर्वन्— **भ्रमद्भ्रमरैः** = भ्रमद्भिः षट्पदैः **चोचुम्ब्यमानाः** आस्वाद्यमानाः **मल्लिकाः** = मालतीः पश्यन् । तथा—**दोदुल्यमानैः** = उत्क्षिप्यमाणैः, **करपल्लवैः** = पाणिपत्रैरिव **पल्लवतल्लजैः** = प्रशस्तदलैः **पार्श्ववर्त्तिद्रुमान्**= समीपवर्त्तिनो वृक्षान् **स्पृशन्तीः** = आलिङ्गन्तीः **वासन्तीः** = माधवीलताः अवलोकयन् । **साम्रेडम्** आकर्णनेन = पुनः पुनः श्रवणेन । **विहितेति**— विहितः सम्पादितः तदनुकरणेन विरावाभ्यासः भाषणावृत्तिर्याभिः ताः **सारिकाः**= **विभावयन्** = पश्यन् । **परस्परग्रथितम्** = अन्योन्यसङ्गतम् **कुसुमभारनिविडम्** = पुष्पप्रचयसान्द्रम् । **मिलिन्दव्याप्तम्** = भ्रमरन्चितम् , लतानां व्रततीनां प्रतानस्य विस्तारस्य निचयं समूहम् उभयतो हस्ताभ्याम् **अपसार्य**= निवार्य **निविशमानाम्** = प्रविशन्तीम् । **अष्टादशवर्षदेशीयाम्** = अष्टादशवर्षेतः किञ्चिन्न्यूनवयस्काम् 'अतिक्रान्तशैशवां तारुण्यधृतपदाम्' इत्यर्थः **धारितहारितपरिधानाम्** = धारितानि परिहितानि हारितानि हृद्यानि

❀ ' कान्तजनस्य ज्वालाभिर्जटाल ' इति सम्बन्धस्तु निरर्थो भाति न हि कान्तजनस्य ज्वाला भवन्ति तस्माद् ' वह्निना सिञ्चति ' इतिवदत्र योग्यताभावः एवञ्च ' न्यूनपदत्वं ' दोषः । किन्तु—' तान्तश्वास ' इति पदं मध्ये निक्षेप्यम् । अथ—' कान्तजन एव ज्वालाः ' इति रूपकमभिप्रैषि तदा पण्डिताः प्रमाणमिति दिक् ।

हरिद्वर्णानि वा परिधानानि वेशवस्त्राणि यया ताम् । **कराटकेति**—कराटकानामा-कर्षेण घर्षणेन श्लथतः अपसरतो वसनात् उत्तरीयात् दरीदृश्यमानम् = अतिशयेन चक्षुषोर्विषयीभूतम्, **ईषद्** उन्मिषितं = चूचुकाग्रभागे किञ्चिदुन्नतम्, **उरोजयुगलम्** = स्तनद्वन्द्वम्, **अञ्चलेन** = वसनकोणेन **आच्छादयितुम्** = प्रावरणयितुम् **यतमानाम्** = उद्यमं कुर्वतीम् । **प्रफुल्लकमलेति**—प्रफुल्लस्य विकसितस्य कमलस्य पद्मस्य भ्रमेण भ्रान्त्या इव **वदन**मभिपततः = मुखमभिलक्ष्य स्थितिमुपेयुषः **मधुकरान्** = भ्रमरान् **ससम्भ्रमम्** = सभयत्वरम् **सभ्रूभङ्गम्** = भ्रकुटिभङ्गिसहितं यथा तथा **ईक्षमाणाम्** = आलोकयन्तीम् । **कपोलपालीति**—कपोलपाल्यां = गण्डस्थले लग्नस्य = लिप्तस्य परागस्य = पुष्परजसः रागेण रक्तिम्ना **होलिकायाः** महोत्सवस्य उद्भवस्य नेपथ्येन = वेशेन इव **अवतरन्तीम्** = अवतीर्णाम् आयातामित्यर्थः । **मल्लीवल्लीति**—मल्लीवल्ल्याः मालतीलतायाः—संघर्षेण उन्माथितः मर्दितोयोऽधररागः तेन **अधिकमधिकम्** = अतिमात्रं तर्षम् = अधरपानेच्छामिव **जनयन्तीम्** = उत्पादयन्तीम् यूनामिति शेषः । तथा—**शुकेति**—शुकशावकानां कीरशिशूनां रावस्य शब्दस्य अनुकारि = सदृशं मन्जु = मनोहरं मञ्जीरयोः नूपुरयोः शिञ्जितं यस्याः सा ताम् । **गृहीतकुसुमस्तवकाम्** = धृतपुष्पगुलुञ्छाम् ।

**सा-त्विति**—सा = यवनी । '**दत्तकर**मुत्थाप्य शिरो नमयित्वा" वन्दीं कृत्वेत्यर्थः । **स्रंसमानेति**—स्रंसमानात् = स्थानभ्रष्टात् वसनात् वस्त्रात् दर्शितः ताटङ्कनिचयः = कर्णभूषणावली यया सा । **रशनेति**—रशनायाः काञ्च्याः निःस्वनेनेव = शब्देनेव ।

**पृ० २३८ ॥** किञ्चन = किञ्चित् **वचनीयम्** = कथ्यं सूचयन्तीव, **लोलल्ललन्तिका** = लोलन्ती चपलन्ती ललन्तिका = आनाभिलम्बिनी कण्ठिका यस्याः सा । **सूक्ष्मेति**—सूक्ष्मस्य वसनस्य वस्त्रस्य अन्तः देदीप्यमाना = लसन्ती वालानां शिरोरुहाणां पाश्या = समूहो यस्याः सा । **बद्धकरसम्पुटा** = प्राञ्जलिभूता **एकतः** = एकस्मिन् भागे **अवतस्थे** = स्थिताऽभूत् ।

**आलक्ष्य** = दृष्ट्वा । **भद्रे !** = भन्दनीये कल्याणिनि ! **किमीहसे** = किं चेष्टसे ? । **विवक्षसि** वक्तुमिच्छसि । "**वरणीयं** वयः" इति कथनेन तस्या अक्षतयोनित्वं व्यज्यते ।

**अवैतु** = जानातु । **चन्द्रशालेति** = चन्द्रशालायाः शिरोगृहस्य गवाक्षमालिकायाः = गोदरालिकायाः । **साहसः** = हृदयसत्त्वम् । **सहचरी** =

सखी। (इतोऽग्रे वहु निगदव्याख्यातं, पूर्वमपि व्याख्यातसदृशञ्च) **विकलयति** विह्वलयति। **खिन्ना**=व्याकुला।

**पृ० २३६ ॥ सहचरी**—"महाराज" इत्यादिगद्येन "यद्यपि केवलं रसनार्या एव महाराजविषयकोऽनुरागो व्यज्यते ननु महाराजस्यापि, तथापि अनुरागस्य आश्रयालम्बनत्वात् परकीयात्वम्, अनूढात्वञ्च (रसनार्याः) प्रकरणवशात् स्फुटमेव" इति पुरातनशिवराजलघुटिप्पणे उक्तम्। अत्र वहु वक्तव्यमपि मया ग्रन्थगौरवभयान्नोक्तम्।

**व्याधिः**=व्यथा। **धुनोति**=कम्पयति आर्त्तीकरोतीत्यर्थः। **प्रतिक्षणम्**=क्षणंक्षणं प्रतीति **अनिमिषेति**—निर्निमेषश्वासरोधपूर्वकमित्यर्थः—**रोमाञ्चति**=पुलकति। **स्विद्यति**=प्रस्वेदं धत्ते। **सीत्करोति**=दन्तोष्ठकम्पनां तनुते। **ताम्यति** क्लाम्यति। **विलयति**=मूर्च्छते। **वेपते**=कम्पते। **उद्भ्रमति**= उद्भ्रान्ता भवति शीतोपचारमपि उष्णं मनुते इत्यर्थः।

**पृ० २४० ॥ रोदिति**=अश्रून् विमुञ्चति **ग्लायति**=क्षीणहर्षा जायते। **क्लिश्यति**=विवाधयते। **मुह्यति**=विचित्ता भवति। **मूर्च्छति**= विसंज्ञां प्राप्नोति। **धीरम्**=मन्दं **समीरम्**=मन्दगतिं वायुमित्यर्थः। **शीतमयूखम्**=चन्द्रमसम्। **ताप्यते**=तापमुपैति। **कोकिलकलरवम्**= पिकानां कुहूकुहूशब्दम्। **तोद्यमाना**=व्यथ्यमानेव। **कराभ्याम्**= पाणिभ्याम् **कर्णकुहरम्**=श्रुतिरन्ध्रम्। **पिधाय**=आच्छाद्य। **अन्तर्निविशते**=कोष्ठे निलीयते। **हास्यमाना**=नर्मवचसां विषयीक्रियमाणा। **विविधेति**=विविधानि नाना प्रकाराणि यानि विलासरामणीयकानि मनोलगितिसुन्दरकाणि तेषु। **पाटलीति**—पाटलाराजिकोरकमालामित्यर्थः।

**ज्वलनेति**=ज्वलनो वह्निः तस्य ज्वालानाम् अर्चिषां जालम् आनायः तस्य आवलिम्=पुञ्जं **वेवेत्ति**=अत्यन्तं जानाति।

**परिवर्त्तनैः**=विवलनैः। **दीर्घनिश्वासैः**=लम्बोच्छ्वासैः। **सजृम्भेति**—जृम्भया गात्रविनामेन सह अङ्गुलीनां स्फोटनैः चुटकीकरणैः। **क्षपाम्**=निशाम्। **क्षपयति**=गमयति।

**मदनव्याधिः**=कामज्वरः। **सा**=रसनारी। साञ्जनेति—अञ्जनेन कज्जलेन सह वर्त्तते इति साञ्जनं यद् वारि अर्थात् नेत्रजलम् तस्य धाराणां सम्पातस्य अनवरतपतनस्य सम्मर्दो व्यतिकरः तेन मलिनौ कलुषितौ **पाण्डुरौ**= पीतिमानं प्राप्तौ **कपोलौ**=गण्डस्थले 'वहति' इति क्रियया सह सर्वेषां द्वितीयान्तपदानां सम्बन्धः।

**तापेति**—तापो विरहजनितो ज्वरः तपनो वह्निः तेन तप्तानां निश्वासानाम् आहतिभिः आताडनैः शुष्कम् = नीरसं म्लानमित्यर्थः एवंभूतमधरं वहति। **कर्पूरेति**—कर्पूरपूरस्य घनसारपुञ्जस्य यत् चूर्णं चोदः तस्य मञ्जिमेव मञ्जिमा शोभा यस्य तेन, **केनचित्** = अनिर्वाच्येन **धवलिम्ना** = श्वेतीभावेन, **कृशिम्ना** = कार्श्येन च **समालिङ्गितानि** = व्याप्तानि ।

**विमनायमाना** = दुर्मनायमाना । **पिपठिषन्ती** = पठितुमिच्छन्ती। **आविलयति** = आर्द्रयति । **विरहमयानि** = विरहप्रचुराणि **छन्दांसि** = वैंतगज़लप्रभृतीनि । **आम्रेडते** = पुनः पुनः पठति । वाष्पबिन्दुव्रजव्याजेन = अस्रकणसमूहकपटेन '**धैर्यं** वमतीवेति' उत्प्रेक्षा । **आलपति** = वार्त्तयति। **उपालभते** = उपालम्भं ददाति । **प्रार्थयते** = याचते । **स्तवीति** = गुणान् गायति । **वन्दते** = नमति च' इत्यनेन उन्मादावस्था सूचिता ।

**फलकम्** = भवतो महाराजस्य चित्रमेव । **अथ** इत्यारभ्य 'क्षन्तव्यो महाराष्ट्रराजैः' इत्यन्तं व्याख्यातप्रायमेव ।

**धैर्यघस्मरेण** = धैर्यभक्षकेन **स्मरेण** = कामेन । **मारेति**—मारस्य कामस्य यो विकारः कम्पादिः तस्य व्यापनस्य भारः = समुदाय एव तेन जर्जरितम् जीर्णम् अन्यथाजातम् **आकारम्** = कुसुमस्तवकानां सुमनोगुलुच्छानामवचयैः **कलकूजितेन** मधुररवेण पूजितं सत्कृतं हृद्यमित्यर्थः यत् पतत्रिणां पक्षिणां कुलं तेन कलितानां प्राप्तानां शाखानाम् अनुसन्धानैः दर्शनैरित्यर्थः । **तत्क्षणेति**—तस्मिन् क्षणे अवसरे त्रोटितानां कदलीदलानां रम्भापत्राणां वीजनैः (आत्मानं प्रति) व्यजनव्यापारणैः । **स्वेदापनोदनैः** = स्वेदस्य = कामविकारजस्य घर्मस्य अपनोदनैः दूरीकरणैः । **निगूढवान्** = निन्हुते स्म । 'तां सहचरीं तु—एषोऽहमायामि इत्यभिधाय विसृष्टवान्' इत्यन्वयः । स्पष्टमन्यत् ।

**पृ० २४२** ॥ **शुश्रूषे** = श्रोतुमिच्छामि । **ज्ञाश्रुस्मृदृशां सनः** (१ । ३ । ५७ ।) इत्यात्मनेपदम् । **सा** = रसनारी **अतरलेति**—न तरला तारका कनीनिका यस्य तेन, क्षुण्णानि अनिमीलितानि पक्ष्माणि यस्य तेन **ईक्षणेन** = दृशा । **ऐक्षिष्ट** = अलोकिष्ट । '**ईक्षमाणैव** च—भयेनाकम्पत' इत्यन्वयः । **स्वेदेति**—स्वेदसलिलस्य = घर्मजलस्य पूरैः **स्नपितेव** = स्नावितेवेत्यर्थः । **महाराष्ट्रेति**—महाराष्ट्रदेशाधीश्वरायेत्यर्थः । **वाष्पेति**—वाष्पबिन्द्रवः = अस्रकणा एव मौक्तिकानि मुक्ताः तेषामावलिं मालामिव **उपहरन्ती** = उपढौकयन्ती । **श्वासेति**—श्वासप्रश्वासा एव झञ्झावातः महावातः तेन क्षु-

प्रनष्टं धैर्यं यस्याः सा एवम्भूता—**शोकाङ्कुरैः** = शोकस्योद्गमनैः इव **रोम-निकरैः** = लोमराजिभिः **निगृहीता**=व्याप्ता **भयेन** = त्रासेनेव **अकम्पत**= वेपथुं दध्रे ।

अत्र—गद्ये **उत्प्रेक्षालङ्कारः वेपमानैः** = कम्पमानैः **अङ्गैः**=हस्तपादादिभिः निवार्यमाणेवेति सम्बन्धः । **मन्मथेन** = कामेन उन्मथितेन मर्दितेन मनसेव—**मूकीक्रियमाणा** = अवाकीक्रियमाणा ।

**उद्वेल्लितैः** = उच्छलितैः **वाष्पैः** = अश्रुभिः कण्ठे **रुध्यमाना** = प्रतिहस्तीक्रियमाणेव । **अवहेलितया** = तिरस्कृतया **ह्रिया** = लज्जयेव **अवहेल्यमाना** = तिरस्क्रियमाणा । **अनासादित**चरेण = पूर्वमप्राप्तेन **साहसेन** = अविचारितकर्मणा हास्यमानेव =

**मदनमदेन** = काममदेन इव **माद्यमाना** = विह्वलीक्रियमाणा । **वाचां प्रचारम्** = वचनपरम्पराम् " न उररीचकार " इति सम्बन्धः। **उररीचकार** = स्वीचकार तूष्णीमेव तस्थौ इत्यर्थः । " **अथ**—महाराजेन सान्त्व्यमाना—पुनर्मौनमेव अकलयत् " इति सम्बन्धः । **अञ्चलान्तेन** = वसनकोणेन । **स्वेदैः** सह = घर्मैः साकम् **लज्जां** = व्रीडामपसार्येव = धूनयित्वेव । कम्पयित्वेव **क्रियास**मभिहारेण = पुनः पुनः **सान्त्व्यमाना** = धैर्यमापाद्यमाना ।

**कदलीदलेति**—रम्भापत्रेन यद् वीजनम्—वातकरणं तस्य व्याजेन **अवशिष्टम्** = रहितसहितम् **धैर्यम्** = धीरताम् **उद्धूय** = प्रक्षिप्य । **वाष्पेति** = वाष्पानामपहरणं प्रोञ्छनं तस्य कैतवेन व्याजेन **विवेकम्** = विचारमपि **सम्मर्द्य** = विनाश्य । **कर्णेति**—कर्णयोः अर्पितकर्णिकारेण = धृतकर्णिपुष्पेण निपात्यमानाः उड्डाय्यमाना ये मधुकराः भ्रमराः तेषां निकरस्य समूहस्य विधूननच्छलेन = उत्सारणव्याजेन **निर्मक्षिक**मिव = शून्यमिव **विदधती** = कुर्वती ।

**पृ० २४३ ॥ अवलोकन**च्छद्मना = इतस्ततो दृष्टिप्रसारणव्याजेन । **वास्तुदेवी**—गृहाधिष्ठात्री देवी तस्याः श्रवणं " सा किं न शृणुयात् " इति **आशङ्कमानेव** = संशयानेव । **विरहेति**—विरहज्वालया वियोगानलार्चिषा अवलीढं कवलितं वसनं यस्याः सा तया, **प्रकाशं** = प्रकटीभावम् **अनाजिगमिषन्त्या** = प्राप्तुमनिच्छन्त्या भगवत्या **सरस्वत्या** = वाण्या वागधिष्ठात्र्या देव्या च **वारितेव** = निषिद्धेव **पुनर्मौनम्** = तूष्णीम्भावमेव **आकलयत्** = भेजे । **महाराष्ट्रीति**—महाराष्ट्रकुम्भिनी = महाराष्ट्र-

भूमिः तस्याः स्तम्भेन आधारभूतेन महाराष्ट्रदेशाधीश्वरेणेत्यर्थः । "गौरिलाकुम्भिनी क्षमा" इति ( अमरः ) । **षट्कर्णा** = वक्तृश्रोत्रातिरिक्ततृतीयकर्णगता, अर्थात् तव रहस्यं न भेत्स्यति । **वक्षि** = वदसि । **लज्जां** = व्रीडां **मानयसि** = धत्से नतु **जीवनम्** = प्राणान् आद्रियसे इत्यर्थः । **परतश्च** = महाराजोक्त्यनन्तरम् । "परतश्च-वक्तुमारभत रसनारी" इति सम्बन्धः । "**निश्वा**सानुपातिभिः-अपायाम्" इत्यन्तं गद्यमुत्प्रेक्षाबहुलम्

**पृ० २४४** ॥ **परमापराधिनी**=बहुपराधकारिणी, महतामाज्ञाभङ्गत्वादित्यभिप्रायः । **आधीनां**=मानसीनां व्यथानाम् । **वनितेति**—वनिताजनस्य अबलाजनस्य वञ्चनं प्रतारणम् । **व्यर्थेति**—व्यर्था निष्प्रयोजना या मर्यादा= धार्मिकसीमा तस्या विकत्थनम् श्लाघनम् । **भङ्गीम्**=वचनप्रकारम् । **लोलताम्**= चपलताम् । **निर्भीकताम्**=भीतिराहित्यम् । **अभीकताम्**=कामुकताम् ।

**चटुलताम्**=चपलताम् । **चतुरताम्**=नैपुण्यम् । **कविताम्**=कवित्वम् **विशकलय्य**=विस्तारं कृत्वा । **अनाचारः** = दुर्व्यवहारः । **प्रादर्शि** = प्रकटितः । **आच्छन्दयसि** = मोहयसि । **मायाः** = मोहनप्रकाराः । **घटनाः**= योजनाः । **वर्वर्त्सि** = अत्यन्तं वर्त्तसे । **भुङ्क्ते** = अस्ति । **अंशुकम्** = अञ्चलम् । **स्पृशसि** = आकर्पयसे । **मर्यादायाः** ध्वजम् = धर्मस्य पताकाम् । **कवाटयुगलम्** = कपाटद्वन्द्वम् । **श्रृङ्खलाम्** = कुण्डालिकाम् । **सहचरीः**= सखीः दासी र्वा ।

**पृ० २४५** ॥ अनन्यश्राव्यम् = इतरजनैः श्रोतुमनर्हम् । **निभृतम्** = गुप्तम् । **चित्रगतः** = आलेख्यगतः । **स्मयसे** = हससि । एतां **मायाम्** = मन्मोहकरीम् । "**बिभेमि,** खिद्ये, उन्माद्यामि = " **ईदृक्षाणि** = एतादृशि । विलक्षणानि = लोकोत्तराणि **इन्द्रजालानि** = अनिर्वचनीयानि ।

**उद्बन्धुम्** = पाशीकर्त्तुम् । **यतमानाम्** = सोद्यताम् । **निरीक्षिष्यसे** = द्रक्ष्यसि । **परीक्षिष्यसे** = विवेकं करिष्यसि । समीक्षिष्यसे = समालोचयिष्यसे । **अणुः** = लेशरूपः । **अपराध्यति** = दुष्यति अपराधहेतुर्भवति । **दिल्लीवल्लभेति**—' अहञ्चक्रवर्त्तिपुत्र्यस्मि ' इत्यभिमानं त्यक्त्वेति **अनुरक्तवती** = अनुरागं कृतवती । **आनृण्यम्** = ऋणराहित्यम् **विभावनीयम्** = विवेचनीयम् । **व्यभिचारिणी** = कुलटा, **वचनीया** = निन्दिता । **वदावदानाम्** = वक्तृणाम् । **तातेन** = पित्रा **अनुमता** = अनुज्ञाता ।

**अप्रत्ताम्** = अदीयमानाम् । **आत्मसात्कुर्वन्** = स्वीकुर्वाणः । **लम्पटः** = धूर्त इति **निन्द्यते** = गर्ह्यते 'लोके' इति शेषः । **तातभवनम्** = पितृगृहम् । **प्रापयामि** = गमयामि ।

**पृ० २४६ ॥ मदपेक्षया** = मत्तोऽपीत्यर्थः । **अतिसुन्दरम्** = कमनीयतरम् । **अतिसम्पदम्** = महैश्वर्यवन्तम् । **तुरुष्कारव्यादि** = इति देशनामानि । '**आत्मनं अकृतार्थम्** = असिद्धप्रयोजनं मा मंस्था' इति अन्वयः । **वासन्त**वासन्तीव सहकारम्'—इति **उपलङ्कारः** । वसन्तकालभवा वासन्ती माधवीलता, सहकारः = आम्रः तम् । **कलयिष्यसि** = प्राप्स्यसीत्यर्थः ।

**एवमिति—आलपद्भ्याम्** = वार्त्ता कुर्वद्भ्याम् । **अन्वभावि**= साक्षादकारि धूमगन्ध इव । **शुण्डीति**—शुण्डी = गजः तस्य शुण्डादण्ड इव कर इव **चण्डः** = भयंकरः धूमः इति—उपमा । तावदिति—अग्निरित्यादि साध्वसव्यञ्जकाः शब्दाः । **क्षुब्धानाम्** = सञ्चलितानां त्रस्तानामिति यावत् । **दौर्गिकाणाम्** = दुर्गे नियुक्तानाम् । **उद्विग्ना** = भीता रसनारी । **बाहुलताभ्याम्** = भुजवल्लीभ्याम् **गाढम्** = सान्द्रं यथा स्यात् तथेति क्रियाविशेषणम् । * **अवेष्टयत्** = आश्लिषत् । **भीतभीताम्** = अतित्रस्ताम् । **उदञ्चिताभ्याम्** = उन्नताभ्याम् उन्नमितचूचुकाभ्यामित्यर्थः **कुचाभ्याम्** = वक्षोजाभ्याम् ।

**वक्षस्थलम्** = ( महाराजस्यैव ) उरःस्थलम् । **पीडयन्तीम्** = व्यथयन्तीम् वस्तुतस्तु आनन्दयन्तीम् । **बाहुपाशेति**—बाहुपाशेन भुजजालेन वेष्टिता ग्रीवा कन्धरा यया ताम् , **सवेपथुम्** = सकम्पाम् **गाढमश्लिष्टाम्** = सान्द्रालिङ्गनवतीम् । '**माभैषीः**' = भयं माकार्षीः **इत्यभिधाय** = उक्त्वा । **कराभ्याम्** = पाणिभ्याम् । **क्रोडे** = उरसि **उत्थाप्य** = उत्तोल्य ।

**पृ० २४७ ॥ कान्दिशीकाः** = भयद्रुताः । भयेन भीत्या भ्रान्तानि क्षुब्धानि नयनानि यासां ताः । **तत्रैवेति**—यत्र महाराजो रसनारीं क्रोडीकृत्य गतस्तत्रैवेत्यर्थः ।

उद्धूतम् = उद्वृद्धम् । **अकृशम** = अक्षीणम् । **कृशानुम्** = वह्निम् । **जलयन्त्रैः** = नीरनिष्कासनसारणायन्त्रैः । **शमयाम्बभूवुः** = शान्तमकार्षुः । **गृहीतकण्ठाम्** = कण्ठसंलग्नाम् । **निर्दिष्टगृहे** = आज्ञप्ते सद्मनि ।

---



* अत्र—प्राक्तन लघुटिप्पणी द्रष्टव्या ।

**सोपानैः** = अवरोहणीभिः । '**महाराजः**—इत्यभिदधत् हनुमन्मन्दिरमयासीत्' इति सम्बन्धः ।

**आकस्मिकः** = अकाण्डताभवः । **अज्ञातेति**—न ज्ञातं कारणं यस्य सः । **ज्वालाजालः** = अर्चिषां माला । **जातवेदसः** = हुतभुजः । **आत्मीयान्** = स्वान् अनुचरान् । **सहचरान्** = सार्थं चलितान् **प्रतिनिवर्त्य** प्रतिलोमं प्रेषयित्वा । **साक्षात्काराय** = दर्शनाय । **चरान्** = स्पशान् ।

**पृ० २४८ ॥ महाराष्ट्रेति**—महाराष्ट्रस्य विश्वम्भरा = पृथिवी तस्या ईश्वरः तत्सम्बुद्धौ । **वीराणां** महारण्येन = महता जङ्गलेनेव । **सिन्धुराणाम्** = गजानाम् **घटया** = महासंघेनेव, **वाजिनाम्** = अश्वानाम् **वीचिभिः** = लहरीभिरिव **परिवृतः** = परितो व्याप्तः **अम्बरेश्वरः** = आमेरनाम्ना प्रसिद्धाया राजधान्या ईश्वरः = राजा । अयेमव जयपुरनगरनिर्माणकर्त्ता । इत्याह—' जयपुरसंस्थानकर्त्ता ' इति । **दिल्लीपक्षम्** = अवरङ्गजीवपक्षमित्यर्थः **पुष्णन्** = समर्थयन् तत्पक्षपाती भूत्वेत्यर्थः । **अविदूरतः** एव = नातिदूरे । **उपकारिकाः** = पटभवनानि शिविराणि इत्यत्र तात्पर्यम् । **समरम्** = युद्धम् । **आरिप्सते** = आरब्धुमिच्छति ।

**रणसज्जया** = युद्धोद्योगार्थम् । **आदिशत्** = आज्ञापयामास । **मात्रायाम्** = घटिकायाम् । **व्यतीतमात्रायाम्** = गतप्रायायाम् । **शतघ्नीनिर्ह्रादः** = तोपशब्दः । **युद्धसञ्ज्ञासूचकाः** = संग्रामकृत्यावबोधकाः **सेनासन्निवेशेभ्यः** = शिबिरेभ्यः । **सघर्घराघोषाः** = घर्घरघोषसहिताः । **घोरघोराः** = अत्यन्तं भयङ्कराः । **घनाघनेति**—घनाघनो मेघः तस्य निर्घोषो गर्जनं स्तनयित्नुशब्द इत्यर्थः तत्सदृशः **तोभनिस्वनाः** = तोभानां तोफानां निस्वनाः शब्दाः । **कथमुद्विग्ना** = दुःखिता । **तदितरः** = रसनारीभिन्नः न कोऽपि वेत्तीत्यर्थः । **दण्डासनेन** = साष्टाङ्गपातेन प्रणामेन । 'एषोऽग्निदाहः न शुभः' इति सम्बन्धः ।

**पृ० २४९ ॥ हवनैः** = होमैः । **विप्रपूजनैः** = ब्राह्मणार्चनैः । **दानैः** = त्यागैः । **स्थगिता** = शान्ति गता । **नवास**ादितराज्यम् = नवमायत्तीकृत्यं राज्यं **प्रवध्नन्ति** = प्रवन्धयुतं कुर्वन्ति । **सम्भाव्यते** = अनुमीयते । **तादृशम्** = पराजयरूपम् । **अत्रभवता** = पूज्येन ।

**पृ० २५० ऋते** प्रभुवयात् = ऋते योगे पञ्चमी । **ज्योतिषगणितैः** [illegible]

ज्योतिर्विद्याप्रकारेण कृतैः गणितैः ग्रहनक्षत्रादीनां गतिगणनाविशेषैः । **कलितमुनिवेशः** = धृतमुनिव्रतः । **प्रनष्टः** = गोपितात्मा ।

**जयसिंहेति**—जयसिंहस्य सेनैव समुद्रः सागरः । **समस्तरूप**-कमलङ्कारः । **परिमार्गयिष्यामि** = अन्वेषयिष्यामि । **दैवात्** = अदृष्टहेतोः ।

पृ०२५१ ॥ **प्राप्तकालम्** = समयानुसारम् । **यते** = उद्योगं कुर्वे । एतेनाऽस्य धीरोदात्तता व्यज्यते । **स्तन्यजीवम्** = "तन्नाजी" इति नाम्ना प्रसिद्धम् **महाराजानुमतः** = महाराजानुज्ञां प्राप्तः । तत्साहचर्येण = स्तन्यजीवमाल्यश्रीकाभ्यां सहैवेत्यर्थः । **महनीय**महोभिः = प्रशस्तैः तेजोभिः । **महितम्** = तेजस्विनम् । **आजिज्ञपत्** = आज्ञां दत्तवान् । **साशीराशि** = आशीर्राशिभिः सह यथा स्यात् तथा क्रियाविशेषणम् । **अमोदिष्ट** = प्रसन्नो बभूव । **ह्रीणः** = लज्जितः । **इतरान्** = अन्यान् तत्रस्थान् **भ्रूसञ्ज्ञया** = भ्रुकुट्या इङ्गितेन **निर्मक्षिकयितुम्** = शून्यकिर्तुम् ।

पृ० २५२ ॥ **व्यर्थः** = निष्फलः । **पाण्डित्याडम्बरः** = चातुर्य्यनाटनम् । **ज्योतिर्यन्त्रालयाः** = मानमन्दिराद्याः ।

**व्यरचिषत** = निरमायिषत रचिता इत्यर्थः । **वशयितुम्** = स्वायत्तीकर्त्तुम् । **नीतिमर्मज्ञाः** = राजनीतिचालनचातुरीचतुराः । **दुर्गरोधम्** = दुर्गाणां प्रतिबन्धम् । **विधित्सति** = विधातुमिच्छति । **विजिगीषते** = विजेतुमिच्छति ।

पृ० २५३ ॥ **अपहृतदुर्गेषु** = जितदुर्गेषु । **अधिकारः** = स्वशासनम् **करप्रदता** = करो राजदेयांशः तस्य दातृत्वम् । **ऊरीकार्या** = अङ्गीकार्या अर्थात् अवरङ्गजीवाधीनेन भाव्यम् । **उपाधिः** = कपटम् ।

**महाराष्ट्रधराधनी** = महाराष्ट्रपृथ्वीश्वरः । **विजिघृक्षायाम्** = विग्रहं (युद्धम्) कर्त्तुमिच्छायाम् । **असम्मतिम्** = सम्मत्यभावम् । **सन्धित्सायाम्** = सन्धिं कर्त्तुमिच्छायाम् । **आकलय्य** = निश्चित्य । **परेद्युः** = अपरस्मिन् दिवसे । **रजन्याम्** = रात्रौ । **प्रतीहारः** = द्वारपालः ।

पृ० २५४ ॥ **चित्रेषु** = आलेख्येषु. **कारुवरैः** = चतुरशिल्पिभिः । **तन्मूर्त्तीः** = तदाकृतीः = **सादरम्** = बहुमानपुरःसरम् । **आलिङ्ग्य** = क्रोडीकृत्य । **स्वोपविष्टविष्टरे** = स्वाधिष्ठितासने एव । अमुना **स्नेहेन** = अनया प्रीत्या । **सत्ताशित** = सभाजितः । **व्यवाहारिष्यम्** = व्यवहारमकारिष्यम् ।

**समधेद्यम्** = सन्देहमकरिष्यम् । **सेनेति**--सेनाव्यूहस्य प्रचण्डे भयङ्करे दुर्गान्तस्थे **शिबिरे** = सेनाचक्रे। **क्षत्रिय**वंशावतंसानाम् = राजन्यकुलभूषणानाम् **लज्जितवान्** = व्रीडाङ्गतः।

**पृ० २५५ ॥ रक्षादिविषये** = अनिष्टचिन्तनाऽभावविषये । **प्रतिज्ञातवानस्मि** = प्रतिज्ञां कृतवानस्मि । **तथा** विदध्याम् = तथैव कुर्याम् । **वज्रलिपिरिव** - अनिवार्या इत्यर्थः । **महाराष्ट्रेति**—महाराष्ट्राणां यत् महत् राष्ट्रं राज्यं तस्य पतिस्तस्मिन् "अस्मत्तो विश्वासघातस्य लेशोऽपि न शङ्कनीयः" इति सम्बन्धः । **उद्दाराम्** = उद्भटाम् ।

**पञ्चमः** कर्णोऽवधत्ते = शृणोति अर्थात् द्वावेवाऽवां तिष्ठावः ननु मध्ये कश्चित् तृतीयः तेन शङ्कास्पदं नास्त्येव । **राजपुत्रेति**--**प्रतापगानैः** = प्रतापगीतिभिः । **बाल्यम्** = शैशवम् । **व्यतियापितवान्** = गमितवानस्मि । **यैः** = क्षत्रकुलच्छत्रैरेव **भारतभूः** = भारताभिजन इत्यर्थः । **राजन्वती** = सौराज्यवती ।

**पृ० ५५६ ॥ आलम्बनम्** = आश्रयः । **विदीर्यते** = द्वैधीभवति । **तारुण्यम्** = यौवनं महद्बलमित्यभिप्रायः । प्रताप एव तपनः सूर्यः तस्य । **छुरिकालेखनीभिः** = कृपाणिकाविलेखनैः । **व्यत्येति** = अतिक्रामति **ग्रीष्मे** = ज्येष्ठाषाढमासि । **शोषितः** = नीरसीकृतः महानदो येन सः **भास्करः** = तपनः । **हिमे** = शीतर्त्तौ । **हिम**कणिकाभिः = हिमानीबिन्दुभिः वस्तुतस्तु नीहारकणिकाभिरिति विवक्षितोऽर्थः । **वार्द्धक्य**समयः = अस्तमनकाल इत्यर्थः । **पारवश्यम्** = पारतन्त्र्यम् । **कल्प**परिवर्त्तनम् = युगव्यतिक्रम इत्यर्थः।

**निष्कृपेति**—निष्कृपाः = निर्दया ये कृपाणप्रहाराः खड्गधाराः तैः । **यवनेति**—यवनानां म्लेच्छानां कूटकोटेः समुदायकोटेः कन्धरायाः ग्रीवायाः यत् कोष्णं = मन्दोष्णं रक्तं रुधिरं तस्य प्रवाहैः, तुन्दिलीकृताः = स्थूलोदरीकृता

**पृ० २५७ ॥** भगवती **चण्डिकाः** = महाकाली । **अश्राविषत** = न्यशामयिषत इतिहासाः ।

**यवनवंशा**वतंसध्वंसम् = अवरङ्गजीवविनाशम् । **तत्साहचर्यम्** = म्लेच्छसाहाय्यम् **अत्याक्षीत्** = विजहौ ।

**एतेन**—न त्वमेवासि सत्यप्रतिज्ञापालकः, अन्येऽपि सन्ति, त्वन्तु सत्याऽसत्यस्वरूपविवेकं सम्यङ् न वेत्सि काले सत्यमप्यसत्यायते असत्यञ्च सत्यायते इति गुढोऽभिसन्धिर्नीतिविदामिति महाराष्ट्राधीश्वरस्याभिप्रायः।

**"भारतविद्रोहिणाम्"** इति कथनं तत्पक्षपातित्वेन भवानपि भारतभूपुत्रः सन् स्वमात्र एव द्रुह्यसि इति भावः।

**वोवोद्धि** = अतिशयेन जानासि। **यदि स** इति—सः = यशस्विसिंहः। **अनाच्छादयन्** = अप्रावृण्वन्। **समयोत्स्यत**=युद्धमकरिष्यत्। **भारतस्य** स्वातन्त्र्यं स्वाराज्यमेव पोतः नौका तस्य कर्णधारधुरं नाविकक्रियाभारम्, **अवक्ष्यत्**= अधारयिष्यत्। **समराङ्गणे** = युद्धभूमौ प्राणान् **अत्यक्ष्यत्** = अहास्यत्। **मार्त्तण्डमण्डलम्** = सूर्यमण्डम्। **अभेत्स्यत्** = द्विधा अकरिष्यत्। **सकुसुमवृष्टि** = कुसुमानां वृष्ट्या वर्षणेन सह यथा तथा।

**पृ० २५८ ॥ दिवम्** = स्वर्लोकम् **असनाथयिष्यत्** = अप्राप्स्यत् **तत्** = तदा **तद्यशोगीतिगानैः** = तदीयकीर्त्तिगायनैः। राजपुत्रदेशः **समपूरयिष्यत** = पूर्णोऽभविष्यत्।

**निन्दन्ति** = गर्हयन्ति। **कुलीनाः** = सत्कुलोत्पन्नाः। **प्राणान्** **अगणयन्तः** = असून् अनपेक्षमाणाः। **कपटाचरणैः** = छलव्यवहारैः। **विघट्टयन्ति** = चोदयन्ति।

एवमाकर्ण्य जयसिंहोक्तिं महाराष्ट्रहृदये शौर्यच्छटा प्रास्रवदिवेति कविर्दर्शयति "किञ्चित् कुपित इव" इति। **युक्तिभिः** = नीतिव्यापारैः।

**"धन्यं युष्माकं सत्यम्"** इति विरुद्धलक्षणया अधन्यमित्यर्थः। प्रकारान्तरेण जयसिंहो धिक्कृत एव। **गौराङ्गेति**

**रक्तैः** स्नाति = रुधिरैराप्लुता भवति। **" दृश्यतां** धर्मशास्त्र **"** मिति †

**पृ० २५९ ॥ यवनेति**—यवनपदैः म्लेच्छपदैः दलितया आक्रान्तयेत्यर्थः। **दन्दल्यमानेन** = अत्यन्तं दलितेन। **बम्भज्यमानेन** = अत्यन्तं भग्नेन।

**चन्द्रचुम्बीति**—चन्द्रचुम्बीनि अत्युच्चानि कलशानामग्राणि येषु तेषु माधवमन्दिरेषु एतेन मन्दिराणामत्यौन्नत्यं व्यज्यते। **अतिशयोक्तिश्च**। **पार्श्वतः** = एकस्मिन् भागे। **कलहम्** = विरोधम्। **आरप्स्यन्ते** =

**आहवद्यूतम्** = युद्धक्रीडाम्। **पङ्किला** = सकर्दमा। **मन्दिरमर्दनम्** = मन्दिराणां विप्लवः। तीर्थानां मन्थनम् = विलोडनम्। **वेदच्छेदनम्** = वेदविनाशः, धेनूनां गवां ध्वंसनं कर्त्तनञ्च। **संवर्त्स्यते** = भविष्यति। **असाध्येन** = निरुपायेन दुर्दशा एव ज्वरः तेन **उल्लीढः** = कवलीकृतः।

**पृ० २६० ॥ युद्धक्षेत्रे** = सङ्ग्रामभूमौ। **धारातीर्थे** = धारा असिधारा

† एतद्विषये महाभारतादौ बहु लिखितम्।

एव तीर्थम् । **करप्रदता**ग्लानिम् = बल्यर्पणताम्लानिम् । **चिच्चालयिषन्तः** = च्चालयितुमिच्छन्तः । **तृणाय** मन्यमानाः । " **सन्धी** राजधर्मः = अत्र रोरि (८।३।१४) इति सूत्रवृत्तिः । **दीर्घदर्शी** = सूक्ष्मदर्शीत्यर्थः । **यवनरुधिरतृषितम्** = म्लेच्छरक्तपिपासुमित्यर्थः । **राजपुत्रेति**—" तैः सह सङ्ग्रामं कर्त्तुमुचितं न मन्ये" इति फलितार्थः ।

**एतेन**—विदेशीयत्वात्सनातनधर्मध्वंसकत्वात् यवना उत्साद्याः, स्वदेशीयत्वात्समानेष्टत्वाच्च स्वीया न हन्तव्या इति युक्तमतो वृद्धोऽपि त्वं म्लेच्छपाशं गतः न धर्मं नापि च नीतिं जानासि इति शिववीराभिप्रायः ।

**पृ० २६१ ॥ हस्तं** चिक्षिपुः = म्लेच्छा इति शेषः निगदव्याख्यातमन्यत् । **दुराचारेति**—दुराचारा एव कीटाः तैः जर्जरितः = जीर्णः अन्तःसारः अन्तर्बलं यस्य स तादृशः प्रतापः संवृत्तः । **महापातकैः** = अत्यन्तं कृतैः क्रियमाणैश्च दुराचारैरित्यर्थः **कृत्तमूलम्** = छिन्नमूलम् । **काशीस्थेति**—काश्यादिस्थानेषु वर्त्तमानानि मज्जितस्थानानि तेषु **घूङ्कारैः** = स्वजातिरवैः **घूकाः**=उल्लूकाः **घोरं** घोषम् = भयङ्करं शब्दम् । **वरटाः** = पक्षिविशेषाः **सरटाः** = कृकलासाः **करटाः** = काकाः ।

**पृ० २६२ ॥ तैलपायकाः** = जतुकाः । **विष्ठाभिः** = गूथैः । **मलिनयिष्यन्ति** = कच्चरं करिष्यन्ति । एतत्सर्वं जयसिंहस्य वचनं तस्य अदीर्घदर्शितां व्यनक्ति यवनपक्षपातमलिनमनोमान्द्यञ्च ।

**यावतीनाम्**=यत्परिमाणवतीनाम् । **जाज्वल्यते**=देदीप्यते । **वैरवह्निः** =वैराग्निः । **मण्डलशासकाः** = नव्वावसूबेदारपदबोध्याः । **गूढम्**=अन्तरतः । **एषः** = अवरङ्गजीवः । **वैरायते** = वैरं करोति । **निजधर्मधुरीणानाम्** = माहम्मदधर्मशासकमुख्यानाम् । **आसन्नेति**—आसन्नः समीवर्त्ती विनिपातो विनाशो येषां तानि । **अयुध्ये** = युद्धमकरवम् । **संशये** = सन्देह्मि संशयमाप्नोमीत्यर्थः ।

**पृ० २६३ ॥ अटवीषु** = अरण्यानीषु । **अपभ्रष्टः** = मार्गच्युतः **आहवः** = सङ्ग्रामः । **विश्वसयेयम्** = विश्वासं कुर्याम् । अत्र =

**पृ० २६४ ॥ मन्थरैः** = सालसैः **अङ्गैः** = हस्तपादाद्यवयवैः, चिन्तासन्ताने = चिन्ताप्रवाहे एकतानः एकमात्रं लग्नः । **सुष्वाप** = निदद्रौ ।

**पृ० २६५ ॥ अन्येद्युः** = अन्यस्मिन् दिवसे । **करकानां कोटिभिः**=

बहुभिः शिबिरैरित्यर्थः । कोटिशब्दोऽत्र बहुत्वं लक्षयन् समुदायं व्यनक्ति । 'भवत्याः तातचरणः = पिता' इयमुक्तिः रसनारीहृदये तत्पितुर्दोषनिधानार्था । **अस्मत्कोपकृशानुषु** = अस्मदीयक्रोधानलेषु । न **शाम्यति** = नैव शान्ता भवति । **युयुत्सा**=योद्धुमिच्छा । **निगडबद्धः** = शृङ्खलाभिः सितः । **महाप्रासादे** = विशाले राजहर्म्ये ।

पृ० २६६ । **सुन्दरस्य** = कमनीयाकृतेः । **यूनः**=तरुणस्य । **आस्माकीनैः** = अस्मदीयैर्महाभटैः ।

**ईहते** = चेष्टते । **कलाकौशलानि** = कारुककृत्यानि । न **अवधत्ते**= नैव ध्यानविपर्याकरोति । **आलापमूर्च्छना** = गीतिमूर्च्छना ।

पृ० २६७ ॥ **सक्रन्देति**—क्रन्देन सह यह विलपितं तत उद्भूत निर्गतैः वाष्पैः = अश्रुभिः । **श्मश्रुं कूर्चश्च** स्नपयति = अत्र रोदनातिशयो व्यङ्ग्यः । **प्रेमभाराः** = प्रीतिपुञ्जाः । विभराम्बभूविरे = दध्रिरे ।

**तौ एव** = रसनारीमायाजिह्वावेव । **अविचाम्** = आजानीताम् । **उदीर्य** = उक्त्वा । **निरचायि** = निश्चितम् । **सन्धातुम्** = सन्धि कर्तुम् । **शत्रुसम्बन्धिनः** = शत्रूणां बान्धवान् । **निगृह्य** = कारीकृत्य । **पशुमारं** मारयति = पशुवन्मारयतीत्यर्थः । **महाराष्ट्रमेघवाहनः** = महाराष्ट्रदेशस्य मेघवाहनः इन्द्रः ।

पृ० २६८ ॥ **प्रेमपूरप्रवाहैः** = प्रीतिपुञ्जोद्गारैः । **शलभप्रणाशम्** = शलभमिव प्रणाशयितुम् । **आनृण्यम्**=ऋणाभावम् । **सन्धास्यति**= सन्धि करिष्यते । **प्रतीक्षते** = प्रतिपालयति ।

पृ० २६९ ॥ **अनुभविष्यमाणेन** = अनुभवविषयतां प्रति नेष्यमाणेन **शिवविरहेण** शिवराजवियोगेन । **ग्लाना** = क्षीणहर्षा । **मुहुर्मुहुः** = पुनः पुनः । **कुपिता**=क्रुद्धा । **विकला** = विह्वला । **प्रस्थातुम्** = (दिल्लीम्प्रति) यात्रां कर्तुम् ।

**चलप्रकृतिम्**=चञ्चलस्वभावम् । **अगम्भीरेति**—न गम्भीरः विशालमूलः स्वभावो यस्याः तां तादृशीम् **अवगत्य** = निश्चित्य । **अलं विषादैः**= विषादाः न कर्त्तव्या इत्यर्थः ।

'**साच**—श्रीजयसिंहाध्युषिताशिविराभिमुखं प्रतस्थे' इत्यन्वयः ।

पृ० २७० ॥ **मोदिष्यते**=हृष्टो भविष्यति । **किञ्चिन्मलिनमुख**



न = जितदुर्गाणां प्रत्यावर्तनहेतोः करप्रदतामरीतेनकारणाच्च ...

**दक्षिणो** बाहुः संवर्त्तस्व = दक्षिणभुजतुल्यो भवेरित्यर्थः । "स्फुरितबाहु" रिति महाराष्ट्रराजस्य परमं क्षात्रं तेजो व्यज्यते । "**सेना** आयोजयितुम् = युद्धार्थं सज्जीकर्त्तुम् । **आदिदेश** = आज्ञप्तवान् । **हस्तगतं** स्वायत्तीकर्त्तुम् । **महान्धतमसे** = गाढेऽन्धकारे ।

**पृ० २७१** ॥ **रुद्रमण्डलस्य** = तदाख्यदुर्गस्य । **निभृतम्** = गुप्तम् । **गिरिः** = पर्वतः । **अविदितचरः** = पूर्वं विदितः ज्ञात इति "विदितचर." । भूतपूर्वे चरट् ( ५ । ३ । ५३ ) न विदितचर अविदितचरः । पूर्वमपरिचित इत्यर्थः । **उत्प्लुत्य**=उच्छालं दत्वा । **शाखाः**=वृक्षादीनां शिफाः । **आलम्ब्य** आश्रित्य । **उपविश्य**=आसित्वा । **निर्झर**जलस्य प्रस्रवणपानीयस्य अन्तःप्रविस्त **लताजालानि** = वल्लीप्रतानानि **अपसार्य** = वारयित्वा । **विद्धान्** = कृत-वेधान् कण्टकान् = वृक्षशूलान्, **अपनीय** = निष्काल्य । **नेदीयस्याम्** = अतिनिकटवार्तिन्याम् । **अधित्यकायाम्** = ऊर्ध्वभूमौ । "**आयात**" इत्यत्र शिववीर इति कर्तृपदं बोध्यम् । **तावत्** = तदेत्यर्थः अपश्यत् । **दुर्गप्राचीरे** = दुर्गकोटे । **सदीपा** काचमञ्जूषा अन्तर्ज्वलितदीपा काचपेटिका "लालटैन" इति प्रसिद्धा । **तरुच्छायासु** = वृक्षच्छायासु । **विलीनाः** = विनष्टाः । **सतर्कम्** सालोचम् । **अनीक्षमाणाः** = अनालोकमानाः । **मर्मरकारणम्** = शुष्क-पत्रस्वनितहेतुम् । **दौर्गिकाः**=दुर्गरक्षायां नियुक्ताः यामिकाः । **मुहूर्त्तानन्तरम्** =घटिकाद्वयोत्तरम् । **दुर्गप्रा**चीरस्य = दुर्गप्राकारस्य **तेऽपि** = दौर्गिका अपि । **नेदिष्ठान्** = अतिसमीपवर्तिनः महाराष्ट्रयोधिनः । **प्रत्यर्थिनः** = शत्रून् । "शात्रव" इति कुव्याख्यानम् । **शक्तिशराघातैः** = छुरिकासायकाताडैः **ताडयितुम्** = मारयितुम् । **आरेभिरे** = प्रचक्रमिरे । **आत्माच्छादनैः** = स्वात्मनिलयनैः । **स्वयं बोबुध्यमानाः** = स्वयमेवातिशयेन विचारितवन्तः ।

**पृ० २७२** ॥ **प्रत्यक्षीभूय** = सम्मुखं भूत्वा । **शाखिशाखेति**— शाखिशाखान्तरोदरेषु वृक्षशाखामध्ये सुप्तानां पक्षिणाम् = पतत्रिणाम् पटलान् = समूहान् **उन्निद्रयन्तः** = जागरयन्तः **चन्द्रचन्द्रिकासाक्षिकम्** = ज्योत्स्ना-प्रकाशे एवेत्यर्थः । **यवनेति**— यवनानां म्लेच्छानां शरभल्लैः आहताः आताडिताः **चन्द्रेति**—चन्द्रस्य शशिनः मरीचीनां किरणानां चाकचक्यचयेन चमत्कृति-पुञ्जेन चमत्कृताः प्रकाशिताः अधित्यकाम् = ऊर्ध्वभूमिम् । **स्नपयन्तः** = आर्द्रयन्तः । **शिवेति** = शिवस्य शिववीरस्य यो विजयः तस्य कुङ्कुमेन इव **चर्चयन्तः** = लेपयन्त इति उत्प्रेक्षा । **ससूर्यभेदं** स्वर्गं प्रतिष्ठमानाः

सूर्यमण्डलं भित्त्वा स्वर्लोकंप्रति प्रस्थिताः सन्त इत्यर्थः । **शिवं** = महाराष्ट्र-देशाधीश्वरम् महादेवञ्च । प्रणमन्त इव **पेतुः** = धरायां मृताः शिशियरे इत्यर्थः । शिलीमुखः वाणः ।

**चञ्चुप्रवेशः** = प्रवेशलेशोऽपीत्यर्थः । **होराद्वयानन्तरम्** = अहोरात्रस्य चतुर्विंशतितमोभागः होरा तद्द्वयानन्तरम् । **अधिकवलान्** = अधिकसैन्यकान् । केनाऽपि **कौशलेन** = कालोचितचातुर्येणत्यर्थः । **घोरं युद्धमगणयन्** = भयङ्कर संग्राममपि उपेक्षमाणः । **शिलाखण्डान्** = पार्वतपाषाणशकलान् **चित्वा** = एकत्रीकृत्य **भित्तिकेति**—भित्तिकायां कुड्ये अर्पितो न्यस्तः भल्लस्य समाश्रयो येन सः तथाविधः **लाघवेन** = शैघ्र्येण **उत्प्लुत्य** = उच्छालं कृत्वा । **उच्चैरवदत्** = उच्चैरघोषयत् । **सदन्तघर्षम्**= सरदनचर्वणम् । **सन्दष्टदशनच्छदम्** = सन्दष्टः दन्तैर्निपीडितः दशनच्छदः अधरो यस्यां क्रियायां तद्यथा तथा । **निस्त्रिंशान्** = असीन् कोशात = प्रावारात **आकर्षन्तः** = निष्कालयन्तः । **शक्तिम्** = छुरिकाम् **उत्तोलयन्तः** = उन्नमयन्तः । **शरासनान्** = धनूंषि । **टंकुर्वन्तः** = सज्जयन्त इत्यर्थः । **परितः**

पृ० २७३ ॥ **समापतिताः** = समाक्रान्तिङ्कुर्वाणाः प्रवव्रिरे = वारितवन्तो बभूवुः । "भूमिष्ठा" अपीति महाराष्ट्राणां महासाहसिकता व्यज्यते । **अविध्यन्** विद्धानकार्षुः **आत्मसहचरम्**=तमेव नवयुवकम् । **समरक्षन्**= अपालयन् । **गौरवगरिष्ठः**=गुरुतया गरीयान् **उत्पत्य**=उत्प्लुत्य । **कदर्थीकृत्य** निष्फलीकृत्य **सोत्फालम्** = सकूर्दनम् **प्राचीरम्**=प्राकारम् **आरोहन्** = क्षणेन = अल्पेनैव कालेन **उदतूतुलन्** = ऊर्ध्वं निन्यिरे । **तेन सहैव** = रघुवीरसिंहेन साकमेव । **शार्दूल इव** = **जघन्यवन्यमण्डले**=जघन्या नीचा ये वन्याः आरण्याः (पशवः) तेषां मण्डले समुदाये शार्दूल इवेति **उपमालङ्कारः** । **समापतत्**=अक्राम्यत् । **तुमुलम्**=सङ्कुलं भयानकमिति यावत् । **दण्डद्वयेन**= दण्डः=कालविशेषः । **स्थूलदीपान्** = "मशाल्" इतिख्यातान् । **सञ्ज्वल्य**= ज्वालयित्वा दीपयित्वा । **दुर्गाध्यक्षः** = दुर्गरक्षाधिकारे नियुक्तः प्रधानपुरुषः । **लौहशृङ्खलकीलैः** = आयसशृङ्खलिकाकीलकैः । **दृढतरैः**=अत्यन्तं दृढैः ।

पृ० २७४ ॥ **कपाटैः** = कवाटैः । **अमुमुद्रत्** = पिहितमकार्षीत् । **भस्मयामः**=भस्मीकरिष्यामः । **क्रियासमभिहारेण** = पुनः पुनः **शृण्वन्** = आकर्णयन्नपि न **निरयासीत्** = नैव निरयासीत् । **इन्धनैः** = काष्ठैः । **प्रासादम्** = महाहर्म्यम् । **ज्वलयितुम्** = भस्मीकर्तुम् । **विहायसम्** =

गगनम् । **लिहन्तीषु** = आस्वादयन्तीषु । **देदीप्यमानासु**=जाज्वल्यमानासु **शिखासु** = वह्निकीलासु । **अवीरयोग्यम्** = वीरानर्हम् । **गवाक्षिकातः** = खड्किकातः । **उत्प्लुत्य** = कूर्दयित्वा । **महार्घवति**—महार्घाणि बहुमूल्यानि यानि वस्तुजातानि वस्तुग्रामाः तैः पूरितम् = भरितम् । **दहथ** = भस्मीकुरुथ । **यथेच्छम्** = यथारुचि **प्रहरत** = प्रहारं कुरुत । **उत्सृजामि** = उत्स्रक्ष्यामि ।

**तदाकलय्य** = तस्य तदुक्तिं निश्चित्य । **सुसज्जनिस्त्रिंशानाम्** = उद्यतखड्गानाम् । दक्षान् वामांश्च **मार्गान्** = रणचालान् **चरति** = कुर्वति । सति सप्तमीयम् । **यवनवीरे** = ( तस्मिन्नेव ) रहोमत्तखाने । **विद्युच्चमत्कार इव** = चपलाचमत्कृतिपात इव ।

पृ० २७५ ॥ **सोत्फालम्** = सकूर्दम् आपत्य=आक्रम्य **सत्सरुम्**= त्सरुः खड्गमुष्टिः तत्सहितं तस्य = रहोमत्तखानस्य मुष्टिम् **जग्राह** = आददे । **एषकः** = एष एव । **यतते** = प्रयत्नं करोति **आच्छेत्तुम्** = आदातुम् **स्वहस्तं** = स्वपाणिम् । **चन्द्रहासम्** = खड्गम् । **उष्णीषिकापटेन** = शिरोवेष्टनिक्रया । **बाह्वोः** = द्वयोर्भुजयोः । **स्कन्धे** = अंसे च । **समबन्धन्**= निजगृहिरे ।

**अरुणोदयः** = प्रातःकालिकरक्तिमा स्फुटित इत्यर्थः । **भासमाने** = प्रतीयमाने । **भूभागे** = धरातले । **परिपन्थिपदातीनाम्** = शत्रुपत्तीनाम् । **स्वाभिमुखम्** = स्वसम्मुखम् । **गौरेति**—गौरसिंहस्य सेनायाः कोलाहलेन कलकलरवेण सुदूरम् । **आकृष्टाः** = आघर्षिताः । प्रासाददाहस्य=हर्म्यदाहस्य ज्वालामालाः=अर्चिषां राजीः **अवलोक्य** = दृष्ट्वा । **कोपकषायिताः** = क्रोधकलुषिताः । **समुच्छेत्स्यन्ति** = नाशयिष्यन्ति । **आयस्तम्**=स्थगितम् ।

पृ० २७६ ॥ **नोररीकरोति**=नाङ्गीकरोति । **उरः**=वक्षःस्थलम् । **होरार्धमिव** = घटिकाद्वयार्धमिव । **समरदुरोदरेण** = आहवद्यूतेन **यापयिष्यन्ति** = गमयिष्यन्ति । **कृपाणधाराभिः** = असिधाराभिः = **स्नपयिष्यति** = शौचयिष्यति हनिष्यतीत्यर्थः । **व्याजहार** = ऊचे । **पूर्णपारितोषिकभाक्** = **ओमित्युक्त्वा** = स्वीकृत्य । **साहसिकान्** = शौर्यकर्मभटान् **पत्तीन्** = पदातीन् । **उच्छ्लितकोपैः** = उदीर्णक्रोधैः । **अन्वतिष्ठत्** = प्रारेभे । **सपत्नापेक्षया** = शत्र्वपेक्षया **द्विगुणितेषु** = द्विरावृत्त्याऽपि अधिकेषु । **विस्मितप्रायेषु**

चकितमनःसु । **प्रासासिरिष्टि**—तोमरक्षेपतत्परेषु = तत्र प्रासाः = कुन्ताः । इति **व्याहरन्ती** = एवं गर्जयन्ती ।

पृ० २७७ ॥ **विजयदुर्गेति**—विजयदुर्गस्य यो विजयः तस्य वैजयन्ती = पताका: **उड्डाय्य** = उत्फाल्य । **भेरीः** = ढक्काः **आहत्य** = ध्वनयित्वा **जयनादैः** = जयजयेति शब्दैः **गगनम्** = आकाशम् । **व्यलोडयन्** = ममन्थुः । जयध्वानध्वनितमकार्षुरित्यर्थः ।

**तावदिति**—' तावात् महाराष्ट्रराजः ससाधुवादमखिलान् नित्यक्रियाभिः आत्मानं सुखयितुं विससर्ज ' इत्यन्वयः । अरुणपीतप्रकाशेन = अरुणः सः पीतश्च अरुणपीतः सचाऽसौ प्रकाशः तेन, । **सम्मान्य** = आदरं दत्वा । **नित्यक्रियाभिः** = स्नानशौचादिभिः । **सुखयितुम्** = आनन्दयितुम् । **विससर्ज** = प्रेषयामास । **अवगमय** = बोधय । **प्रदर्शितयुद्धकौशलान्** = प्रदर्शितं युद्ध कौशलं चातुरी यैः तान् । **भटान्** = शूरान् । **उत्साहयितुम्** = उत्कण्ठयितुम् । **उपस्थाय** = उपस्थितं कृत्वा । **सनाथनीया** = शोभनीयेत्यर्थः । **समितिः** = सभा । **तस्मिन्** = गौरसिंह । **तथा प्रस्थिते** = महाराष्ट्राज्ञामादय प्रचलिते । **विश्वस्तेति**—विश्वस्तान् = विश्वासार्हान् चिरन्तनान् = प्राचीनान् स्वामिभक्तान् = स्वामिसेवकान् **भटान्** = वीरान् । **आयोज्य** = विनिवेश्य । **उपस्कर्तुम्** = सज्जयितुम् । **आदिश्य** = आज्ञप्य **स्वास्थ्यम्** = कृतकृत्यतासुखम् । **आससाद**=भेजे ।

" **अथ**—तथाऽनुष्ठितवस्तु अखिलेपु महासभा समातिष्ठत " इति सम्बन्धः । **विहितेति** = विहिता सम्पादिता भोजनादि क्रिया येन स तस्मिन्, **परतः** = भोजनोत्तरम् **निद्रामुद्रया** = प्रमीलाऽवस्थया इव, **विद्रावितं** = दूरीकृतं मान्थर्यं आल्यस्यं येन सः तस्मिन् एवम्भूते जयपुराधीश्वेर सतीत्यर्थः । **पश्चिमायां** दिशि । **अवनमति** = अवतितीर्षति । **मार्त्तण्डमण्डले**=सूर्यबिम्बे, **चण्डेति** चण्डमरीचिप्रचयेन = खराकिरणव्रजेन ईषत् किञ्चित् प्रतप्तः उष्णो यो वातः समीरः तस्य आघातेन स्पर्शेन यः प्रतापः = तपनं तेन शुष्यन्तः शोषङ्गताः फल-पत्र-शाखा-प्रशाखा येषां तेषु वृक्ष-क्षुप-व्रतती व्रजेषु । तत्र—**वृक्षाः** = द्रुमाः । **क्षुपः** = ह्रस्वशाखिनः । **व्रतत्यः** = वल्ल्यः । तासां व्रजः समूहः ।

**सम्पत्स्यमाने** = भाविनि, सायङ्काले = प्रदोषे । **प्रविततभूमागे** = विशाले पृथ्वीप्रदेशे । **सुवर्णच्छटया** = सुवर्णसमप्रभया रञ्जितानि यानि लता

कुसुम-चित्राणि तैः विचित्रितस्य = कर्बुरितस्य, **विविधेति**—विविधैः नाना प्रकारैः वर्णैः = रङ्गैः वर्णनीयानि = चित्रितानि यानि स्तम्भशतानि = स्थूणा-शतानि तैः उच्छ्रितस्य = उन्नतस्य, **पुष्कलेति**—पुष्कलानां दृढानां दाम्नां रज्जूनां शतैः आकृष्टस्य बद्धस्य च एवम्भूतस्य—**कौशेयोल्लोचस्य** = कृमिवसनवितानस्य अधस्तात् **आस्तीर्णेषु** = आस्तृतेषु, **कौशेयास्तरणेषु** = पट्टास्तरणेषु '**तत्र** हि—जयपुराधीश्वर उपविष्ट' इति सम्बन्धः ।

**पृ० २७८ ॥ कनकसूत्रेणेति**—कनकसूत्रैः = सुवर्णसूत्रैः गुंफितं ग्रथितं प्रान्तं यस्य तादृशं यदासनं तेन आच्छादितायाम् = प्रावृतायाम् । वितस्तिः= वितस्तिप्रमाण मुच्छ्रायो यस्याः साचाऽसौ तूलिका = तस्याम् **महोपर्वहे** = महति विशाले उपधाने लग्नं = धृतं पृष्ठ यस्य सः **तद्वामतः** = जयपुराधीश्वरवामवभागे महाराष्ट्राणां यद्राष्ट्रं तस्य त्रिविष्टपेशः इन्द्रः **समवर्तिष्ट** = स्थितिं भेजे इत्यर्थः । **वितानस्य**—उल्लोचस्य **परितः** = समन्तः बद्धाः पंक्तयो राजयो यैः ते **योद्धारः** = भटाः **सुसज्जाः**

**प्रभाकरेति**—प्रभाकरः = सूर्यः तस्य प्रभाप्रचयस्य = तेजःपुञ्जस्य प्रपातेन = प्रसारेण धृतानां सङ्गतानाम् , **तत्कट्याम्** = तेषां योद्धॄणां कटि-भागे बद्धाः या महारजतस्य सुवर्णस्य रजतस्य = दुर्वर्णस्य तदादेश्च या पट्टिकाः तासाम् , **स्कन्धेषु** = अंसेषु उन्नामितानाम् ऊर्ध्वान्दोलितानां शक्तिभल्लानां छुरिकासीनाम् । **कट्यां** विलम्बितानि यानि कृपाणानि तेषां ये सौवर्णाः सुवर्णरचिताः त्सरवः खड्गमुष्टयः तेषाम् ।

चाकचक्यं चमत्कृतिः अवलोचकानां द्रष्टॄणां लोचनं = नेत्रम् अतीतऽवत्= चकितमकार्षुः । **कलितमहाध्वजाः**=धृतमहापताकाः । **अजूघुषन्**= अरीरटन् । **ततः**=जयशब्दघोषणानन्तरम् । **स च**=जयपुराधीश्वरो जयसिंहः । **उत्साहयाम्बभूव**=उत्कण्ठयाम्बभूव । **विहितसाहाय्याः**=कृतसाहाय्याः **तान्**=गौरसिंहादीन् । **प्रशशंस**=अस्तौत् । **असिधेनुकायाः**=छुरिकाया दानेन **पर्यतोषयत्**=अप्रासन्नयत् । **रघुवीरं** निर्दिश्य = रघुवीरस्य निर्देशं कृत्वेत्यर्थः ।

**पृ० २७९ ॥ वीरबालः** = बालोऽपि शूरः । **प्रधानकारणम्**= मुख्यो हेतुः । **शरप्रपातम्** = सायकासारम् । **अगणयित्वा** = अविचार्य । **रिपुनिकरव्याप्त** = शत्रुसङ्घपूर्णे । **सोत्फालम्** = सोच्छालम् । **निगृहीत-वान्** = बद्धवान् । **पराजेष्ट** = जितवान् ।

**दन्दह्यमानहृदयात्** = जाज्वल्यमानमानसात् । **महासिम्** = महाखड्गम् **अयच्छत्** = प्रादात् । **समतूतुषत्** = सन्तुष्टमकार्षीत् । **सोऽपि** = रघुवीरसिंहोऽपि । **लम्बयित्वा** = दोलयित्वा । **उपाविक्षत्**=आसनं शिश्रिये । **पार्श्व स्नाहस्त्रि कृतार्थंग्य:** = ............ **अम्बरेशकर्णे** = अमेरदेशाधीशश्रवणे । **आलपत्** = अचकथत् । **सोऽपि** = अम्बेरेशोऽपि **अन्वमूमुदत्** = अनुमोदनं कृतवान् ।

**तोद्यमान:** = आहन्यमान: । **स्वामिपिण्डस्य** = स्वामिनोऽन्नस्य । **न स्वाधीन:** = न स्वायत्त: ।

**पृ० २८० ॥ व्रीडा** = लज्जा । **नोचिता** = नार्हा । **स्वच्छन्दम्** = स्वेच्छानुसारमित्यर्थ: । **औदार्येण** = उदारभावेन **विजयपुरविरोधिनाम्** = विजयपुरेशशत्रूणाम् **साहाय्याय** = सहायताकरणाय । **निस्त्रिंशम्** = खड्गम् **आकलयितुम्** = उत्तोलयितुम् । **उत्सहते** = उत्कण्ठते । **निविवेदयिषामि** = निवेदयितुमिच्छामि । **राजभक्ता:** = राजसेवापरा: । **विद्रोहिण:** = वैरिण: । **भवत्कृपापात्रताम्** = भवदीयदयास्पदताम् । **वहन्त:** = धारयन्त: । **गूढम्** = गुप्तम् । **विद्रोहम्** = वैरम् । **सतर्कीकृता:** = सचेतिता: । **जय्यम्** = जेतुं शक्यम् । **साऽनुसन्धानम्** = सान्वीक्षणम् । **शोधनीया**= तादृशकण्टकापसारेण निर्मलीकरणीया स्वसेना ।

**कोपेति**=कोपेन क्रोधेन अरुणीकृते रक्तीकृते नयने नेत्रे येन सा । **एकलेखायाम्**=एकस्यां पंक्तौ उत्थाय स्थातुम् । **आज्ञप्तवान्**=आज्ञां ददे ।

**पृ० २८१ ॥ विद्रोहाचरणम्**=विश्वासघातीकरणम् । **निर्मक्षिकसञ्चारा**=निर्मक्षिकवत् शून्यवत् सञ्चारो यस्या: सा । **अवसन्ना:**=अवसादं पीडां प्राप्ता: **वीक्षित:**=दृष्ट: । **कृतान्तेन**=यमेन **पाशित:**=पाशबद्धीकृत: । **जडीभूता:**=निश्चेष्टा: **प्राणेति**=प्राणदानस्य जीवनरक्षणस्य प्रतिज्ञया वाग्दानेन । **सनाथ्येय**=रक्ष्येय । **मिथ्याकलङ्केन**=मृषादोषारोपेणेत्यर्थ: ।

**पृ० २८२ ॥ क्रूरेण**=भयङ्करेण **चक्षुषा**=नेत्रेण **दिधक्षन्**=भस्मीकुर्वन्निव । **उल्बणम्**=महाभीतिप्रदम् । **फलम्**=परिणामम् । **नि:शब्द:**=मौनी ।

**पृ० २८३ ॥ मधुरा**=प्रिया । **गी:**=वाक् । **छली**=दम्भी विद्रोहीत्यर्थ:। **अनीहमानस्य**=अकामयमानस्य **प्राणरक्षायत्न:**=जीवनरक्षणप्रयास: । **तोष:**=प्रसन्नता । **रोष:**=कोप: । **व्यापादयतु**=हन्तु । **वाचाल:**=विकत्थन: बहुभाषी वा । **नवचयरक्षा**=... । **अस्य अग्नि:**=... सर्वांगीत्यर्थ: ।

**पृ० २८४ ॥ त्यक्ष्यामि**=हास्यामि । **शुश्रूषे**=श्रोतुमिच्छामि । **व्यर्थप्रलपितम्**=व्यर्थं रोदनम् **शक्तिम्**=छुटिकाम् । **सज्जीकृतवान्**=उत्तोलितवान् । **सान्त्वितः**=शमयितः । क्रोधेन **अस्थिरः**=कोपेन स्थितिमलभमानः । **अवलुलोकयिषामि**=द्रष्टुमिच्छामि । **खिद्ये**=दैन्यं भेजे । **वास्तविकविद्रोहिणम्**=यथार्थविद्रोहकर्त्तारम् । **निश्चेतुम्**=निर्णेतुम् **यते**=यत्नं करिष्ये । **विमतिः**=विरुद्धा मतिः । **यच्छिबिरम्**=मदीयसेनानिवेशम् । **सादिनः**=अश्वारोहाः । **आसन्नम्**=निकटवर्त्तिनम् । **अवगत्य**=निश्चित्य । **समुत्तस्थुः**=उत्थानं कृतवन्तः, सभाविसर्गो जात इत्यर्थः ।

अतिस्पष्टं व्याख्यातप्रायमनुपयुक्तञ्च न व्याख्यातम् ।

**इति ( नूतन ) शिवराजविजयपताकायां**
**नवमो निश्वासः ।**

---

ॐ

# अथ दशमो निश्वासः।

पृ० २८६ ॥ **पर्यङ्कम्** = पल्यङ्कम् **प्रातरिति—विधेयकर्मणः** = वेदविहितसन्ध्यावन्दनादिनित्यकर्मणः सकाशात् **निवृत्य** = अवकाशं लब्ध्वा। **निरणैषीत्** = निर्णयमकरोत्। **कोपकषायितेन** = क्रोधकलुषितेन। **आकलय्य** = निश्चित्य। **तस्य** = क्रूरसिंहस्य **निरचायि** = निरणायि। **धिङ् मे दुरदृष्टम्** = मम दौर्भाग्यं धिक्... ...**मुक्तकण्ठम्** = गलमुत्स्फार्येत्यर्थः क्रियाविशेषणम्। **रुदित्वा** = विलप्य। **न परावर्त्तते**=नैव प्रत्यायाति।

पृ० २८७ ॥ **अन्यायप्रचारः** = दुर्न्यायव्यवहारः। **विद्रोहम्** = विश्वासघातम्। **महाकुलस्य** = उच्चवंशस्य **मानहानिखिन्नः** = अपमानदुःखित इत्यर्थः। **व्याघ्रवदने** = शार्दूलमुखे। **वाहिनीप्रवाहे** = नदीप्रवाहे। **गरलम्** = विषम्। **तपोभिः** = अनशनव्रतादिभिः। **जर्जरयिष्यति** = जीर्णं करिष्यति। **वाष्पधाराभिः** = अस्रप्रवाहैः। **गण्डौ** = कपोलौ। **अस्रपयन्** = अप्लावयन्। रोदनाधिक्यं व्यज्यते। **तस्य** = रघुवीरस्य। **वीरता—**व्यवहारः=शौर्यकृत्यम्। **गम्भीरम्**=निगूढार्थम् **भाषणम्** = वचः। **औदार्यपूरितम्** = उदारताभरितम्। **तेजस्विनी** = प्रतापशालिनी। **आकृतिः** = मूर्त्तिः। **कुलम्** = सद्वंशम्। **परिचाययन्ति** = प्रकटयन्ति। **भाषणभङ्गी**= वाग्व्यापारप्रकारः। **परिपाटीम्** = रीतिम्। **किमितिहासः** = कः इतिहासो यस्य सः।

पृ० २८८ ॥ **आवद्यति** = धारयिष्यति। **अलं शोकसमुद्रमन्थनैः**=शोक एव समुद्रः तस्य मन्थनैः विलोडनैः अलम् न किञ्चित्साध्यमस्तीति भावः। **अवहेलितः** = अवज्ञातः। **पश्चात्तापैः** = अविचारितकृत्यजनितैः शोकैः। **धक्ष्यामि** = ज्वलयिष्यामि। **पटान्तेन** = वसनकोणेन। **वाष्पम्** = नेत्रजलम्। **परिमृजन्** = प्रोञ्छन्। **चिरतापव्यथाम्** = बहुकालविरहजनितपीडाम् **पर्यवसाययिष्यामि** = समापयिष्यामि। **झञ्झावाताघातात्**= महावातवर्षात्। **पोतपातम्** = नौकाभ्रंशनम्।

पृ० २८९ ॥ **सांयात्रिकेति**—सांयात्रिकाणां=पोतवणिजां क्रन्दन-
आक्रोशन=विलापकोलाहलम् सञ्जातम्=उत्पन्नम्। **रोमोत्कम्पम्**=रोमहर्षम्।

**मन्दरगण्डशैल इव**=मन्दराचल प्रत्यन्तपर्वतक इव । **पारावारतलम्**=समुद्राधोभागम् । **अगात्**=प्राप । **पोतः**=समुद्रनौका । **ऊर्मिराशिभिः**=लहरीप्रचयैः **दोदुल्यमानः**=अत्यन्तं लाव्यमानः । **अरुणोदयसमये**=प्रातःकाले । **पयोधीति**=पयोधेः=समुद्रस्य पयःक्षारेण क्षारेण पयसेत्यर्थः । क्षरितप्रायाम्=प्रायःस्फुटिता **त्वचम्**=चर्म । **मर्दयन्ति**=अभ्यञ्जयन्ति । **उल्लाघौ**=गदान्निर्गतौ स्वस्थाविति यावत् । **हा**=कष्टम् । **वार्धक्ये**=वृद्धावस्थायाम् । **व्याजिहर्षव**:=व्याहर्तुं=वक्तुमिच्छव इव । **विव्रजुम्**=व्याजिहीर्षुम् । **दत्तकर्णाः**=सावधानाः । **मूढयोषितः**=मूर्खस्त्रिय इव । **घ्नन्ति**=व्यापादयन्ते ।

**पृ० २१०॥ गूढपौरुषम्**=गुप्तं परामक्रम् । **प्रमाणीकरोति**=निश्चाययति मे हृदयम् । उक्तञ्च—**कालिदासेन**—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणस्य वृत्तयः" इति ।

**नक्रैः**=जलतन्तुभिर्मकरादिभिः । **जटिलवेषेण**=तपस्विवेषेण । **आराधयति**=सेवते । **अमार्गयाम**=व्यचैष्म । "**कण्ठगतो**मणिरिव न ज्ञातः" इत्यत्रोपमालङ्कारः । **आलेपुः**=अचकथन् वार्तामकार्पुरित्यर्थः । **जयपुरपुरन्दरः**=जयपुराधीशो जयसिंहः । **आलिलिङ्ग**=परिषस्वजे । **नाज्ञासिषम्**=न पर्यचैषम् । **खेदमयाः**=दुःखप्रचुराः ।

**पृ० २११॥ असकृत्**=पुनःपुनः **सम्राट्**=चक्रवर्ती । **सञ्चिकीर्षति**=सत्कर्तुमिच्छति । **प्रत्ययलेशः**=प्रत्ययस्य विश्वासस्य लेशो गन्धः गन्धमात्रमपि विश्वास इत्यर्थः । **निगृह्णीयात्**=कारागारे कुर्यात् ।

**पृ० २१२ ॥ प्रतीपम्**=विरुद्धम् । **संहितः**=कृतसन्धिः । **निरर्थम्**=निष्प्रयोजनम् अन्यायेनेत्यर्थः । **भ्रंशयन्ति**=भञ्जयन्ते । **सौजन्यलेशः**=सज्जनतागन्धः । 'किं सम्भाव्यते'—नैव सम्भाव्यते इति काकुः ।

'युद्धे मर्तुमुपदर्शाति' इति महाराष्ट्रेश्वरोक्तिः तस्य परं चात्र तेजो व्यञ्जयति ।

**पृ० २१३ ॥ शोणितम्** = रक्तम् । **निग्रहम्** = कारीकरणम् । **प्रतियापयिष्यति** = प्रत्यावर्तनां कारयिष्यति । **भवदीयमंत्रणा**श्रवणे = त्वदीयसम्मतिश्रवणे । **वधिरीभूय** = निःश्रवणो भूत्वा **पापम्** = अनिष्टम् । **निरवर्त्तयत्** = समापयत् । **मरीचिमालिनि** = भगवति भास्करे । **चपलितांत**—चपलितः चञ्चुपुटः त्रोटिकोटियाभिः तासु । **प्राचीम्** = पूर्वां दिशम् । **अवलोचमानासु** = पश्यन्तांषु **चकोरीषु** = चेकोरप्रियासु । **उदगात्** = उदिताऽभूत् ।

**पृ० २६४ ॥ निशानाथः** = चन्द्रः । समयोऽयं **शरदन्तस्य** = शरदृतोरवसानस्य । अत्र प्राचीनटिप्पणे—" शरदि जयसिंह आयातः । अयं हिम समयः. दिल्लीगच्छतः शिवराजस्य मार्गे शिशिरः । वसन्तारम्भे शिवो दिल्ली-प्राप्तः । कारागारे च ग्रीष्ममनुबभूवेति सर्वमवदातम् ' इति लिखितम् ।

**हिमः** = हेमन्तः । **आसन्दीषु** = वेत्रासानिकासु । **अलीकः** = मिथ्याभूतः । **सहचरीम्** = सखीम् । **प्रामाणिकैः** = विश्वासार्हैः आप्तैरिति यावत् । **आत्मनोग्लपनम्** = मनोम्लानीकरणम् ।

**किञ्चिदिति**—किञ्चित् ईषत् लग्नो जातो निमषो यस्याः सा एवम्भूता । **विह्वलीभवत्** = व्याकुलतां गतम् । **तमेव** = रघुवीरमेव । **वरयिष्यामि** = विवाहयिष्यामि ।

**पृ० २६५ मनोरथाः** = सङ्कल्पाः **अञ्जनीसूनुः** = हनूमान् **विद्रुह्यन्ति** = विद्रोहमाचरन्ति । **अभ्यर्हिततरे** = अतिपूजिते अत्युच्चे इत्यर्थः । **नियोक्ष्यति** = स्थापयिष्यति । **प्राणत्यागम्** = मृत्युम् । **व्यस्रदयम्** = अट्टहासम् । **कलङ्कः** = दूषणम् । **क्षुपात्** = ह्रस्वशाखिनः = कुटात् = वृक्षात् । **कदली** = रम्भा । **वीजयन्ती** = व्यजनयन्ती । **विकचानाम्** = विकसितानाम् । **भ्रमदिति**—भ्रमद्भिः भ्रमरैः षट्पदैः झङ्कृतानां गुञ्जारवितानाम् । **कैरवाणाम्** = रात्रिविकाशिककमलानाम् । **सोपानैः** = रोहणीभिः ।

**पृ० २६६ शुश्राव** = आकर्णयामास 'कस्यापि हनूमत्स्तोत्रपाठम् शुश्राव' इति सम्बन्धः । **निःश्रेणीति**—निःश्रेणी अधिरोहणी तत्प्रान्तस्था या शिला-वेदिका तत्स्थस्य '**झटिति** उन्मुखीभूय पश्यन्ती ब्रह्मचार्यस्ति इति च अवालोकयत्' इत्यन्वयः । कीदृशो ब्रह्मचारी—**अंसद्वयेति**—अंसद्वये स्कन्धद्वये लम्बमानः दोलन् धूसरितः कषायितो जटाजूटः जटाबन्धो यस्य सः । **दीपेति**—दीपशिखादीप्तिवत् दीपज्वालाद्युतिवत् द्योतमानं = भासमानं विशालं विपुलं कुङ्कुमतिलकं यस्य सः । भगवच्चरणयोः चिह्नेन अङ्कितं ललाटं गोधिर्यस्य सः । **पीतेति**—पीता चासौ मृत्तिका पीतमृत्तिका तस्याः चूर्णेन छुरिताः चर्चिताः वदन–वक्षो–बाहुदण्डा यस्य सः । **तुलसीति**—तुलसीमालाऽक्षमालाभ्यां विलम्बितः गलः कण्ठो यस्य सः । रामेति—रामनाम्ना अङ्कितेन मुद्रितेन वसनेन वस्त्रेण वेष्टितः मूर्धा शिरो येन सः । **पीतेति**—पीतवसनं पीतवस्त्रं परिधानं वेषो यस्य सः । **मृगचर्मासनस्थः** = हरिणचर्मासने स्थितः । **समीपस्थितं**

तुम्बींपात्रम् अलाबुपात्रं यस्य सः । **तेजःपुञ्जम्** ब्रह्मचर्यवर्चः समूहम् **उद्गमन्निव** = उद्गिरन्निव **अल्पवयाः** = तरुणः । **नेदीयांसम्** = अतिनिकटम् **प्रदेशम्** = स्थानम् **आसाद्य**ः = प्राप्य । **गम्भीरम्** = गाढम् **बद्धकरसम्पुटा** = बद्धाञ्जलिः । **निविवेदयिषति** = निवेदयितुमिच्छति । **दीनदीना** अत्यन्तमनाथा । '**अबला**' इति पदेन दयापात्रतातिशयो व्यज्यते । **अवहेलितः** = न्यक्कृतः ।

पृ० २६७ । **सतु** = स एव क्षत्रिययुवा । **अपराधी** = दोषी अवहेलनायोग्य इत्यर्थः । **कुलीनम्** = सद्वंश्यम् **प्रत्यक्**—उदियाव = पश्चिमतो भूत्वा उदितो भवेत् । **प्रफुल्लेति**—प्रफुल्लानां विकसितानां कमलानां मण्डलेन = समूहेन मण्डितम् अर्थात् गगने पुष्पाणि समवेतानिभवेयुः ।

**गुप्तम्** = रहः **प्रभुम्** = स्वामिनं महाराष्ट्रेशं **व्यरुणत्** = अविरोधयत् । **मात्सर्यपूरितेन** = मत्सरस्य भावो मात्सर्यं................तेन पूरितेन, **ईर्ष्यापरवशेन** = असूयापरतन्त्रेण **पिशुनेन** = दुर्जनेन **निर्बन्धः**—आग्रहः चिकीर्षेत्यर्थः । **पौरुषेति**—पौरुषस्य = विक्रमस्य प्रचयेन = समूहेन यत् सम्पादितं साधितं तेन **यशसा** = कीर्त्या । **धरातलम्** = पृथिवीमण्डलम् । **धवलीकृत्य** = शुभ्रयित्वा । **कलानिधिः** = चन्द्रमाः ।

पृ० २६८ । **परिजिहासति** = परिहातुमिच्छति मुमूर्षतीत्यर्थः । **हतभाग्या** = दुर्भग । **निष्कपटप्रणयिनी** = शुद्धप्रीतिमती ।

**कृतकार्यः** = सिद्धफलः । **अनुरोत्स्यामि** = अनुरोधं करिष्यामि = तथाऽहं करिष्यामि यथासौ त्वाम्प्रति आत्मानं दर्शयितुं यतेत । **समाप्नोति** = समाप्तो भवति । **आलापः** = तयोर्द्वयोर्वार्त्ताकरणम् । **सोपानोपान्तस्थेति**—सोपानस्य अधिरोहण्या उपान्तस्थः समीपवर्त्ती यो वटकुटः = न्यग्रोधवृक्षः तस्य कुटीरात् **अश्रावि** = तास्यामाकर्णि । **रघुवीरा**भिमानिनी = रघुवीरासक्ता **उदीरितः** = उच्चारितः **क्रूरः** = कठोरः शब्दः 'उदीरितः क्रूरः शब्दः अश्रावि' इति सम्बन्धः । **कुलेति**—कुलस्य मर्यादा परपुरुषाऽस्पर्शनरीतिः अव्यभिचारितधर्मरक्षेत्यर्थः तस्याः भङ्गेन = नाशेन हेतुना भीरुः भीता । **व्याहरन्ती** = कथयन्ती । **आश्लिषत्** = अलिलिङ्ग । त्राससाध्वसेन रक्षार्थमालिङ्गनं न दोषावहम् । **कृष्णवसनम्** = नीलनिचोलम् । **मुण्डितश्मश्रूकूर्चम्** = दाढिकामूर्च्छितविवर्जितम् । **करकलितच्छुरिकम्** = करधृतकृपाणिकम् ।

पृ० २६६ । **बद्धपरिकरः** = बद्धकटिः । **समाकुञ्चिता**

.८. थन सः। **योद्धं सज्जः**=युद्धंकर्तुं सन्नद्धः। **स्वामिद्वितीयाम्**= स्वामी द्वितीया यस्याः, स्वामिनो द्वितीया = सहधर्मिणी तामिति वा। 'द्वितीया सहधर्मिणी' इति (अमरः)। **कोपेति**—कोपेन स्फुरितः स्फरस्फरायितः अधरो यस्य सः। **कुलटाम्**=व्यभिचारिणीम्। '**कुमारीम**' इति पदेन पुरुषसंसर्गाभावो बोधितः। **बलात्कारम्**=साहसिकं कर्म। **रघुवीर**निर्वासने रघुवीरनिकालने पिशुनः।

**पृ० ३००**। कुलकन्येति—कुलकन्यायाः बलात्कारेण यत् पातकं पाप्मा तेन पतयालुः पतनशीलः। **रघुवीरप्रत्यर्थिनः**=रघुवीरशत्रोः। **विकोशच्छुरिकाहस्तौ**=नग्नकृपाणपाणी। **मार्गान्**=योद्धृपादक्रमणानि **जिघांसया**= हन्तुमिच्छया। **समवर्त्तिषाताम्**=अभूताम्। **खलतालतायाः**=दुष्टतावल्ल्याः। **ऊर्द्धश्वास**—प्रश्वासाधीनः= उच्छ्वसन्नित्यर्थः। **समुत्तम्भितेति**— समुत्तम्भिते = सविकाशमुद्घूर्णिते नयने यस्य सः। **स्खलदिति**—स्खलतः च्यवतः रुधिरस्य धारया स्नपितं स्नावितं सोपानं येन सः। **प्राणान्** अत्याक्षीत् = असून् विजहौ। **करभम्**=करबहिर्भागम्। **कूर्परम्**=कफोणिम्। **रोमहर्षणीम्**= रोमाञ्चजनिकम् **घटनाम्**=तयोर्युद्धरूपां क्रियाम्। **असाधारणबन्धोः**=निष्कारणबान्धवस्य। **जीवनदीक्षागुरोः**= रक्षकस्येत्यर्थः। **चिन्तेति**—चिन्ताचक्रेण चूर्णितं मथितं चित्तं यस्याः सा। **स्वावस्थानम्**=स्वनिलयम्। अधुना—महाराष्ट्राजस्य दिल्लीगमनवृत्तान्तमुत्थापयति—'महाराष्ट्राजस्तु'—इति।

**भटवेषेण**=प्राहरिकयोद्धृवेषेण। **द्रुमेति**—द्रुमाणां वृक्षाणां निचयस्य संघस्य छायातः **द्रुतम्**=शीघ्रम्। **महात्मानमिव**=साधुमिव। **रेणिवाति**—रेणुना = धूल्या रूषितानि रतानि सर्वाणि अङ्गानि यस्य येन वा, **रामनाम्ना** अङ्कितं मुद्रितं उत्तरीयं यस्य सः। **यवनैः**सहेत्यर्थः। आत्मानम् = **स्वसम्बध्नन्तः**= सम्बन्धं कुर्वन्तः। **अर्धयवना** एव अर्धम्लेच्छा एव।

**पृ० ३०२**। **धन्यता**=उत्तमता **जघन्यता**= नीचता। **सकलभारताभिजनमान्यम्**= सकलभारतदेशतिलकम्। **मेदःपाटपरिवृढम्**= मेवाडदेशाधीश्वरम्। **अचिक्लिशत्**= अपीडयत्। **तस्यैव** = मानसिंहस्यैव **अध्वनि** = मार्गे **एषः**= जयसिंहः **अध्वन्यः**= पथिकः तन्मार्गानुग इत्यर्थः। **दुण्ढारेति**—दुण्ढारवन्याः या अवनी पृथिवी तस्या अध्यक्षः। **अस्य**= जयसिंहस्य। **मायामयम्**=कपटस्वरूपम्। **मन्त्रणम्**=सम्मतिम् **उरीकरोतु** स्वीकरोतु।

**जर्जरः** = जरया जीर्णः इति सावहेलमुक्तिः। **निर्जरसाम्** = देवानां राजा भवतु = अर्थात् युद्धे म्रियताम्। **स्वगर्जनेति**—स्वगर्जनं तर्जनं सिंहनाद एव ज्वलनो वह्निः तेन एतान् **वर्ज्यान्** = धिक्करणीयान्। **भारतद्रुहः** = भारतद्रोहिणः। **घनच्छायेति**—घना निबिडा छाया येषाम् एवम्भूता ये पलाशिनो वृक्षाः तेषां पटले = समूहे **अलीयत** = लीनो बभूव। **सचिन्तः** = चिन्तातुरः। **तादृक्षान्** = स्वामिप्रोक्तानुरूपान्। **पञ्चशतीम्** = पञ्चानां शतानां समाहारः पञ्चशती ताम्। **अनिच्छन्** = अकामयमानोऽपि। **दिल्लीं प्रतस्थे** = दिल्लीं प्रति प्रस्थानमकरोत्।

**पृ० ३०३। विमनायमानः** = दिल्लीम्प्रति यात्राकरणेन यवनानां विश्वासानर्हताञ्च चिन्तयन् दुर्मनायमानः। **ग्लायति** = म्लायति। **असनीया** = पराजेतव्या। **हरिद्रेति**—हरिद्राद्रवेण स्नापितौ क्षालितौ कपोलौ यस्य सः इव, **निःशोणितवदनः** = नीरक्तमुखः। विस्मृतः तुरङ्गः अश्वो येन सः। **पारिप्लवकुरङ्ग इव** = त्रस्तहरिण इव। **कुरङ्गः** = कुत्सितो रङ्गो वर्णो यस्य सः पर्यन्वेषितः गवेषितः सुरङ्गः बिलप्रदेशः पलायनमार्गो येन सः। **सवेपथ्विति**-सवेपथूनि = कम्पमानानि दुरङ्गानि म्लानानि अङ्गानि यस्य सः। **संवर्त्स्यति**-भविष्यति।

**समासादितेति**—समासादितः प्राप्तः भयानकः नवो रङ्गो येन सः एवम्भूतः **अवरङ्गः** = अवरङ्गजीव इत्यर्थः। अत्रानुप्रासः। येन—**भवानी नामक** खड्गेन-भवानीनाम्ना असिना, **भवेति**—भवे संसारे या अनीकिनी = अर्थात् शत्रुसेना तस्या यो विजयलाभः तद्वता भवता **आपदः** = विपत्तीः उत्तीर्णाः। 'न विश्वसिहि दिल्लीकलङ्कम्' = दिल्लीकलङ्के विश्वासं मा कार्षीरित्यर्थः। **स एव**-पूर्वश्रुतः स्वामी दृष्टः' इति सम्बन्धः। **काञ्चनेति**—काञ्चनचूर्णप्रचयवत् = सुवर्णचोदक्षातवत् रुचिरया शोभावत्या पीतया मृत्स्नया मर्दितानि सर्वाणि अङ्गानि यस्य सः। **कुङ्कुमतिलकः** = केसरतिलकः। **तुलसी**मालया लसत् द्युतिमत् विशालं विपुलं वक्षःस्थलं यस्य सः। **त्रिदण्डी** = त्रिदण्डिसंन्यासिवेशः।

**पृ० ३०४। योत्स्यामहे** = संग्रामं करिष्यामहे। **त्यद्व्यथ** = हास्यथ। **आकुलयिष्य** = सङ्कीर्णं करिष्यथ स्वर्गं प्राप्स्यथेत्यर्थः। **विजेष्यध्वे** = विजयं लप्स्यध्वे। '**अवर**ङ्गजीवस्य गृहावग्रहणी—घर्षणेन अलम्' इति सम्बन्धः

कथम्भूतस्य अवरङ्गजीवस्य—**कुक्कुटानां** चरणायुधानां मदाभिः मदस्वि[illegible]

यत् तुन्दं तेन तुन्दिलस्य महोदरस्य, तथा—**वारुण्या** = सुरया व्याघूर्णिते व्याचलिते नयने यस्य तस्य। **गृहावग्रहण्याः** = देहल्याः घर्षणेन चंक्रमणेन अलम् = न किञ्चित्साध्यमस्तीत्यर्थः। **करप्रदः** = तदधीनः। **पातकेति**—पातकानां पापानां पुञ्जेन समूहेन पतयालुम् = पतनशीलम्। **करेति**—करे हस्ते कलितः उत्तंसितः भवानीकरवालो येन तादृशः सन्नपि—**जाल्मस्य**—क्रूरस्य। **पाटच्चराणाम्** = लुण्टकानाम्।

**पृ० ३०५। नीरवाः** = तूष्णीकाः। **मांसैः** = पललैः **मांसलीक्रियेत** = स्थूलीक्रियेत। **भारतवसुमती** = भारतभूमिः। **विरोधिनाम्** = धर्मद्रुहां **पक्षम्** = आश्रयम् स्वबन्धून् = **जिघांसति** = हन्तुमिच्छति। **शालजाले** = ....................**निलिल्ये** = अच्छौप्सीत्।

**गगनगिरा** = आकाशवाचा। **घोष्यन्ते** = कीर्त्यन्ते। **आवृतवन्तः** स्वायत्तीकृतवन्तः। **भवानी** = दुर्गा।

**पृ० ३०६। उत्साहयते** = उत्कण्ठयते। **यवनरमणीनाम्** = म्लेच्छकान्तानाम्। **गर्भाः** = भ्रूणानि **गगनविहारी** = आकाशचारी **विहङ्गराजः** = गरुडः। **नागनाथः** = नागराजः **अनन्तः** = शेषः **घटे** = कुम्भे **मुद्रित** = पालेत।

**तस्य** = जयसिंहस्य **उष्णीषम्** = शिरोवेष्टनम्। **लौहशिरस्त्रम्** = आयसं शिरस्त्राणम्। **सकवचम्**—अङ्गम् = **महोपवेशनम्**—.........**दन्तावलम्**—गजम्। **वसुधाम्** = भूमिम् **विदार्य** = पाटयित्वा। **कमठपृष्ठे** = कूर्मत्रिके **रेखां**—लेखाम् **विधास्यसि** = करिष्यसि। अतिशयोक्तिरलङ्कारः। अवरङ्गजीवापेक्षया शिवबलाधिक्यं व्यङ्ग्यम्। तेन च व्यतिरेकः। **अरुणेन** = क्रोधरक्तेन **अपाङ्गेन** = कटाक्षेण द्रक्ष्यसि। **मूर्च्छयिष्यसि** = विचेतयिष्यसि।

**पृ० ३०७॥ विद्रोहस्य** = विरोधस्य '**दिल्लीत** आपदोऽप्युल्लङ्घ्य हनूमानिव लङ्कातः कुशलेन निवर्त्तिष्यते' इत्यत्रोपमा। **दैवज्ञैः** = ज्योतिर्विद्भिः। **दक्षकरेति**—दक्षकरे = वामेतरे पाणौ धृतः विकोशः = नग्नः खड्गः तलवारो येन सः। **वामे** = दक्षिणेतरे **चर्म**। **तम्** = शिवम्। **आच्छिन्दति** = आक्रम्य वर्त्तते। **ओतप्रोतम्** = विद्धानुविद्धम्। **व्याजहे** = अवाचि। **सोपकार्याः** = स्वस्वपटभवनानि। **विविशे** = विष्टम्।

**महामहिमति** = महामहिम्ना [illegible] द्विषेन आक्रान्तस्य आक्रान्तस्य

शिशिरस्य ऋतोरित्यर्थः । '**एतेन** ऋतुना दिनानां परिणाहः = दैर्घ्यं, **तमीनाम्** = रात्रीणाम् । **तनुता** = अल्पता, **पयोजानाम्** = पद्मानाम् **प्रसन्नता** = मनोहरता, **सलिलानाम्** = पानीयानां **सुखावगाह्यता** = सुखं स्नानयोग्यता **लुण्टिता** = अपहृता ॥ दक्षिणस्याम् = दिशि निर्वासितः प्रस्थापितः । **गगनतलम्** = आकाशमण्डलम् प्रायिकानां प्रालेयानां हिमसंहतीनां पातैः धूमधूसरितमिव धूमाक्रान्तमिव **विहितम्** = सम्पादितम् । **साम्प्रतम्** = अधुना शिशिरर्त्तौ । **तैलेति—तैलं** = तिलादिस्नेहः । **तापः** = आतपस्य अग्नेर्वा । **तूलिका** = तूलवतीरल्लकादिः **तरुणी** = युवतिः, ताम्बूलम् = नागवल्ली एतत्प्रभृतिषु । **कृतादरः** = प्रीतिमान् । **जगत्प्राणः** = समीरणः । **प्राणिनः** = जन्तून् **जडीकुर्वन्** = शीतलयन् **जवेन** = वेगेन **वहति** = सरति ।

**पृ० ३०८ ॥ आखण्डलेति**—आखण्डलः = इन्द्रः तस्य दिक् प्राची तस्याः कुण्डलतामात्रम् **उपेयुषः** = प्राप्तवतः, **शुष्का** = निर्बला तुण्डस्य मुखस्य छविः कान्तिर्यस्य तस्य **मार्त्तण्ड**मण्डलस्य = सूर्यमण्डलस्य **अचण्डानाम्** = अखराणाम् मरीचीनाम् **कोमलम्** = मृदु **उपतापम्** = औष्ण्यम् **सिषेवयिषूणाम्** = सेवयितुमिच्छूनाम्, **शाद्वलेन** = हरितेन **पथा** = मार्गेण, प्रयातानां = गतानाम् **वन्यजन्तूनाम्** = आरण्यजीवानां सिंहादीनाम्, **पादक्षेपेण** = चंक्रमणेन विहताः = विनाशिताः । **नैशीथ**श्चासौ मिहिकाप्रचयः अवश्यायवृन्दं तस्य भङ्गाः = अवस्थितिविशेषा एव, **आखेटस्य** मृगयायाः क्रीडाविनोदः तस्य कौतुकिनाम् = कुतूहलवताम् **पन्थानम्** = मार्गम् **उपदिशन्ति** = आदेशयन्ति । 'नैशीथमिहिकाभङ्गाः उपदिशन्ति' इति क्रियाकारकसम्बन्धः ।

**सुन्दरीति**—सुन्दरी = कान्ताः तस्याः संसर्गेण सहवासेन रहितं = शून्यमपि इदम् = शिवयात्राचरम् वीरमण्डलम् = शूरसमूहः, **प्रायिकः** सीत्कारो यत्र तत्, **व्रणितोऽधरो** यस्य तत्, **सरोमाञ्चम्** = उत्कण्ठितरोम । **सवेपथु** = सकम्पञ्चास्ति । **सवेगेति**—वेगेन सह वर्त्तमानाः ये घोटकाः अश्वाः तेषां—धावनेन न लक्षितः = नैव प्रतीतः **हिमपातवातघातः** = हिमसंसञ्चारानुविद्धः वातस्पर्शः । **निशीथिन्याम्**—रात्रौ । **वरूथिनी** = सेना **मन्थरिता** = स्थगिता ।

'**तदेवं** स्थिरप्रतिज्ञे—...वसन्तारम्भे दिल्लीनिकटे ...'

इति सम्बन्धः। कथम्भूतास्ते—पथिषु = मार्गेषु प्रायः **क्षेत्राणि** = केदारान् **निरीक्षमाणाः** = आलोकमानाः। कीदृशानि क्षेत्राणि—**गोधूमेति**—तत्र **गोधूमः** = सुमनः। यवाः = प्रसिद्धाः। आढकी = तुवरिका = पुनः—**परिपक्वैः** परिणतैर्धान्यैः कापिशानि..............पुनः—निविडैः = घनैरिक्षुभिः पौण्ड्रैः दुर्गमाणि दुर्लङ्घ्यानि, पुनः—छिद्यमानानि कृत्यमानानि मुद्गमापवज्राणि येषु तानि तत्र—मुद्गः = मकुष्टकः। **तत्क्षणेति**—तत्क्षणे तस्मिन्नेव क्षणे श्च्योतितः क्षारितश्चासाविक्षुरसः तं रसयन्तः आस्वादयन्तः पिबन्त इति यावत्। **नवीनान्** = नूतनान् सद्यस्कानित्यर्थः **सतीनान्** = वर्त्तुलान् 'मटर' इति प्रसिद्धान्। **स्वादमानाः** = कवलयन्तः। **कृत्तेति**—कृत्तानां कलमानां..............पुष्कलपलेपु महापूलेपु **वृषभावली**चालनव्याजेन = बलीवर्दभ्रामणोपधिना। **धान्यलवनकार्यम्** = व्रीह्याद्यन्नकण्डनकृत्यम् **सम्पादयताम्** = कुर्वताम्, तथा **खट्वाः** शय्याः परित्यज्य **सकौतुकम्** = साश्चर्यम् महाराष्ट्रवीरमण्डलम् = ......... **अवलोकयताम्**—पश्यताम् **खेटखर्वटवासिनाम्** = —.............. **निरीक्षणकौतुकम्** = दर्शनकुतूहलम्। **आवहन्तः** = धारयन्तः, **सूच्यग्रैः**—सूचीनां पुरोभागैः **अहिफेनफलानि** = खाखस फलानि **निर्यासार्थम्** = तदीयनिर्यूषार्थम्। **घर्षयन्तीनाम्** = कण्डयन्तीनाम्। **कलमान्** शालिधान्यानि **कृत्तन्तीनाम्** = छिन्दन्तीनाम्, **आरण्यकेति**—अरण्ये भवा आरण्यका ये गोमयाः गोः पुरीषभूताः 'गोबर' पदवाच्याः तेषां **राशीन्** = संघान् **चिन्वतीनाम्** = राशीकुर्वतीनाम् **ग्राम्यचेटीनाम्** = ग्रामीणदासीनाम्। शिवराजयशोमयानि गीतानि **शृण्वन्तः** = कर्णैः पिबन्तः। **अङ्कर्तुरसेति** अङ्कपदेन षट् शिक्षादीनि षडेवाङ्गानि भवन्ति, 'ऋतु' पदेनाऽपि षट्संख्या, ऋतवोऽपि षट्, रसा अपि मधुराद्याः षट्, इन्दुः चन्द्रः, अनेन पदेन एकसंख्याग्रहः। एवम्—'अङ्कानां वामतो गतिः' इति नियमेन (१६६६) इत्येवंरूपो विक्रमाब्दः फलितः, तस्य वर्षस्य आरम्भे दिल्लीनिकटं प्रापुरिति।

पृ० ३०६ ॥ **गिरिग्रामसमीपे**='गुडगांव' इति प्रसिद्धे। **सादिनः** = अश्वारोहाः। **महाराष्ट्रेति**—महाराष्ट्राधीशस्य शिववीरस्य समागमसंवादः = प्राप्तिसूचना तस्य कथनाय। **एकाकी** = एकल एव। **एकादाकिन्चासहाये** (५।३।५२) इति सूत्रेण एकशब्दात् स्वार्थे आकिनिच् **महाराष्ट्रमेदनीयः** = 'महाराष्ट्रमेदनीशः' इति पाठं सम्यञ्चं प्रपद्ये। **मालयमाले** = हिमशैशीतलाभिः। [illegible] = अश्मशिलायाम्।

**श्यामश्यामैः** = अतिनीलैः, **तरङ्गपटलैः** = वीचिवृन्दैः । **गगनेति**—गगनमेव महासागरः तस्य फेनपटलमिव डिण्डीरपुञ्जमिव आचरन्तम् **तारकापटलम्** = नक्षत्रमण्डलम् **दीपेति**—दीपानां प्रचयैः समूहैः सूचितं प्रकटितं प्रासादानां हर्म्याणां मण्डलं पटलं यस्याः सा ताम् **यवनराजधानीम्** = अवरङ्गजीवराजधानीम् । **निभालयन्** = आलोकमानः **मुहूर्तम्** = घटिकाद्वयम् **निभृतम्** = तूष्णीमेव **अवतस्थे** = स्थितोऽभूत् । **वास्तव्याः** = **तद्देशवासिभिः** = हीरातादिदेशवासिभिरेव **भुज्यते** = अधिष्ठीयते । **सनातनधर्मस्य तिरस्कारः** = वैदिकधर्मस्योपमर्दः । **भव्यम्** = कल्याणम् । **उदारगम्भीरा** = उदारा गम्भीरा च । **विजिज्ञासमानैः** = विचिकित्समानैः । **सावधानतया** = सचेतनतया ।

**पृ० ३१० ॥ स्वामिमुखम्** = शिववीराभिमुखम् **मधुराधीशस्य**= श्रीकृष्णस्य **प्रसादकुसुमम्** = प्रसादपुष्पम् । **अलौकिकाभ्यासपरायणाः**= लोकोत्तरसिद्धिसामर्थ्यशालिनः । **अनुग्रहः** = कृपा । **सम्राजा**=यवनराजेन सह । **सतर्कैः** = सावधानैः । **साक्षात्कारः** = परिचयः मूलाकृतिरित्यर्थः । **बहु न** स्थेयम् = चिरं न वसनीयम् । **निःशस्त्रेण** = शस्त्रशून्येन **तदीयः**= यावनो राजकीयः । **अकारणम्** निर्हेतुकम् । **स्निह्यति** = प्रीणाति ।

**पृ० ३११ ॥ अमार्ष्टाम्** = पर्यप्रोञ्छताम् । **पर्कटीवृक्षस्य** = **भिन्नेति**—भिन्नाञ्जनवत् = स्फुटिताञ्जनवत् श्यामला = कृष्णा या छाया ततः । **कष्टम्** = दुःखम् । **सोढ्वा** = मर्षयित्वा । **अपेक्षस्व** = पालय । **नीलेति**—नीलवसनपरिधानस्य = नीलवस्त्रपरिच्छदस्य..................................

**विरहितपादभूषणा** = भूषणशून्यपादा । **अन्धतमसवशात्** = गाढान्धकारकारणात् **अस्पष्टम्** = अप्रकटं दृष्टं रूपं यस्याः सा । **यवनसुन्दरी** = यवनयुवतिः । **सपूर्वेति**—पूर्वकायनमनेन सह यथा स्यात् तथा **प्रणम्य** = प्रह्वीभूय ।

**पृ० ३१२ ॥ कृतेति**—कृतः जातः हिमकणानां पातो येन, कालिन्दीकूलेन = यमुनातटेन आघातो यस्य तादृशं **वातम्** = शीतलतरं पवनमित्यर्थः **सहसे** = मर्षयसे । '**कथं** वा—न भीतासि ' इति सम्बन्धः । **घोरे**=भयङ्करे। **कलिन्देति**—कलिन्दतनयायाः यमुनायाः उत्तुङ्गानामुच्चानां तरङ्गानां वीचीनां भङ्गेन अवस्थानेन भयङ्करे भीतिजनके **सर्जेति**—सर्जाद्या वृक्षविशेषाः **सरसकुलीनम्** = ... [illegible] ... । **अवगच्छ** = जानीहि ।

'**अहो** अपि'—अत्र—'**ओत्**' ( १।१।१५ ) इति सूत्रेण सन्ध्यभावः । **हरिद्रेति**—हरिद्राया निशाया रजन्या द्रवेण रसेन क्षालितं यत् तालीदलं तत्प्रख्यां तत्सदृशीं **कपोलपालीम्** = गण्डस्थलं **वहति** = धत्ते । तव विरहेण कृशा वर्तत इति भावः । **दिल्लीति**—दिल्लीवल्लभस्य यवनेश्वरस्य क्रोडे गोदे अतिवाहितं गमितं बाल्यं याभिः तासां महाराजकुमारीणां किं दुरापम्" इति सम्बन्धः । **निशीथे** = अर्धरात्रे ।

**पृ० ३१३** ॥ **रज्यन्ते** = अनुरक्ता भवन्ति । यस्मिन् **अनुरागः** = प्रेमा । **तद्लाभः** = तद्प्राप्तिः एव **खेदस्य** = दुःखस्य । **अनुगृह्णाति**—दयते । **तत्रभवतीम्** = माननीयाम् । **अनुमन्येत**=अङ्गीकुर्यात् । **प्रस्तुतः**= मग्नः । '**स्वहस्तेन** श्रीमंत्याः स्वेदानेपतुम्' इत्यत्र विवाहयितुमिति व्यङ्गथम् । **तद्गतचित्तः** = तस्यां लीनमनाः । **दुर्घटः** = कठिनोपायसाध्यः । **गूढसञ्चाराः** = गुप्तागतिः **कृष्णाभिसारिका इव** = कृष्णं प्रति प्रस्थिता अभिसारिकेव। '**कान्तार्थिनी** तु या याति सङ्केतं साभिसारिका' इति। **वीक्ष्येथाः**= आलोक्येथाः । **पतद्वये** = रसनारीपक्षे मत्यक्षे च **विपत्तिः** = अनिष्टम् । **शिविरम्** = सेनावाटकम् । **सुषुपतुः** = निद्रां भेजाते । **परेद्युः** = अपरस्मिन्नहनि । **विहितेति**—विहिता कृता स्नानभोजनादिक्रिया यैः तैः **मित्रगणैः**= माल्यश्रीकप्रभृतिभिः सह **समुल्लोचतले** = वितानाधःप्रदेशे । **प्रतीहारेण**= द्वारपालेन ।

**पृ० ३१४** ॥ **अम्बरराजकुमारः** = जयसिंहसुतः । **वीरोचिताम्**= वीरेषु योग्याम् । **तेजस्विनीम्** = प्रतापशालिनीम् । **मुमुदे** = जहर्ष । विस्फारितनयनम्' इति क्रियाविशेषणाम् । **आदेशेन** = आज्ञया । **क्षात्रियकुलावतंसस्य** = राजन्यवंशभूषणस्य । **चण्डः** = खरः । **चण्डमरीचिः** = सूर्यः ।

**पृ० ३१५** ॥ **प्रतीपम्**=विरुद्धम् अनिष्टमित्यर्थः **समरेति**—समरः संग्राम एव ज्वलनो वह्निः तस्य ज्वालाः अर्चींषि । **चन्द्रहासम्** = स्वकीयं भवानीनामकं खड्गम् । **समास्रंसयन्** = दोलयन् । **सम्मुखमुकुटे**= पुरःस्थापितदर्पणे । **प्रबलप्रवाहा** = बलवद्वेगवती । **यमुना** = कालिन्दी । **नौकापरम्पराभिः** = तरणिश्रेणीभिः । **आयोजितः** = साधितः **सेतुः** = **यातायातम्** = गमागमम् । **पुष्परथम्** = चक्रयानम् ।

**पृ० ३१६** ॥ **भूषणभूषितान्** = भूषणैर्मण्डितान् । **सौवर्णवल्गान्**= हिरण्मयरश्मीन् । **धावनेति**—धावनसंवेगेन यो महोत्साहः तेन खुरखुरायिताः खुरा·

शङ्का येषाम् । **कथं कथमपि** = अतिवलेन **संयस्यमानानाम्**—निरुध्यमानानाम् । **कुसुमैरिव** = पुष्पैरिव । **फेनप्रपातैः** = डिण्डीरप्रक्षेपैः । परिपूजिता = अर्चिता वसुंधरा पृथ्वी यैरिति **अत्रोत्प्रेक्षा** । **धावनधुरन्धराणाम्** = पलायनशूराणामित्यर्थः । **सैन्धवानाम्** = अश्वानाम् । **हेषाभिः** = हेषणैः । **अध्वनीनान्** = पथिकान् **वधिरान्** = श्रुतिवर्जितान् **अकार्षुः** = व्यधुः । **साक्षतानि** = अक्षतैः सहितानि । **मौक्तिकेति**—मौक्तिकमालाभिः कलितः व्याप्तः कण्ठो यस्य तम् । **सौवर्णेति**—सौवर्णकिरणैः = हिरण्यमयूखैः कलितं कर्णद्वयमध्यं यस्य तम् । **राजतकुसुमावलि**शोभितलाङ्गूलम् = दुर्वर्णपुष्पप्रचयद्योतितपुच्छम् । **प्रकाण्डम्** = महीयांसम् । 'वाजिनमारूढवान् भूपणकवि' रिति सम्बन्धः । **भास्वान्** = सूर्यः । **मृदुलमयूखः** = कोमलकिरणः । **संवृत्य** = भूत्वा, **भुवमभिपतति** = अस्तमुपयातीत्यर्थः । **अभ्रंलिहानाम्** = मेघस्पृशाम् अत्युच्चानामित्यर्थः **कलितः** = सम्प्रकटितः अपरमेघाडम्बरः द्वितीयवारिदानुकृतिः यैः तेषाम् । **समुद्धताः** = ऊर्ध्वं दोधूयमाना ध्वजाः पताका येषां दिल्लीहर्म्याणाम् । **छाया** = सूर्यप्रिया, कर्त्तृपदमिदम् । **कलिन्दनन्दिन्याः** = यमुनायाः **श्यामताम्** = कार्ष्ण्यम् **द्विगुणयति**—वर्धयति । **अभितः** सेतुम् = सेतोः समन्तात् 'सहस्रशो नौका इतश्चेतश्च सञ्चरन्ति' इति सम्बन्धः । नौकाः वर्णयति—' **तनव** ' इत्यादिना । **तनवः** = लघ्व्यः । **महत्यः** = दीर्घा विशालाश्च, **सपटला** = सच्छदयः । **अपटलाः** = छदिरहिताः । **साट्टाः** = द्विपटलाः चन्द्रशालासहिता इत्यर्थः । **निरट्टाः** = अट्टालिकाहीनाः । **हंसमयूरेति**—**हंसाः** = कादम्बाः **मयूराः** = बर्हिणः । **वर्त्तकाः** = वर्त्तकाद्याः पक्षिविशेषाः **सारसाः** = **कारण्डवाः** = प्लवाः इत्यादिवत् विविधाः नाना आकारा यासां ताः । **चित्रविचित्रिताः** = चित्रैः आलेख्यमूर्त्तिभिः चित्रिताः लिखिताः ।

**पृ० ३१६ ॥ समञ्जीरेति**—समञ्जीराणां = मञ्जीरसहितानां क्षेपणानां नौकादण्डानां झणत्कारेण आकुलीकृताः विह्वलतां प्रापिताः कमठाः कच्छपाः याभिः ताः ।

तटस्थाः = तीरे वर्त्तमानाः, **तरणिस्थाः** = नौकायां वर्त्तमानाः । **सेतावपि** च यातायातम् = बन्धे अपि गतागतं कुर्वाणाः **परःसहस्रशः** = सहस्रसङ्ख्यातोऽप्यधिकाः बहुला इति तात्पर्यम् । **नागराः**=पौराः । **कन्धरम्** = ग्रीवां **परिवर्त्य**=मोटयित्वा । **चक्षुषी** = नेत्रे **विस्फार्य** उद्घाट्य । अङ्गुलिनिर्देशेन स

**कालियसदनम्** = कालियाख्यनागगृहम् । **काकोदरम्** = सर्पम् । **निर्मथ्य** = पराजय्य । **नन्दः** = गोपराजः यशोदापतिः ।

'तत्र च प्रघाणस्थैः—सकौतुकं निरीक्षमाणः । **प्रघाणस्थैः** = अलिन्दभूमौ स्थितैः । 'प्रघाणप्रघणालिन्दाः बहिर्द्वारप्रकोष्ठके' इति ( अमरः ) । **परिवर्तितग्रीवैः** = विलोलितकन्धरैः । **लोलेति**—लोलश्चपलः ( ऊर्ध्वं निरीक्षणात् ) उष्णीषबन्धो येषां तैः । **भटैः** = शूरैः । **आपणोपविष्टैः** = आपणेषु हट्टेषु स्थितैः । **स्तब्धानिश्चला** = शङ्कुला पूगीफलादिकृन्तनसाधनं येषां तैः । **स्वर्णकारैः** = पश्यतोहरैः । **कर्णे** श्रवणे अर्पिता दत्ता लेखनी तूलिका यैः तैः **चित्रकरैः** = कारुभिः । **समुपोत्तितः** = परत्र स्थापितः तुलादण्डो यैः तैः **वाणिजैः** = वणिग्भिः, विशिथिलः विशेषेण शैथिल्ययुक्तः स्खलितश्च मानदण्डो येषां तैः **पटविक्रयिभिः** = वस्त्रविक्रेतृभिः । **रुद्धसीवनैः** = त्यक्तसूचीव्यापारैः **स्यूतिकारैः** = दरयोजिभिः । **विस्मृतं** हाराणां ग्रन्थनं गुम्फनं यैः तैः मालाकारैः माल्यनिर्मातृभिः पुष्पहरैरित्यर्थः । **घण्टापथे** = राजमार्गे ।

**आशीर्वचनेन** = आशीर्वादेन स्फुरिताः चलिता ओष्ठाः येषां तैरिव ब्राह्मणैः विप्रैः ।

**पृ० ३१८ ॥ परिवर्जिता** परितस्त्यक्ता क्रीडा खेला यैः एवंभूतैः बालकैः। **गवाक्षस्थैः** = गोक्षस्थैः । **कुलयुवतिजनैः** कुलीनाभिस्तरुणीभिरित्यर्थः । कीदृशैः कुलयुवतिजनैः—**शिथिलितव्रीडैः** = किञ्चित्परित्यक्तलज्जैः । पुनः—**अङ्गुल्यग्रेति**—अङ्गुल्यग्रेण अपसारितानां परकृतानां तिरस्करिणीनां जवनिकानां विच्छेदं अवकाशे प्रहितं कटाक्षावलोकनं नेत्रप्रान्तभागचालनं यैः तैः ।

**कोऽयमित्यादिना** द्रष्टृव्यापारं दर्शयति—**शास्तिखानेति**—शास्तिखानस्य या शास्तिः शासनं तत्प्रतिपादकं यच्छास्त्रं नीतिरूपं तज्ज्ञोऽयम् शास्तिखानहन्तेत्यर्थः । एवं विजयपुरेत्यादि स्पष्टम् । **मन्त्रमान्त्रिकः** = गारुडिकः । **मन्दम्** = शनैः । **अर्धोदीरितान्** = अर्धकथितान् । एतेन द्रष्टॄणां दर्शनकुतूहलं व्यज्यते । **कैश्चित्** इति 'यवनै' रित्यनेनान्वेति—**कुक्कुटाण्डेति**—कुक्कुटाण्डानां चरणायुधाण्डानां गणनायामासक्तैः । वर्तिकानिचयस्य वशीकारे व्यापृता मुष्टयो येषां ते वर्तिकाक्रीडावाजैः । **मञ्चारूढैः** = खट्वारूढैः धूमपानपरायणैः । **अक्षक्रीडासक्तैः** = पाशकखेलनपरैः । **एतेन** = श्रीशिववीरेण **सक्रूरकटाक्षम्** = क्रूरदृष्टिपातमहितम् । **कथाविषयीक्रियमाणः** = वार्त्तासु कथ्यमानः । **समयस्कारम्** = ...त्वविस्मयसहितम् । **स्वापणे** = स्वीये हट्टे

समुज्झितानां प्रसारितानां **दीनाराणाम्** = मोहराणाम् **गणनासक्तान्** = सङ्ख्यानलगितान्। रत्नेति—रत्नानां पद्मरागप्रभृतीनां निचयस्य राशेः परीक्षणाय प्रहितं दत्तं सूक्ष्ममीक्षणं यैः तान्।

**अलङ्काराणाम्** = स्वस्तिक—रुचक—कुण्डल—दामिनीप्रभृतिभूषणानां क्रयविक्रयव्यवहारे लानादानव्यापारे संसक्तान् = खचितान्। **गवाक्षस्थः** = वातयने स्थितो यो गणिकाजनः पण्यस्त्रीलोकः तस्य भ्रूभङ्गे भ्रुकुटिचालने निहिता दृष्टयो यः तान् **वीक्षमाणः** = पश्यन्। **सपरिजनः** = स्वपरिचारिकवर्गसहितः **महाराष्ट्रराजः** मार्गान्तरं प्राप्त' इति सम्बन्धः। **प्रोच्चापस्त्यम्** = अत्युच्चं सदनम्।

**पृ० ३१९ ॥ महामज्जितम्** = 'जुम्मामास्जिद' इति प्रसिद्धम्। **परतः** = अग्रतः। **कियन्तम्** = किञ्चिदित्यर्थः। **अध्वानं** = मार्गम्। **अतिक्रम्य** = लङ्घयित्वा। **कैलाशेति**—कैलाशशिखिरखण्डस्य आभेव आभा यस्य तत् **महाहर्म्यम्** = महाप्रसादम्। **ग्रहाणाम्** = सूर्यादीनाम् **गतयः** = चलनानि। **रोद्धुम्** = प्रतिबन्धं कर्तुम् **उत्सुकाः** = उत्कण्ठिताः। **कक्षायाम्** = गेहप्रकोष्ठे। **पुष्परथान्** = चक्ररथान्। **विविधेति**—विविधानां अनेकेषां मण्डलेश्वराणां यातायातैः गमागमैः सङ्कुलं = व्याप्तम्। **प्रशस्तम्** = विशालम्। **प्राङ्गणम्** = चत्वरम्।

**पृ० ३२० ॥ अजिरम्** = प्राङ्गणम्। **सार्धेति**—सार्धहस्तद्वयस्य उच्छ्रायः औन्नत्यं यस्याः सा चासौ वेदिका। **सकाचेति**—काचपट्टिकसहिताः हरित—कपिश—श्यामलादिभिः वर्णविशेषैः रञ्जिताः कपाटाः येषां तानि कोष्ठानि। **सौवर्ण्यः** = हिरण्मयाः। **दन्तावलानां** गजानां **ग्रैवेयकघण्टा** = ग्रीवाभूषणभूता घण्टा निर्मीयन्ते रच्यन्ते। **परतः** = अन्यतः **पाटीरेति**— **सैन्धवश्रृङ्गाराय** = अश्वमण्डनाय। **गुम्फ्यन्ते** = ग्रथ्यन्ते। **कौशेयास्तरणानाम्** = कृमिवसनास्तरणानाम्। **प्रान्तेषु** = कोणेषु। **सौवर्णसूत्रव्रततयः** = हिरण्यसूत्रवल्लयः सीव्यन्ते = सूच्या रच्यन्ते। **राजतच्छत्राणाम्** = दुर्वर्णच्छत्राणाम्। **परिधिषु** = गोलभागेषु **हीरकजालानि** = हीरकमणिसमूहाः। **हाटकमञ्चानाम्** = सुवर्णमञ्चानाम्। **पन्थानमुभयतः** = मार्गस्योभयपार्श्वे इत्यर्थः। **सौवर्णपात्रेति**—सौवर्णपात्राणि आधारा येषां ते **सकुसुमाः** = सपुष्पाः। **पुंस्कोकिलाः** = पिकाः। **कीराः** = शुकाः। **सारिकाः** = मैनिकाः पक्षिविशेषाः। **कलविङ्काः** =

चटकविशेषाः । **लावाः** = वर्तिकाविशेषाः । **चकोराः** = चन्द्रिकाप्रियाः । **चातकाः** = स्तोकका: । **चपलितचञ्चवः** = चञ्चलितत्रोटयः। **पक्षतेः** = पक्षाणां समूहस्य कण्डूयनेन कर्षणेन मनोहराः हृद्याः । **पुच्छानां** सारणे विकाशने सङ्कोचने निमीलने चञ्चलाः चपलाः । **वीणायाः** विपञ्च्या रणनस्य शब्दस्य स्पर्धि = ईर्षालु ( तत्सदृशमित्यर्थः ) कूजितं येषां ते **दाडिमद्राक्षा-**खण्डस्य त्रोटने भञ्जने तत्पराः लग्नाः त्रोटयः चञ्चवो येषां ते । **आरोहमारो-हम्** = आरुह्य आरुह्य । **आन्दोलमान्दोलम्** = दोलित्वा दोलित्वा पक्षिणः **समुल्लसन्ति** = शोभन्ते । **सौरभेति**—सौरभपटलेन = सुगन्धपुञ्जेन व्याप्तं दिगन्तरम् = दिशां भागो यत्र तत् **उद्यानम्** = आरामः । **तदन्तस्थ-कुञ्जेषु** = उद्यानमध्यवर्तिलतापिहितद्वारेषु । **वीणानादः** = तन्त्रीस्वनः ।

**पृ० ३२१॥ महासिंहासनम्** = राजपीठः । **तदेवाऽध्युषितः** = तदारूढः **भारतसम्राट्** = भारतचक्रवर्ती **दृष्टः** = आलोकितः । **कलितक-नकदण्डाः** = धृतसुवर्णदण्डाः । **करवालैः** = असिभिः आकालितः व्याप्ताः कटिप्रदेशा येषां तैः । **सौवर्णदण्ड**भित्तिकादत्तहस्तावलम्बाः=सुवर्णदण्डैः निर्मितासु रचितासु भित्तिकासु दत्तो हस्तावलम्बो यैः ते **मण्डलेश्वराः** = माण्डलिका राजानः । सेनापतयश्च ।

**राङ्कवास्तरणेति**—रंकुर्मृगविशेषः तस्य इदं राङ्कवम्, तानि आस्तरणानि तैः आच्छन्नानि प्रावृतानि **सोपानानि आक्रम्य** = प्राप्य वेदिकामारूढाः = स्थिताः । **कुमारेण** = जयसिंहपुत्रेण **इङ्गितः** = चेष्टया बोधितः । **पंक्तिम्** = राजिम् **भेजिरे** = प्रविष्टाः । **मुद्रिकाम्** = अंगुलीयकम् । **निजाञ्जलौ** = ......**अन्यतः क्षिपेत्क्षणे**=शिवमुपेक्ष्य अन्यत्रैव दत्तदृष्टौ सम्राजि । **जगत्पाल-कानाम्**=श्रीमतां सम्राजाम् । **करुणावलोकनम्**=कृपादृष्टिम् । **सभाजयति**= कामयते । **अथ** = कस्यचिदुक्तेरनन्तरम्, **दृष्टिम्** = चक्षुः **परिवर्त्य** = मोटयित्वा **वाचंयमः** = मुद्रितमुख एव । **पाञ्चसाहस्रिकैरि**ति स्पष्टम् । **किराततरसमिव** = तिक्तकरसमिव **पिबन्** = आस्वादयन् । “ कौडाघुट्टकरके ” इति पञ्जाबी भाषायाम् । **सकष्टम्** = सदुःखम् ततः **बभ्राम** = भ्रमणं ददौ । **चक्षुषैव** = दृष्ट्यैव **वारितः** = मन्दीकृतः । **अरुणमुखः** रक्तास्यः अत्यन्तं क्रुद्ध इत्यर्थः **तूष्णीमस्थात्** = मौनी तस्थौ । **सभाभङ्गः** = सभाविसर्जनम् । **अवरोधम्** = अन्तःपुरम् । **जनसमूहः** = जनता । **महाहर्म्यम्** = महा-प्रासादः । **प्रात्याह्निकेति**—प्रात्यहिकवस्तुजातं = प्रतिदिनापेक्षितं भक्ष्यभोज्या-

दिवस्तुजातम् तेन। महाराष्ट्रस्य अवहेलनम् अवज्ञानं तस्य दर्शनेनेव ग्लानः = क्षीणः । **यवनाखण्डलस्य** = यवनेन्द्रस्य **दुरभिसन्धिम्** = दुष्टं हृदय-भावम् **जानानः** = विद्वान् इव **पाण्डुमुखमण्डलः** = धूसरितविम्ब इव **राघवाचार्यकथितम्** = राघवाचार्यभणितम् । **कोपेनेव** = क्रोधेनेव **शोणः** = कोकनदच्छविः रक्त इत्यर्थः। **भास्वान्** = सूर्यः अस्तञ्जगाम । **तदागारस्य** = नियतीकृतमहाप्रसादस्य ।

**इति ( नूतन ) शिवराजविजयपताकायां**
**दशमो निश्वासः ।**

---

॥ ॐ ॥

# एकादशो निश्वासः ।

सङ्गे ननु दुर्जनधूर्त्तमतेः,
कष्टं नहि कस्य भवेदतुलम् ।
इङ्गालकपण्यकरस्य मुखं,
नीलीललनापरिचुम्बितकम् ॥ १ ॥
दुर्जनजनविश्वासो कर्त्तुर्घाताय नात्र सन्देहः ।
गर्भो यथाऽश्वतर्या दृष्टो नाशाय नैव सौख्याय ॥ २ ॥
हंसो न भेकसङ्गी सङ्गी चेद्धन्त कश्मलं भजते ।
पल्वलसेवो भेको मानसमाननक्रियाप्रियो हंसः ॥ ३ ॥

दशमे निश्वासे अम्बराधीशानुमत्या दोलायमानहृदयस्यापि शिववीरस्य दिल्लीयात्रां निरूप्य दिल्लीश्वरसाक्षात्कारञ्च वर्णयित्वा शिववीरप्रवेशमुपसंहृतवान् सम्प्रति एकादशनिश्वासे शिववीरस्य कारीकरणं वर्णयितुकामः तत्कथोपक्षेपकविधया 'शेते' इति 'उपकारिणि' इति 'पुरासरसि' इति प्रतीकत्रयमुद्धरति उपन्यासन्यसनचतुरधुरीणोऽभिनवो 'व्यासो' महाकविरिति । धृतानां श्लोकानां संक्षिप्तार्थस्तु—* 'करी'=गजः 'मकश पादविपादिकायां' मशकस्य क्षुद्रतरस्य जन्तोः पादस्फोटे 'शेते'=निद्राति अर्थात् पूर्वन्तु मशकस्य पादस्फोट एवासम्भवः कुतस्तत्र करिणः शयनम् यथा चैतत् असम्भव्यपि केनापि योगादिसामर्थ्यविशेषेण घटेत तद्वदेव शिवस्य अम्बराधीशयोगेन दिल्लीकलङ्काऽवरोधः ।

**उपकारिणि**=† उपकारकारिणि '**विश्रब्धे**=' विश्वासमापन्ने **शुद्धमतौ**=निर्मलहृदये '**यः**' '**पापम्**' कश्मलम् '**समाचरति**'=करोति । हे ! भगवति ! '**वसुधे** !'=पृथिवि ! तम् ‡ '**असत्यसन्धम्**'=मिथ्या-

---

* इयं समस्याऽस्मद्गुरुचरणपूरिता इत्थं पठनीया—

कुद्धस्त्रिशंकुसुरलोकगतेर्निरोधात्
प्राचीं स गाधितनयो लघयंस्त्रिलोकीम् ।
तां सृष्टिमारभत योगबलेन यस्यां
शेते करीमशकपादविपादिकायाम् ॥ १ ॥

† शिववीरेण दिल्लीश्वरस्य महानुपकारः कृत इति स्पष्टमेव रसनायदिवृतेन । ‡ दिल्लीश्वरेण स्ववाङ् मिथ्यैव कृता ॥

प्रतिज्ञं कथं '**वहसि**'=धारयसे। शोच्यमेतादृशं मृषावादिनो दुष्टस्य जीवनमिति भावः।

'**पुरा** सरसि' इति—**मानसे**=मानसाख्ये सरोवरे, **विकचानि**=विकाशभाञ्जि पुल्लानीति यावत् यानि **सारसानि**=सरसीरुहानि कमलानि, तेषामालिः राजिः तस्याः सकाशात् स्खलद्भिः च्यवद्भिः परागैः पुष्परेणुभिः सुरभीकृते सुगन्धीकृते **पयसि**=नीरे यस्य ( उदात्तप्रकृतेर्विशिष्टस्य महाशयस्य ) पुरा वयो यातम्, स **मरालकुलनायकः**=राजहंसशिरोमणिः मिलद्भिः—समुच्चयीभवद्भिः अनेकैः भेकैः मण्डूकैः आकुले व्याप्ते **पल्वलजले**=अल्पसरोवारिणि कथं वर्त्तताम्=केन प्रकारेण व्यवहरताम् निवसतु वा, हे! नीच! इति त्वं कथयेत्यर्थः। हंसान्योक्तिरियम्। अत्राऽ**प्रस्तुतप्रशंसालङ्कारः**। 'अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया' इति लक्षणात्। अत्र वर्णनीयत्वेन प्रस्तुतः कश्चित् सार्वभौमाश्रितोऽपि सूरीश्वरः तद्विरहान्निराश्रयं तमालोक्य 'क्षुद्राश्रितोऽयं पीडितो भविष्यति' इति दृष्यन्तं कमपि नीचम्प्रति कस्यचिदुक्तिरियम्। तस्मादत्र—अप्रस्तुतहंसप्रशंसा प्रस्तुतस्य क्षुद्राश्रयसेवां स्वप्नेऽपि नेच्छत उदात्तनायकस्य प्रशंसापर्यवसायिनीति ज्ञेयम्। किञ्च तादृशस्य महापुरुषस्य क्षुद्रानाश्रयणे सार्वभौमाश्रयेण वयोयायनं ( पल्वलानाश्रयणे मानसे वयोयापनं हंसस्येव ) हेतुरिति वाक्यार्थहेतुकोऽत्र काव्यलिङ्गालङ्कारोऽपि। '**हेतो**र्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति तल्लक्षणात्। अत्र—उदात्तो नायकः। तल्लक्षणन्तु—'साहित्यसारे' यथा—'**स्थिरो** निगूढालङ्कारो धीरोदत्तो दृढव्रतः' इति। दृढेत्यनेनौदार्यम्। एतदुदाहरणं 'भामिनीविलासे' यथा—

> **आपद्गतः खलु महाशयचक्रवर्त्ती**
> **सन्दर्शयत्यकृतपूर्वमुदारभावम्।**
> **कालागरुर्दहनमध्यगतः समन्तात्**
> **लोकोत्तरं परिमलं प्रकटीकरोति॥** इति।

एवमन्यदपि ज्ञेयम्। 'पुरा सरसि—' इत्यत्र 'पृथ्वी' वृत्तम्। 'जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणात्।

**पृ० ३२२॥** **निशीथप्राया**=अर्धरात्रप्राया **रजनी**=रात्रिः **उष्णः कालः**=घर्मर्तुः। **बालानाम्**=शिशूनाम्। **रोदनस्य**=विलपनस्य **आर्त्तनादः**=पीडास्वरः **व्यजनचालनस्य**=पङ्खादोलनस्य **निद्रामन्थरान्**=प्रमीलासालसान्। **व्याकुलयति**=विह्वलयति। **'जलं जलम्'** इत्यादि वर्णतानि स्वरूपमभिनयति। निगदव्याख्यातमिदम्।

पृ० ३२४ ॥ **अट्टेभ्यः** = अट्टालिकाभ्यः । **ध्वनिः** = शब्दः । **भेरीनादसहचरितेन** = महाढक्कानादोपेतेन **वंशीनादेन** = वेणुनादेन **सनारब्धः** = सहैवोपक्रान्तः । **मध्यनिशीथसूत्रकः** = अर्धरात्रसूचनाजनकः । **नवोढानाम्** = सद्योविवाहितानाम् । **मञ्जीरेति**—मञ्जीरस्य याः किङ्किण्याः क्षुद्रघण्टिकाः, नूपुरम् = पादभूषणम् वलयः = कङ्कणम् तेषां शिञ्जितं = शब्दः । भूषणानान्तु शिञ्जितम्' इत्यमरः । **एतद्रसभञ्जकः** = नवोढानूपुरादिशिञ्जितानन्द विघ्नकरः । **आकर्णि** = अश्रावि । **प्रहरिणाम्**=यामिकानाम् । **कर्णकषायः**= श्रोत्र वैरस्य ( पीडा ) करः । **नादः** = ध्वनिः । ' **महाराजस्तु**—निद्रां नालभत । **अथ**—एकामासन्दीम् अध्युवास ' इति सम्बन्धः । **उशीरव्यजनिकाम्** = खसनिर्मितां वातकरीम् । **आन्दोलयन्** = चालयन् । **दाडिम्बरसेति**—दाडिम्बरसः अनाररसः । सितोपलम् = ताभ्यां मिश्रितम् । **शीतम्** = शिशिरम् । **सलिलम्** = वारि । **स्वमातुः** = स्वपत्न्याश्च संस्मरन् इत्यत्र— ' अधीगर्थदयेशां कर्मणि ' (२ । ३ । ५२) इति सूत्रेण विविक्षायां कर्मणि षष्ठी ।

**अलिन्दम्** = बहिर्द्वारप्रकोष्ठकम् ' प्रघाणप्रघणालिन्दबहिर्द्वारप्रकोष्ठके ' इत्यमरः । **निर्वाणप्रायम्** = अस्तप्रायम् । **सञ्ज्वल्य** = ज्वलयित्वा दीपयित्वा **निष्कुटकेति**—निष्कुटकस्य गृहारामस्य आश्लेषेण = संसर्गेण ऊनितः ह्रसितः तापो यस्य तम् । **तातम्**—……………… अत्र—पुस्तकद्वयेऽपि ' **तात**मालिङ्ग्येत्येव पाठः तदत्र तातपदस्यार्थं न बुध्यामहे । ' **तातो**ऽनुकम्प्ये पितरि ' इति ( हेमचन्द्रः ) ' तातस्तु जनकः पिता ' इत्यमरः, इत्येवं जानीमहे । तदर्थघटनात्वत्र कथं युज्यते ?…………………………**आसन्दीम्** = वेत्रासनिकाम् । **अध्युवास** = अधिशिश्रिये । **मनसि** = चेतसि एव चिन्तायितुमारब्धवान् ' इति । **शस्यश्यामाम्** = हरितच्छेत्रैर्हरिताम् । **मारुतिमूर्त्तिम्** = हनुमन्मूर्त्तिम् । **गौरसिंहभगिन्याः** = सौवर्ण्याः । **अन्वेष्टुम्** = गवेषयितुम् । '**हा**' इति कष्टम् । **तदर्थमनुमतः** = कोशलार्थमनुज्ञातः **मदनुचरः** = भङ्गृत्यः ।

पृ० ३२५ ॥ **सभर्त्सनम्** = सतिरस्कारम् **निर्दोषेति**—निर्दोषः दोषरहितो रघुवीरः तस्य निर्वासनस्य यत्पापम् तस्यैव **फलम्** = परिणामः **एतत्** = कारागारीकरणम् **प्रत्यर्थिनाम्** = शत्रूणाम् **क्रोडे** = अङ्के । **भूपतिसभे** = राज्ञःसभायामित्यर्थः । ' सभाराजाऽमनुष्यपूर्वा ' ( २ । ४ । २६ ) इति सूत्रेण ' भूपतिसभम् ' इति नपुंसकलिङ्गम् । **दिल्लीकलङ्केन** = तेनैवाऽवरङ्गजीवेन—[illegible] विषयान्तरे = [illegible] ... अद्यत [illegible]

**निष्कुटकुटेति**—गृहारामवृक्षमध्यभागेषु। **अस्पष्टाकृतिम्** = अस्फुटमूर्त्तिम् **अद्राक्षीत्** = अपश्यत्। 'चोरोऽयम्' इत्यादिससम्भ्रमोक्तिः। **विकोशां छुरिकाम्** = नग्नां कृपाणिकाम्। **उदस्थात्** = उत्थितोऽभूत् **भस्मोद्धूलितेति**—भस्मना भूत्या उद्धूलितं र(मि)तं शरीरं यस्य सः। **विश्लथेति**—विश्लथतां इतस्ततः स्खलतां कूर्चानां कुलैः पुञ्जैः समाच्छन्नम्—अंस—पृष्ठ—वक्षःस्थलं यस्य सः तादृशः।

**लम्बूकूर्चः** = दीर्घदाढिकः। नील्या रसेन रागेण रञ्जितं रक्तं वसनं वस्त्रं यस्य सः। **वामे** दक्षिणेतरे करे पाणौ गृहीता धृता मृत्तिकामाला 'तसवी' इति म्लेच्छव्यवहारप्रसिद्धा येन सः **यवनभिक्षुः** = म्लेच्छसाधुः म्लेच्छपीवर इत्यर्थः। **सप्रौढि** = सोत्तेजनम्। 'रे' इति नीचसम्बोधने।

**पृ० ३२६॥ मन्दम्** = शनैः **आह** = अवोचत्। **शुभचिन्तकः** = हितकारी। **श्रुतपूर्वम्** = पूर्वं श्रुतमित्यर्थः। **परिचेतुम्** = 'स एवाऽयम्' इति ज्ञातुम्। **अक्षमः** = असमर्थः। **दयसे** = कृपां करोषि। **प्राचीरम्** = प्राकारम्। **वैष्णवेषु** = विष्णुभक्तेषु साधुषु। **म्लेच्छावधूतेषु** = यवनभिक्षुषु **जानपदाः**=महाराष्ट्रदेशवासिनः। **महाराष्ट्रभूमिभरणभारम्**=महाराष्ट्र-शासनप्रबन्धमित्यर्थः। **क्षामदेहा** = कृशशरीरा। **स्थण्डिलशायिनी** = भूमिशयनकारिणी। **हविष्याहारा** = पक्वान्नभुक्। **अश्रुविन्दून्** = वाष्पकणान्। **अमूमुचत्** = त्यक्तवान्।

**पृ० ३२७॥ परमात्मा** आराध्यते = उपास्यते 'प्रजाभि' रिति शेषः **महारुद्रमुद्रया** = शिवार्चनाविधिना **रुद्रः**=महादेवः **अभिषिच्यते** = स्नाप्यते। **गृहीतेति**—गृहीतं ब्रह्मचर्यम् = * अष्टविधमैथुनत्यागरूपो नियमो यैः तेषाम् ब्राह्मणानां सहस्रैरिति। भगवती—**दुर्गा** = महामाया। **ग्रहमातृकेति**—ग्रहाः—सूर्याद्याः। मातृकाः षोडश गौर्याद्याः, आदिना इन्द्रादिदिक्पालानां ग्रहणम्, एतेषां मण्डलेन मण्डितस्य सज्जितस्य मण्डपस्य। **वेदमन्त्रैः** = 'आकृष्णेन रजसा वर्त्तमानो०' इत्यादिभिर्मन्त्रैः। **बृहद्भानुः** =

---

* स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्य-मेतदेवाष्टलक्षणम्॥

अग्निः । **हविषा** = चरुणा **हूयते** = आहुतिभिरर्च्यते । **कोपकृशानुहेतिभिः** = क्रोधानलज्वालाभिः । **आन्दोल्य** = स्फोरयित्वा ।

'**कोनाम** वागुरया = पाशेन समीरणमिव भवन्तं **रोत्स्यति** = बन्धयिष्यति ' इत्यत्र † पूर्णोपमालङ्कारः ।

पृ० ३२८ ॥ **सशङ्कुग्रन्थिवंशः** = शङ्कुना कीलकेन सह ग्रन्थिवंशः= ग्रन्थिलः कीचकः । **कुड्योल्लङ्घनम्** = भित्तिरुल्लपनम् । **त्रुटिमात्रेण** = त्रुटिः द्वयोर्निमेषयोः । निमेषद्वयमात्रेणेत्यर्थः । '**त्रुटिः** स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः ' इति ( मेदिनी ) ।

**निलीनः** = गोपितः । **कलिन्दतनयायाम्** = यमुनायाम् । **क्षेपणीहस्ताः** = क्षेपण्यो नौकादण्डा हस्तेषु येषां ते । **वाहकाः** = कर्णधाराः **त्वरया** = शीघ्रम् । **प्रहरिषु** = यामिकेषु **कलितयवनवेषाः** = धृतम्लेच्छनेपथ्याः । **अन्तरायम्** = विघ्नम् । **विदध्यात्** = कुर्यात् ।

पृ० ३२९ ॥ **छद्मवेषिणः** = छद्मना कपटेन वेषिणः वेषधारिणः **खड्गहस्ताः** = तलवारपाणयः । **आक्रम्ये** = आक्षिप्ये । कर्मणि प्रत्ययः ।

**कपटभिक्षुकाः** = व्याजेन भिक्षुरूपतां गताः **भावत्काः** = त्वदीयाः महाराष्ट्रा एव **सजृम्भारम्भम्** = गात्रविनामसहितं स्वापमिव कदाऽऽयास्यति महाराष्ट्रपतिरिति स्वप्नमिव पश्यन्ति । **तरणिगतिम्** = नौकाचालम् । **रुन्ध्युः** प्रतिहस्तयेयुः । **तरणितनूजामभितः** = यमुनां सर्वतः । **तरणिरोधम्** = सूर्यरोधनम् । **पारयेत्** = समर्थोभवेत् । यथा च सूर्यरोधोऽसम्भवी तथैव भवतो रोधकरणमिति मा शङ्कां गम इति भावः ।

पृ० ३३० ॥ **भ्रातॄन्** = सहोदरान् **अवधीत्** = मारितवान् । **पितरम्** = जनकमपि च **न्यग्रहीत्** = कारायां स्थापितवान् इत्यनेन तस्य महत् क्रौर्यं व्यज्यते । **आश्रितान्** = माल्यश्रीकप्रभृतीन् । **मृत्युकपोले** = कालमुखे इत्यर्थः । **कवलवत्** = ग्रासवत् । **जिजीविषामि** = जीवितुमिच्छामि । 'वराकैरेतैः सिंहा इव ' । अत्रोपमा ।

---

† ' असम्भावितोपमा ' चेयम् । तदुक्तं दण्डिना—

**चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।**

**परुषा वागितो वक्त्रादित्यसम्भावितोपमा ॥ इति ।**

**पृ० ३३१ । वक्षोघ्नतीम्** = उरःताडयन्तीम् । **पृथुकान्** = शिशून् । **राजधर्मपरतन्त्रः** = राजधर्मनिघ्नः ।

**पृ० ३३२ ॥ स्मारं स्मारम्** = स्मृत्वा २ । **मामपवदति** = मां गर्हयति । **कुलीनानाम्** = सद्वंश्यानाम् । **सतर्कम्** = ऊहासहितम् । **पेक्षिष्ट** = अलोकिष्ट । **अनुरक्तायाः** = अनुरागवत्याः । **मुक्तकण्ठम्** = स्वगलोत्पाटम् । **चित्वा** = एकत्रीकृत्य शुष्ककाष्ठश्रितां रचयित्वेत्यर्थः ।

**पृ० ३३३ ॥ करुणकोलाहलम्** = सदयमाक्रन्दनम् । **श्लथद्व-सनाः** = स्खलद्वासमः । त्वरासम्भ्रमहेतोरित्याशयः । **वैकुण्ठम्** = स्वर्लोकम् **वसुधाम्** = पृथ्वीम् । '**अलङ्करोति**' = अर्थात् जीवति ते वल्लभः । **वाता-हतः** = समीरनुन्नः **रम्भास्तम्भ इव** = कदलीखण्ड इव । **गृहीतेति**— गृहीतं दृढं मौनव्रतं यया तूष्णीम्भावोपेता । **मुक्तकेशी** = उत्स्खलितमूर्धजा । **धूलिधूसरितदेहा** = रजःप्लुतशरीरा । रुद्राक्षमालया कलितं वक्षो यया सा । **तडागकोणे** = सरोवरस्य एकस्मिन् प्रदेशे ।

**पृ० ३३४ ॥ धूर्त्तपत्रैः** = धत्तूरकुसुमैः । **प्रघणे** = बहिर्द्वारप्रकोष्ठके । **सुष्वाप** = निद्रां भेजे ।

**उदञ्चिते** = उदिते **चण्डमरीचौ** = भास्करे । **गवाक्षात्** = वाता-यनात् । **व्यजिज्ञपत्** = निवेदितवान् । **अन्तराजिगमिषतः** = अभ्यन्तरे आगन्तुमिच्छतः जनान् अर्थात् शिववीरस्यैव सेवकान् परिचितान् वा । **लोहित-वदनः** = शोणमुखः । **कोपस्फुरदधरः** = क्रोधेन स्फुरन् चलन् ओष्ठो यस्य। क्रोधचलदोष्ठः इत्यर्थः । **जिघत्सन्** = अत्तुमिच्छन्निव ब्राह्मण्डमण्डलमिति । **भ्रुवोः** = भ्रुकुट्योः **आकुञ्चनेन** = सर्वतोवलनेन अभ्यन्तरीकरणेन । **स्फोट-यन्निव** = उत्पाटयन्निव ।

**पृ० ३३५ ॥ कदर्याणाम्** = नीचानाम् । **रेणुकाराशिम्** = धूलिपुञ्जम् । **प्रक्षिप्य** = चर्चयित्वा । **अनवरुद्धगतिः** = अप्रतिहतगतिः । **असहायस्य** = एकाकिनः । ' रोचिष्यतेतराम् **यवनकुलनन्दनाय** ' = म्लेच्छकुलपुत्राय । **सप्रसादम्** = सहर्षम् । **यथावाञ्छितम्** = यथेष्टम् । **दिल्लीति**—दिल्ल्याः सकाशात् **निर्गमनपत्रिकाः** = प्रस्थानपत्रिकाः । **चातुरीगर्वः** = नैपुण्याभिमानः ।

**पृ० ३३६ ॥ सिष्णासति** = स्नातुमिच्छति । **प्राङ्गणे** = अलिन्द चत्वरे । ' **कुसुमविक्रेत्री** = समुपातिष्ठत ' इति सम्बन्धः । कथंभूता सा इति

प्रथमान्तैः पदैर्विशिनष्टि । अनवरोद्धव्या = ( पूजोपकरणनेत्रीत्वात् ) अवरोधानर्हा इति कृत्वा **प्रतीहारैः** = द्वारपालैः **अनवरुद्धा** = अप्रतिषिद्धान्तःप्रवेशा ।

**वामस्कन्धेति**—वामस्कन्धे दक्षिणेतरे अंसे स्थापिता धृता कुसुमपूर्णा पुष्पभरिता पिटकिका = मञ्जूषिका यया । **दक्षकरे** = वामेतरे पाणौ आकलितानि धृतानि अतिमुक्तकलिकाभिः माधवीकोरकैः रचितानि अनेकानि बहूनि विक्रेयव्यजनानि पण्यव्यजनानि यया सा । **कर्णान्ते** = कर्णप्रान्तभागे लम्बमानेन दोलता राजतताटङ्केन दुर्वर्णताटङ्काख्यभूषणेन चोचुम्ब्यमानं पुनः पुनः स्पृश्यमानं गण्डयुगलं कपोलद्वन्द्वं यस्याः सा । **आरक्तया** = ईषद्रक्तवर्णया कन्चुकिकया चोलिकया छन्नौ प्रावृतौ तालफलवत् ( तालफलाकारौ ) स्तनौ कुचौ यस्याः सा । एतेन स्तनयोः काठिन्यं वर्तुलत्वञ्च व्यज्यते । **काचखण्डैः** = नगैः मण्डितमग्रं यस्य एवम्भूतं यत् राजतलवङ्गिकाभरणं तेन भूषिता नासा यस्याः सा । **ताम्बूलरागरञ्जिताधरा** = नागवल्लीरागरक्तानिम्नोष्ठा । **यौवनमरमन्थरा** = तारुण्यातिशयमत्ता, **मन्दस्मितेन** = ईषद्धसितेन **मालतीमुकुलानानीव**= मल्लिका कलिका इव **वमन्ती** = उद्गिरन्ती । उत्प्रेक्षा । **अपाङ्गवीक्षणैः** = कटाक्षपातैरित्यर्थः । **नीलोत्पलैरिव**=नीलकमलैः कुमुदैरिव **ताडयन्ती** पूर्ववदलङ्कारः । **विलुलितैः** = विशृंखलैः **लोलालकैः** = चपलकुन्तलैः । **रोलम्बकदम्बान्** = भ्रमरगणान् इव **वशयन्ती** = स्वायत्तीकुर्वती । **क्षुद्रघण्टिकानां** शिञ्जितेन आकृष्टा वशीकृता निर्दिष्टजनानां दृष्टिर्यया सा: **एका** = लोकोत्तरसौन्दर्योपेता । **कस्तूरिकायाः** मृगमदस्य उद्वर्त्तनेन वर्त्तिता मर्दिता **शृङ्गाररसेन** स्नाता व्याप्तेवेत्यर्थः । **श्यामा** = षोडशवार्षिकी ।

**पराङ्गनाप्रतारणेषु** = परस्त्रीवशीकरणविडम्बनासु । परस्त्रीच्छलनेष्वित्यर्थः । **न** = नैव **पटीयान्** = अत्यन्तं चतुरः ।

**क्ष्वेलयसि** = उपहससि । **सौशील्यम्** = साध्वाचरणम् । **युवतिदर्शनसमकालमेव** = तरुणीलोकनसमसमयमेव । **मनः** = हृदयं **द्रवति** = स्खलति । **वारवधूः** = पण्यस्त्री । **विश्वेषाम्** = सर्वेषाम् । **नर्मपात्रम्** = हासविषयः । **सरोषमिव** = सकोपमिव । कृत्रिमेन कोपेनेत्यर्थः ।

पृ० ३३७ ॥ **सस्वरभङ्गम्** = स्वरभङ्गेन सह यथा तथा । **स्वदासेरस्य** = स्वसेवकस्य **दुर्वृत्तम्** = अनाचारम् । **उद्यानम्** = आरामम् । **रुरुदिषन्तीम्** = रोदितुमिच्छन्तीम् । क्षणञ्च **स्मयमानाम्** = हसन्तीम् । **विस्मये** = चकितो भवति । **लप्स्यते** = प्राप्स्यते । **करौ सम्पुटीकृत्य** = हस्तौ-

बद्ध्वा । **धर्मध्वजोद्धूननधुरीणेषु** = धर्मविदग्रेसरेष्वित्यर्थः । **राजकन्याम्** रसनारीमेव । स्फुटमन्यत् ।

**पृ० ३३८ ॥** रहसि = एकान्ते । **प्रपञ्चनम्** = चातुरीम् । **महानर्थः** = असद्विरोधेन मारणादिरूपः । **तनुगात्रा** = कृशाङ्गी । **मृद्वीका** = गोस्तनी । **मन्दतारका** = निष्प्रभनचत्रा इति रजनीपक्षे ! निष्प्रभकनीनिका विरहात् इति रसनारीपक्षे । योगिनीवेतिस्पष्टम् । 'योगिनी' अपि अशनापिपासाशून्या भवति, रसनारी तु शिवविरहेण त्यक्तखानपाना । **अवधूता** = ...... **उन्मत्ता**=उन्मादनामककामदशां प्राप्ता । **प्रतिवचनजीवातुम्**=प्रतिज्ञाजीवनौषधम् । **वधूवधवुधः**=स्त्रीहननदोषवित् ।

**प्रतिद्वन्द्विनी**=विरुद्धा । **कुमारीति**—कुमारीप्रणयः कुमार्य्यासक्तिः मलीमसं दूषणं यस्य सः एवम्भूतोऽहं ( यदि, तेन ) **ज्ञायेय**=ज्ञातो भवेयम् । **प्रेमाम्**=प्रीतिम्=' प्रेमा ना प्रियता हार्दम् ' इति ( अमरः ) ।

**पृ० ३३९ ॥ आलपति**=वार्त्तयति । **यः**=भवानित्यर्थः । मम **स्वसारम्**=भगिनीम् । **नावैमि**=नो जानामि । ' आः '= शोकोस्तीत्यर्थः । **प्रहरिणः**=महाराष्ट्राधीशरोधनार्थं यामिकान् । **मिथ्याभिशंसिभिरिति**=मृषास्तुतिकैरित्यर्थः । '**द्रुह्यन्ति** भवन्तम्' इति च्युतसंस्कृतम् । **त्रुधद्रुहेर्ष्याऽसूयार्थानां यम्प्रति कोपः** ' ( १ । ४ । ३७ ) इत्यनेन द्रुह्यतियोगे सम्प्रदानसञ्ज्ञायां चतुर्थी स्यात् ( ' द्रुह्यन्ति भवते ' इति भाव्यम् ) । अथवा अस्तु— ' उपदविभक्तेः कारकविभक्तिर्बलीयसी ' इति ।

**अस्मिन्** समये=यदा मायाजिह्मः गतः । **मालतीकुञ्जे**=मल्लिकाभवने । **मारकतदण्डायाम्** = मरकतमणिनिर्मितदण्डायाम् । **आसन्द्याम्** = कुर्स्याम् । **शुकाः पिकाः** ' इत्यादीनि पदानि पुरा व्याख्यातप्रायाणि । **लूमदोलनैः**—लाङ्गूलचालनैः । **पत्तस्फुरणैः**=पत्रस्फारणैः **चञ्चुकोटिभिः**=त्रोटिपुरोभागैः । **पत्ततिकण्डूयनैः**—पत्तमूलघर्षणैः । **प्रणयकलहैः**=प्रीतिविरोधाचरणैः । **समञ्जीरेति**—मञ्जीरशिञ्जितसहितैः नर्त्तनैः । **कपटकलहैः**=छलकलहैः । **प्रेयसीति**—प्रेयस्यः बल्लभाः याः शुकीप्रभृतयः तासां प्राप्तौ या अहमहमूर्विका पूर्वमहमेवैनां रमयेत्यभिमानः तज्जनितैः **युद्धैः**=संग्रामैः । **चिक्रीडिरे**=खेलाञ्चक्रिरे । **साम्मुखीनायाम्**=पुरोवर्तिन्याम् । **ताम्बूलदलाकारायाम्** = नागवल्लीपत्राकृतिधारायाम् । **पुष्करिण्याम्**=दीर्घिकायाम् ।

पृ० ३४० ॥ **कारण्डवाकाराः**=सवाकृतयः **परिष्कृताः**=सज्जध्व-जिताः । **तरयः**=नौकाः । **हंसाः**=कादम्बाः । **कारण्डवाः**=वतकाः । **सारसाः**=पक्षिविशेषाः । **मोदन्तेस्म**=हृष्यन्ति स्म । **कपोतभवनात्**=कपोतपालिकायाः । **प्रडीनोड्डी**नाद्याः पक्षिणां डयनप्रकाराः । '**तारका** इव संववृतिरे'=नक्षत्राणीव बभूवुः । **कन्दरिणाम्**=पर्वतानाम् । **कन्दर-मन्दिरेषु**=गुहागृहेषु । **किरणकिरणे**=मयूखसारणे ...... ........................ **निर्गतः** दूरीभूता कलङ्कपङ्कस्य दोषकर्दमस्य आतङ्को भीतिर्यस्य एवम्भूतः भवतः **यशश्चन्द्रः**=कीर्तिनिशाकरः । **चमत्करोति**=भासते । **क्षुभ्यति**=व्यथते । **विहितसमरः**=कृतसंग्रामः । **अतिदयादर्शनम्**=बहुकृपालुताप्रकटनम् । **अतिमहत्तासूचकम्**=गौरवबोधकम् । **प्राजल्पत्**=वृथाजल्पमकरोत् । **दिल्ली-नगरवीथिकासु**=दिल्लीपुरीवीथिषु ।

पृ० ३४१ ॥ आगन्तुम्=आयातुम् **अन्वमन्यत**=अनुमोदितवान् । **महेति**—महांश्चासौ कलकलः कलरवः तस्य रोधनाय वारणाय । **कोट्टपा-लस्य**=नगराध्यक्षस्य सूचनानुरूपम् । **वन्याः**=जाङ्गलिकाः । **मर्यादाम्**=अस्मन्नियतव्यवहाररूपाम् । **ऐकान्तिकम्**=रहस्यम् । **प्रवणीभूय**=प्रह्वीभूय । बन्दीं कृत्वेत्यर्थः **क्षुब्धः**=सञ्चलितहृदयः । **क्षोभस्य**=चित्तव्याकुलतायाः **विशकलय्य**=विस्तरं कृत्वा ।

पृ० ३४२ ॥ **आसन्दीति**—वेत्रासनिकादण्डलगितकफोण इत्यर्थः । **अवितर्कितम्**=काकतालीयन्यायेनोपनतमित्यर्थः । अग्रे बहु स्पष्टम् । **विवर्णः**=म्लानाकृतिः ।

पृ० ३४४ ॥ **नवजलदेति**—नवाः नूतनाः ये जलदाः=मेघाः तेषां जलपूरेण नीरभरेण पूरिताः भरिताः, सहस्रशः=असंख्याताः **नद्यः**=सरितः, **अजगराः**=महासर्पाः इव **सर्पिष्यन्ति**=कुटिलगतयो भविष्यन्ति । **एते**=महाराष्ट्राः । **अश्वयानाः**=घोटकारोहिणः । **स्रोतोभिः**=वारिप्रवाहैः । **तीरेषु**=नदीतटेषु । **उषिताः**=कृतवाससः । **वैद्यम्**=भिषजम् । **आपद्येरन्**=प्राप्नुयुः । वायुश्च जलञ्च अनयोः समाहारः '**वायुजलम्**' । **प्रहरि-बन्धः**=यामिकरक्षाडम्बरः । **एषः**=महाराष्ट्राधिपतिः ।

पृ० ३४५ ॥ किञ्चित् **जजल्प**=' प्रत्यक्षं न श्रुतमिति किञ्चित् तत्परो-क्षता सूचकोऽयं लिट्' इति प्राचीना लघुटिप्पणी । **बाह्यजीवनमपि**=बहिश्चराः प्राणा इत्यर्थः । **नीतिविरुद्धम्**=प्रचालितराजनियमविपरीतम् । **आचरेः**=

कुर्यो: । **निगडवद्धम्**=वेडिकावेष्टितम् । **जघन्यस्य**=नीचस्य—**वन्यस्य**=जङ्गलिकस्य । **सौवर्णकौशेयपटावृतम्**=सुवर्णतन्तुग्रथितपट्टवस्त्रावरणोपेतम् **नरयानम्**=पालङ्कीम् । **छत्रेति**—छत्रादीनि सम्राजः चिह्नानि । **ततः प्रतस्थे**=तस्मात् स्थानादुच्चचाल ।

'**चिन्तया** तापेन शोकेन कोपेन च वीचिभङ्गैरिव विविधभावभङ्गैः पारावार इव क्षुब्धः' इत्यत्र समुच्चयः **उपमा** चालङ्कारः । '**दिल्ली**नगरवास्तव्याः सर्वेऽपि—महाराष्ट्रदिल्लीश्वरयोः आचारमेवलोचन्ते स्म' इत्यन्वयः **प्रतिकथम्** = कथां कथां प्रति 'प्रतिकथम्' ।

**पृ० ३४६** ॥ प्रस्तावं प्रस्तावं प्रति इति **प्रतिप्रस्तावम्** । एवमेव—'प्रतिकिंवदन्ति, प्रत्याभाणकम्' इत्यत्रापि वीप्सायामव्ययीभावः । **कदर्यम्** = नीचकर्म । '**यवनसीमन्तिन्यः** यन्नाम श्रवणमात्रेणापि गर्भान् अपीपतन्' इत्यन्वयः । 'अपीपतन्' = पातयाम्बभूवुः । '**जातोननीतिनिष्णातस्य**' अस्यार्थं पण्डिताः स्वयं जानन्तु, अस्माकन्तु—'जातोऽत्र'—इति पाठ उचितो लगितश्च भाति । 'अत्र' विषये **नीतिनिष्णातस्य** = नीतिनिपुणस्यापि भ्रमोजातः 'यत्' = यस्माद्धेतोः 'एषः' = महाराष्ट्रधीशः **एनम्** = दिल्लीशं **प्रत्यगात्** = प्रत्यायासीत् । अथवा—जातः न = अपितु जात एवेति काकुः । **ग्रहदशा** = भौमशन्यादिग्रहाणां दशा । **शार्दूलपराक्रमः** = सिंहविक्रान्तः । **शशकायितैः** = शशकवदाचरद्भिः । **क्षयते** = क्षीणो भवति । **रुग्णः** = ज्वरादिग्रस्तः ।

**शृङ्गाटके**=चतुष्पथे । **शृङ्गारः**=नवीनवस्त्रभूषणादिना आत्मनः सज्जीकरणम् । **महासम्बाधः**=जनसंघट्टः । **वार्षिकः**=वर्षे वर्षे भवः **पर्वसमयः** । **हिमोपलशीतलम्**=हिमकरकशिशिरीकृतम् । **सितोपलजलम्**=शर्करोदकम् । **भिक्षुकाः** = भिक्षार्थिनः । * **पङ्गवः** = श्रोणाः जंघाहीना इत्यर्थः । **खञ्जाः** = खोडाः । **एडाः** = बधिराः श्रवणशक्तिहीनाः । **कुब्जाः**=गडुलाः । **प्रत्यहम्** = प्रतिदिनम् , अन्नं **वितीर्यते** = दीयते । **न सत्यते**= 'न शक्यते' इत्युचितः पाठः । **घण्टापथे**=राजमार्गे ।

---

* '**श्रोणः** पङ्गौ' 'खोडे खञ्जः' 'स्यादेडे बधिरः' 'कुब्जे गडुलः' इति सर्वत्र ( अमरः ) । **कुब्जो** वृक्षप्रभेदे ना न्युब्जे स्याद्वाच्यलिङ्गकः' इति, '**गडुः** पृष्ठगडे कुब्जे इति च ( मेदिनी ) ।

**पृ० ३४७ ॥ एतामाज्ञाम्** = कोट्टपालाज्ञाम् । **प्रासीदन्** = प्रसन्ना अभूवन् । **मुमुदिरे**=हर्षं भेजिरे । **द्विषः**=शत्रवः यवनाः इत्यर्थः । '**भिक्षुकांश्च**—परः सहस्रराशीराशिभिः समवर्धयन् ' इति सम्बन्धः† । **शष्कुलीः** = पूरिकाविशेषान् **अपूपान्** = ‡ पिष्टकान् । **मोदकान्**=लड्डुकान् । **पेटाः**=' पेडा ' इत्याख्यं कन्दम् । **इण्डरिकाः**=कुण्डलिनीकन्दम्, " इन्दुरसा " इति वा ताः ।

' **एकदा** भृत्यवेषेण गौरसिंहः—पत्रमेवमपठत् ' इति दूरे सम्बन्धः । ' पञ्जराद्बहिर्निर्गतः कीर इव '= इति **पूर्णोपमा** । **भिक्षुकेभ्यः** = याचकेभ्यः ' **भोज्यमर्थयितुम्** ' = भोज्यमर्पयितुमित्युचितं भाति । **वारुणीचुम्बनेन** = वारुणी पश्चिमाशा मद्यञ्च **चुम्बनम्** = वक्त्रसंयोगः प्राप्तिश्च । **मत्तस्य** = उन्मादं गतस्येवेति । **मार्त्तण्डस्य** = सूर्यस्य । **कोमलैः** = मृदौ अल्पे इत्यर्थः प्रकाशे ।

**भुग्नितम्** = न्युब्जीकृतम् भूर्जत्वक्पत्रकम् । **विचिन्वन्** = विवेचयन् अर्थात् गौरसिंह एव । **कटिगुटिकायाम्** = गुप्तौ । **अतिरहस्यम्** = केनाप्यज्ञातम् **ऊर्ध्वतनगृहम्** = सर्वोपरिवर्तमानमत्युच्चं चन्द्रशालागृहम् । **महाराजमाहूय** = महाराष्ट्रेश्वरमामन्त्र्य । **अनन्यश्रावम्** = तदेकमात्रश्रवणयोग्यम् । स्पष्टमन्यत् ।

**पृ० ३४८ ॥** ' **सर्वमेत**दाकर्ण्य—समालपितवन्तौ ' इत्यन्तमलग्नकमिवाभाति मध्ये त्रुटितपदञ्चेति विवेचयन्तु **पण्डित**महोदयाः । ' **भगवति भास्करे** पश्चिमसमुद्रं स्पृशति ' = सूर्येऽस्तं याति सतीत्यर्थः । **ते** = महाराष्ट्राः । **स्थिरयित्वा** = निश्चित्य । **यातयामा** = गतैकप्रहरा । **यामिनी** = रात्रिः । **वादित्रध्वनिः** = वाद्यरावः । **शिविकाम्** = नरयानम् । **सम्राट्प्रेषितः**= सम्राजा प्रहितः । **चिकित्सितुम्** = भैषज्यं कर्तुम् । **सप्रौढि** = अनवरुद्धमिव । **महाराष्ट्रवसुधाधवः** = महाराष्ट्रपृथिवीपतिः । **पादत्राणपटाभिः** = उपानहः फटफटाशब्दैः । **सोपान**पङ्क्तीः=सोपानराजीः । ध्वनयन्=

---

† उक्तञ्च—( निघण्टौ )

**समितायां घृताक्तायां लोप्त्रीं कृत्वा च वेल्लयेत् ।**
**आज्ये तां भर्जयेत् सिद्धां शष्कुली फेनिकागुणाः ॥**

अस्मद्देशे ' लुच्ची ' इति भाषायाम् ।

‡ ' पूपोऽपूपः पिष्टकः स्यात् ' इति ( अमरः ) ।

शब्दयन् । **यवन**चिकित्सकः = म्लेच्छवैद्यः । **पिचिण्डलः** = स्थूलोदरः । **दृढस्नायुः** = संहननाङ्गः । **ज्वलदिति**—ज्वलति = प्रकाशमाने नयनयुगे आरोपितया न्यस्तया राजतशलाकया रूप्यकतूलिकया अधिकचाकचक्येन = समधिकचमत्कृत्या चमत्कृतं भासितं उपनेत्रम् = अयनकं यस्य सः । **हरितेति**—हरित कौशेयस्य उष्णीषं शिरसि यस्य सः । **आनाभीति**—आनाभि = नाभिमभिव्याप्य विलम्बमानो दीर्घः सितकृष्णः = श्वेतकालः ( 'करडवरडः' इति भाषायाम् ) कूर्चो यस्य सः । कर्णान्तं दीर्घं श्मश्रुद्वयम् = मूर्च्छयुगलं यस्य सः । **हरितकञ्चुकः** = हरितचोलः । **सुदीर्घेति**—सुदीर्घं पाण्डुरं श्वेतरक्तमधोवसनं 'तहमत' इत्याख्यं कटिवस्त्रं यस्य सः । **करे** = पाणौ कलिता धृता पुष्टा दृढा यष्टिर्येन स **आम्रेडयन्** = पुनः पुनः कथयन् । **तत्पृष्ठलग्नः** = तदनुगामी ।

पृ० ३४९ ॥ **द्वाविंशति**वर्षकल्पः = द्वाविंशति वर्षतः किञ्चिदूनवयाः । **कक्षे** स्थापिता श्यामा मञ्जूषा पिटिका येन सः । **राजपल्यङ्कसमीपे** = महाराष्ट्राधीशपर्यङ्कसन्निधा । **क्षुधा** = बुभुक्षा । **ह्रसते** = ह्रीनीभवति । **ज्वलन्ति**= दग्धानि भवन्ति अङ्गानि । **यवनस्पृष्टम्** = म्लेच्छच्छुपितम् । **अगदम्** = औषधम् ।

पृ० ३५० ॥ **एतत्समयानुरूपम्** = कारावन्धकालयोग्यम् । **वदान्यताम्** = दानशौण्डताम् । **अत्रभवतः** = पूज्यस्य । **परदत्तम्** = दिल्लीवल्लभभिन्नार्पितम् । **कारुकोषम्**=कारुनामकमहाधनिककोषम् । **ईहामहे**= कामयामहे । **रोगिणाम्** = रुजा पीडितानाम् । **सम्मतिम्** = इच्छानुरोधम् । **अपेक्षामहे** = पालयामः । **'आविद' इति** चिकित्सकसहचरनाम । **पेटापिधानम्** = मञ्जूषाप्रावरणम् । **उदतूतुलम्** = उदघाटयत् । **द्रवकम्** = द्रवद्रव्यम् । **श्वेतं चूर्णम्** = शुभ्रं चोदम् । **मेलयितुम्** = योजयितुम् । **कफवातेति**—तत्र **कफः** = श्लेष्मा । **वातः** = शीतरूक्षस्वभावः । **पित्तम्** = सरमुष्णञ्च एते त्रयो दोषाः शरीरस्वास्थ्याऽस्वास्थ्यहेतवः तेषां प्रकोपः = वैषम्यं तज्जः ।

पृ० ३५१ ॥ **अवालूलुकत्** = "अवालुलोकत्" इति भाव्यम् । **तोयमावर्ज्य** = पानीयमालोड्य । **तादृशवचनभङ्गीश्रवणे** = पीयूषहालाहलमित्यादिवचनप्रकाराकर्णने । **क्रमशः** = उत्तरोत्तरम् । **विवृद्धमन्युः** = प्रदीप्तकोपः । **यवनेति**—यवनेन स्पृष्टं यत् पानीयं तस्य [illegible] । **अविकीर्णे**—कर्दम-

निच्छुः 'प्रत्यक्षं गरलजलम्=विषजलम् पाययति' इति=हेतोः '**ज्वालयेव** **ज्वलितः**' वह्निकीलयेव दग्धः । '**शतधाऽभूत्**'=इत्यस्य स्थाने 'शतधाऽकरोत्' इति पाठः समुचितो भाति । **तदाहतीति**—तस्य महाराजस्य आहत्या आताडनेन विस्मितप्रायस्य चकितचकितस्य **चिकित्सकस्य**=वैद्यस्य । **चपेटम्**=प्रसृतं करतलम् **दवेलायाः**=हास्यस्य । **चकर्ष**=आकृष्टवान् । **जघर्ष**=घृष्टवान् '**खिलखिलाशब्दम्**' इति हसन्तम् । '**तम्–आलुलोक**' इत्यशुद्धम्—'आलुलोके' इति शुद्धम् । **परिषस्वजे**=आलिलिङ्ग । **शिरःशिरासु**=शिरसः उत्तमाङ्गस्य शिरासु=नाडीषु ।

**पृ० ३५२ ॥** 'फलमिदं सिंहैः सह क्रीडायाः' इति सोपहासोक्तिः । स्पष्टमन्यत् । **भट्टारकस्य**=भर्तुस्तवेत्यर्थः । **निग्रहवृत्तान्तम्**=कारीकरणोदन्तम् । **पारावार** इव=समुद्र इव । **वाडवेव**=समुद्राग्निरिव । **कोपेति**—कोपः क्रोध एव कूपीटयोनिः वह्निः तेन **क्षुब्धः**=प्रज्वलितचित्तः । **सर्वोऽपि**=महाराष्ट्रशिशुरपीत्याशयः । **दिधक्षन्**=**दिधक्षन्निव**=दग्धुमिच्छन्निव । **चिचर्वयिषन्निव**=चर्वयितुं=दन्तैः कुट्टयितुम् इच्छन्निव । **चुचूर्णयिषन्**=चूर्णयितुं चोदीकर्तुमिच्छन् । **लुलुण्ठयिषन्**=लुण्ठयितुमिच्छन् । **क्रोधजरेति**—अत्र जरारूपकेण क्रोधस्य पराकाष्ठा व्यज्येते । **गरुडस्येवेत्यादि** **उपमा** । 'निदर्शना' च व्यङ्ग्या । **शून्यमतावलम्बी**='सुन्नी' इति प्रसिद्धयावनसम्प्रदाऽनुसारी । **मोहरमोत्सवस्य**='मुहर्रम' इति ख्यातस्य उत्सवस्य । **आडम्बरः**=प्रदर्शिनी ।

**पृ० ३५३ ॥** **सत्वरगामिनः**=महाजवाः । **पञ्चषाः**=पञ्च वा षड् वा । **हयाः**=वाजिनः । **कशाः**=ताडन्यः । **चिकित्साप्रकरणे** तु–इति । **स्पर्शदोषः**=रोगस्य विपत्कालत्वात् । **सुधाकरः**=पीयूषपाणिरासि । पक्षे—चन्द्रमाः । **चन्द्रकान्तस्पर्शे**=चन्द्रकान्तो मणिविशेषः चन्द्रकिरणस्पर्शे सति द्रवतीति प्रसिद्धिः, पक्षे तु—चन्द्रकस्य चान्द्रखानस्य अन्तो नाशो यस्मात् स तथाविधः शिववीरः तस्य स्पर्शे सम्बन्धेऽपि । **रसम्**=औषधरसम्, **रसम्**=पानीयञ्च । स्पष्टमन्यत् ।

**पृ० ३५४ ॥** **मुमुदेतमाम्**=जहर्ष । 'मुमुदेतमाम्' इत्यत्र तिङश्च (५ । ३ । ५६) इति सूत्रेण तिङन्तादतिशयेद्योत्ये तमप् । तरप्तमपौ घः (१ । १ । २२) इति तमपो घसञ्ज्ञायाम्—**किमेत्तिङव्ययघा**-**दाम्वद्रव्यप्रकर्षे** (५ । ४ । ११) इत्यामु । **गदनदम्**=रोगहृदम् ।

**शोषयितुम्**=शुष्कीकर्तुम् नाशयितुमित्यर्थः । **तत्**=तस्मात् हेतोः । **अल्लासत्कृपया**=अल्ला महामाया जगदम्बा । यवनभाषायाम्—'अल्ला' खुदा ईश्वर इत्यर्थः तस्य (तस्याः) कृपया दयया। **अल्लाकृपया** इति युज्यते पाठः । सार्थं जानन्तु पण्डिताः । **शक्ष्यति**=शक्तो भविष्यति । 'क्रोशान् धावितुम्' इत्यत्र **कालाध्वनोरत्यन्तसंयोगे** (२।३।५) इति द्वितीया । '**रुग्णो** न लप्स्यते' इति सम्बन्धः । अत्र 'रुग्णो न लप्स्यते किन्तु रोगसहित एव लप्स्यते, गूढार्थस्तु योऽयमधुना रुग्णः स परश्वो न लप्स्यते पलायिष्यते इति यावत्' इति प्राचीनलघुटिप्पणे विवृतम् ।

**पृ० ३५५ ॥ कूर्चिकास्निग्धकूर्चान्**=कूर्चिका = क्षीरविकारः । तया स्निग्धः कूर्चो येषां तान् तादृशान् । **इण्डारिकापि**चण्डिलान्=इण्डारिकाभिः स्थूलोदरान् विदधाति । **उल्लाघताम्**=नीरोगताम् । **ऋते केभ्यश्चित्**='अन्यारादितरर्ते'-(२।३।२९) इत्यनेन अत्र 'ऋते' योगे पञ्चमी । **आपणस्थानि**=विपणिषु विक्रेयार्थं प्रस्तुतानि । **स्वावसथम्**=स्वगृहमित्यर्थः । **पेटासु**=मञ्जूषासु । **आयोज्य**=निवेश्य । **मद्राणाम्**=पूज्यानां मान्यानाम् । **दधिकूर्चिकेति**—अत्राहुः—

**दध्ना सह पयः पक्वं यत्स्यात्सा दधिकूर्चिका ।**<br>
**तक्रेण पक्वं यत् क्षीरं तद्भवेत् तक्रकूर्चिका ॥ इति ।**

नवनीतम्=हैयङ्गवीनम् । **सिता**=शर्करोपला । **यवसोटजम्**=यवसकुटीरम् । **मोदकेति**—मोदकादि व्याख्यातपूर्वम् ।

**पृ० ३५६ ॥ पक्वान्नपाचकाः**=कान्दविकाः । **पक्वान्नानि**=अपूपमोदकादीनि । **प्रस्तुवन्तः**=रचयन्तः । **चुल्हीम्**=चुल्लीम् ।

**पृ० ३५७ ॥** कोष्णानाम् सद्यः पक्वानाम् ताजकानाम् । **कचौरीणाम्**=पूरिकाविशेषाणाम् । **चपलयति**=चटुलयति । **रसनाम्**=जिह्वाम् । अर्थात् तादृशगन्धमाघ्राय मे रसना मूत्रयति ।

**पृ० १५८ ॥** '**भगवान्** भास्वान् ज्वलयिन्निवाऽखिलं भूवलयं—वरुणदिशो नेदीयान् संवृत्तः' इत्यन्वयः । तदेतत् सूर्यास्तमुत्प्रेक्षया वर्णयति—**गेहान्**=गृहान् **भ्राष्ट्रान्**=भर्जनस्थानानि इव **सन्ताप्य**=सञ्ज्वल्य । '**ग्रीष्मात्तापितः सिष्णासुरिव**'—घर्मात् तापं प्राप्तः स्नातुमिच्छुरिव । **सरस्वन्तम्**=सागरम् । **शुशोषयिषुरिव**=शोषयितुमिच्छुरिव । **वाडवम्**=वडवानलम्

**विजिगीषुः** = जेतुमिच्छुः । **शेषेति**—शेषः = अनन्तनागः तस्य फणावलीनां ज्वालाजालम् = कीलालिः तस्य प्रचण्डताम् = उग्रताम् **आलोकयितुम्** = द्रष्टुम् । **दिधक्षुः**=दग्धुमिच्छुरिव । **अस्ताचलेति**—अस्ताचलस्य अस्तगिरेः निर्झराणां वारिप्रवाहाणां शीतलजलानि शिशिरवारीणि **पिपासुः** = पातुमिच्छुरिव । **वरुणदिशः** = पश्चिमाया आशायाः **नेदियान्** = अत्यन्तं निकटवर्ती । **संवृत्तः** = बभूवेत्यर्थः । **दिल्लीमार्गाः** = दिल्लीवर्त्मानि । **छत्रमयाः**=छायामयाः इत्यर्थः । **भस्त्रापूरितैः**=मषकभरितैः । **पान्थान्**=मार्गगतान् । **अपसारमपसारम्** = अपसार्याऽपसार्येत्यर्थः । **पथः** = मार्गान् । **सेक्तुम्** = आर्द्रीकर्त्तुम् । **आपणिकैः** = हट्टस्वामिभिः । **पक्वान्नपूरपूरितानि** = पक्वान्नराशिभरितानि । **वंशपात्राणि** = वैणवानि पात्राणि करण्डकादीनीत्यर्थः । **विहङ्गिकानाम्** = वीवधानां भारयष्टीनामित्यर्थः ।

पृ० ३५६ ॥ **पेटायाः** = विशालायाः मञ्जूषायाः । **धूलिविमर्दधूसरितदेहः** = रजःसंघर्षितशरीरः ।.**कषायवसनैः** वेष्टितः कचानां कलापो यस्य सः । **वक्रदण्डहस्तः** = अनृजुदण्डपाणिः । **भस्मोल्लिखितललाटः**= भसितलिप्तमस्तकः। **अनुकालिन्दीतिरम्** = कालिन्दीतीरमभिव्याप्य । '**समये**ऽस्मिन्—महाराष्ट्रराजः सुदीर्घमश्वसत्' इत्यन्वयः । तत्र **मालोपमा**लङ्कारेण वर्णयति । **पञ्चास्यः** = सिंहः । **जालबन्धन**विमुक्तः = आनायपाशिकामुक्तः । **विहङ्गः** = पक्षी इव । **कुवेणीतः** = मत्स्याधानीतः । **अहितुण्डिकः**=व्यालग्राही तस्य पिटकायाः मञ्जूषाया अपसृतः पन्नगः इव=सर्प इव। **सुदीर्घमश्वसत्**=दीर्घोच्छ्वासं ततान । बन्धननिर्मुक्तस्य **श्वासजातिरियम्**

**अस्पृष्टाकृतिः** = अन्धकारोत्थानहेतोः । अस्पष्टं प्रतीयमानोऽपि, **विनिवर्त्तमानैः** = प्रत्यावृत्य आगच्छद्भिः परःशतानां भिक्षुकानां याचकानां व्रातैः संघैः **व्याप्तः** = सङ्कीर्णः । **यातायातपरैः** = गमागमासक्तैः **पान्थैः** = अध्वनीनैः **परिपूरितः** = सङ्कुलीकृतः **घण्टापथः** = राजमार्गः । '**वामतः** = (एवंभूता) **यमुना** = कालिन्दी प्रवहतीति शेषः । अनेकैः **उत्प्रेक्षा**गर्भैः विशेषणैर्यमुनां वर्णयति—**चाल्यमानाभिः** = सार्यमाणाभिः । **दीर्घाभिः** = लम्बमानाभिः । **आयताभिः** = विशालाभिः । **अल्पाभिः** = लघ्वीभिः **महतीभिः** = लघुप्रतियोगिनीभिः । **साट्टाभिः** = साट्टालिकाभिः । निरट्टाभिः— अट्टालिकारहिताभिः । **सोल्लोचाभिः** = सवितानाभिः । **सनूपुराणाम्** = कुलयोषित्पदवर्तीनां नूपुराणां नूपुरेण यो भणत्कारः = भणभणशब्दः तेन

विस्मायिताः = क्षोभं नीताः मीनाः मत्स्या याभिः एवंभूताभिः **तरणिभिः** = नौकाभिः **विलोडितनीलनीरा** = विमर्दितकृष्णपानीया । **परःशतेति**— परःशतकमठपृष्ठानाम्=असङ्ख्यातकच्छपपृष्ठानां बिम्बप्रतिबिम्बैरिव, **प्रतिसायम्** सायं सायं प्रति—**निविशमानाः** प्रविशन्तः वगाहमानाः = निमज्जन्तः नीलगिरेः = नीलाख्यपर्वतस्य गण्डशैला इवाऽऽचरन्तः ये सिन्धुराः = गजाः तेषां घटानां यूथानां चालनैः धावनैरिव, सकलैः कलङ्कदोषैः अङ्कितमुद्रितो ये दिल्लीवल्लभोऽवरङ्गजीवः तस्य सम्पर्कैः = संसर्गैरिव च **श्यामश्यामा** = अत्यन्तनीला । **सन्तरणासक्तैः** = तारकिरणलग्नैः **यवनयुवकैः**—यवनयुवभिः । **विक्षोभ्यमाणा** = विस्फाट्यमाना । **जलयुद्धेति**—जलयुद्धे = जलक्रीडायामासक्ता ये यवनबालकाः तेषां करयन्त्रेभ्यः च्युतानां स्खलितानाम् अम्बुबिन्दूनां जलकणानां स्पर्शात् सम्पर्कात् भीतैः त्रस्तैः **अवसार**मवसारम् उपविशद्भिः = स्थितिं कुर्वाणैः ब्राह्मणैः **सेव्यमाना** = आश्रीयमाणा । **क्वचिदिति**— प्रक्षिप्तः मांस मग्रे यस्य एवं भूतोयो बडिशः मीनवेधनी तत्र बद्धा रज्जुर्हस्तेयेषां तैः, जलचराणां मानानां तालुवेधं = तालुभ्रणं प्रतीक्षमाणैः यवनैः । **तरङ्गभङ्गैः**— लहरीचालैः । वक्षो **घ्नती**—ताडयतीव । स्पष्टमन्यत् । **दक्षतः** = दक्षिणे पार्श्वे । **अतिवाह्य** = गमयित्वा । **स्वावासम्** = स्वं स्वं नीडम् । **विहितकलकलैः** सञ्चालितचुङ्कृतैः **विहङ्गकुलैः** = पक्षिणां व्रातैः उद्यानानि व्याप्तानि इति सम्बधः । **ग्रामटिकानाम्** = क्षुद्राणां ग्रामाणाम् । **पद्याः** = पद्धतीः **अन्वसरन्** = अनुचेलुः ।

पृ० ३६१ । **गोपुरोवरोधः** = महाद्वारबन्धनम् । **द्विमुखपन्थानम्** = उभयतःपद्यं मार्गम् । **सक्षवृक्षम्** = न्यग्रोधतरुम् । शाखाबद्धान् = **खुराणा**मग्रैः उन्मथितः उत्खानितो भूभागो यैः तानश्वान् । '**महाराष्ट्रराजोऽपि**—हयानालोक्य मन्दमगादीत्' इत्यन्वयः । कीदृशान् हयान्— **खलीनेति**- खलीनस्य कविकाया लेहनेन चर्वणेन या लीला = क्रीडा तत्र लीनान् लग्नान् । **अतिमुक्तकुसुमस्तबकैः** = माधवीसुमनोगुलुञ्छैः इव **फेननिचयैः** = डिण्डीरगणैः **परिपूजिता** सज्जतां नीता वसुन्धरा पृथिवी यैः तान्, सज्जा उपनिवेशनिका 'काठी' इति प्रसिद्धा येषां तान्, लम्बितः दोलायितः लौहः आयसः पादाधारः 'रकाब' इत्याख्यो येषां तान् । स्पष्टमन्यत् । **हयनियामकम्** अश्वसेवकम् । **विशालम्** = महान्तम् । **आजानेयम्** = अश्वम् । **उदतीतरत्** उत्तरमदात् ।

पृ० ३६२ ॥ **सादिनः** = अश्वारोहाः **एतेषाम्** = महाराष्ट्राधीशादीनाम् । **गतिम्** = चालम् । **रुरुधुः** = अवारुधन् । **सरलोऽयंमार्गं** = सरला सरणिः । **उदारा वाक्** = उद्भटा वाणी । **भव्या** = भद्रा **पर्यटनकौतुकिनः** = भ्रमणकुतूहलवन्तः ।

पृ० ३६३ **विमृशन्ति** = आलोचन्ते **सन्दिहानेन** = संशयवता । **भल्लाग्रेण** = फालाग्रेण **शिरोवेष्टनम्** = उष्णीषम् । **उत्तोलितम्** = उत्थापितम् । **लौहम्** = आयसम् **शिरस्त्रम्** = शिरस्त्राणम् । **उत्फालितवाहः** = उच्छालितघोटकः । **कश्यः** = कशया ताडयितुं योग्यः । **मुसल्यः** = मुसलेन घात्यः । **परिचिकाय** = परिचितवान् । **समशयिष्ट** = शेते स्म, मृतः पपातेत्यर्थः । **भल्लतल्लजम्**—प्रशस्तं भल्लम् ।

पृ० ३६४ । **वस्तान्** = अजान् एतान् । **आचक्राम** = आचुंकूर्दे । **सहयम्** = साश्वम् । **अपथेन** = अमार्गेण । **आषाढघनघटाम्** = वर्षाकालीनमेघच्छटामिव । **अपसृताम्** = दूरीभूताम् । **अक्षतविग्रहाः** = भद्रशरीराः । **क्रन्दताम्** = चीत्कारं कुर्वताम् । **अस्मत्प्राणरक्षकः** = अस्मज्जीवनरक्षकः । **प्रत्यार्थिनः** = शत्रून् । **आनृण्यम्** = ऋणापनयम् । **मत्कण्ठाखङ्गम्** = इति अलग्नार्थकमिव पदम् 'मत्कण्ठाऽर्पितखङ्ग' मितियुक्तं मन्ये । **झंझावात**पाताघाताहतः—महावातप्रपाताच्चुण्णः । **शुष्कच्छदः** = शुष्कपत्रमिव । **इष्वासपाणिम्** = धनुष्पाणिम् । **कटिवद्धेति**—कट्यां वद्धं निपक्तं तूणीरम् इषुधिर्येन स तम् । **विहितेति**—विहितः बहुलःप्रचुरः साधुवादो येन, समासादितः प्रसादः आल्हादो येन स तस्मिन् एवंभूते महाराष्ट्राजे । **सोऽपि** = तच्छत्रुहन्तापि । **वाहात्** = घोटकात् । उत्तीर्यः ... ... ... **कलितेति**—कलितो रचितो हयनियामकस्य वेषो येन सः । **प्रणन्तुकामम्** = प्रह्वीभवितुकामम् । **दासः** = भृत्यः । **तोषरोषभाजनन्** = प्रसादकोपपात्रम् ।

पृ० ३६५ ॥ **असाधारणः** = अप्राकृतः । **वन्धुः** = हितकारी, स्पष्टमन्यत् । **कण्टाकितः** = सरोमाञ्चः । **स्विन्नः** = खेदवान् । **वेपितः** = कम्पितः । **मुग्धमाणवक इव** = मूढवाल इव । **मुक्तकण्ठम्** = गलोत्पाटम् क्रियाविशेषणम् । **गौरः**—गौरसिंहः । **भगिनीजीवजीवनम्** = सहोदराप्राणपतिम् । **प्रेमवाष्पेति**—प्रेम्णा यो वाष्पपूरः अस्रप्रवाहः तेन पूरितः सावितः । **जटिवेषः**—ब्रह्मचारिवेषः । **अस्थिचर्मावशेषः** = अत्यन्तं कृशा इत्यर्थः । **प्रांशुः** = उन्नतः । **कदम्बेति** = कदम्बानां नीपानां कदम्बेन समूहेन संव-

लितः व्याप्तश्चासौ ( पन्था ) तेन **पथा**—मार्गेण । दिल्लीशसङ्केतेन अङ्किताः मुद्रिता याः पट्टिकाः ताभि राकलितः कटिबन्धो येषाम् तान् ।

पृ० ३६६ ॥ **श्यामवसनान्**=कृष्णावस्त्रान् । **रक्तशिरोवेष्टनान्**=लोहितोष्णीषान् । **भुशुण्ड्या** ( वन्दूकेन ' ) मण्डितो बाहुदण्डो भुजदण्डो येषां तान् ' अश्वारोहान् अपश्यन् ' इति सम्बन्धः । **हृष्यन्तः**=मोदमानाः । **अन्धकारमये**=तमःप्रचुरे । **पथि**=मार्गे । **विलीनाः**=अदृश्या अभूवन्नित्यर्थः ।

**इति ( नूतन ) शिवराजविजयपताकायां—**
**एकादशो निश्वासः ।**

* ॐ *

# द्वादशो निश्वासः ।

---

यदीय-भक्ति-भावना-पुनीत-मानसा नराः ।
तरन्ति दुःखसागरं नमामि तं रमापतिम् ॥ १ ॥
भवे भवे भवाम्बुधि-प्रभूतमज्जकश्मलम् ।
नरा न यान्ति यत्पराः परं परायणं भजे ॥ २ ॥
श्रुति-स्मृति-प्रमाणसिद्ध-रूपमद्भुतं हरेः ।
धरामि चित्तपङ्कजे शिवं शिवाय कीर्त्तयन् ॥ ३ ॥
अचिन्त्य-योगशक्ति-शक्य-मेयभाव-वर्जितम् ।
निरञ्जनं विभञ्जनं तमस्ततेः परं श्रये ॥ ४ ॥
जपतां जुह्वतां नित्यं ध्यायतां कृष्णसन्मणिम् ।
चिन्तितार्थजया भूति र्भव्या भूमौ भवेन्नृणाम् ॥५॥

एकादशे निश्वासे लोहपञ्जरमुक्तस्य सिंहस्येव दिल्लीकलङ्कमुक्तस्य शिवस्य स्वदेशाभिमुखं प्रस्थानमुपसंहृत्य सम्प्रति द्वादशनिश्वासमारभमाणः शिवशान्ति-महोत्सवं सौवर्णीमङ्गलादि वृत्तञ्च ग्रन्थयन् आदौ वृत्तोपक्षेपकविधया 'तासाम्'—इति भागवतं 'यत्र योगेश्वरः'—इति गीतासम्बन्धि प्रतीकमुपादत्ते ग्रन्थकारः । श्लोकयोः संक्षिप्तार्थस्तु—तासाम्=भगवद्वियोगानलतप्तमनसां गोपीनां मध्ये शौरिः = श्रीकृष्णो भगवान् आविरभूत् = प्रकटो बभूव । कीदृशः—स्मयमानं विकसितं मुखमेव अम्बुजं कमलं यस्य सः तथा—पीताम्बरधरः, स्रग्वी = वैजयन्तीमालाभूषितकण्ठः, साक्षात्मन्मथमन्मथः = वस्तुत एव मदनमथनशीलः वशीकृतकाम इत्यर्थः । एतेन श्रीभागवते कृष्णः कामसावित इत्यंन्यो गीताकृष्ण वदन्तः केचित् परास्ताः भागवतपुराणान्तर्गतरासमर्मानभिज्ञानात् । यत्रेति—योगेश्वरः = सकलमायानियन्ता कृष्णः = सकलाघहन्ता जगदीश्वरः साच्चिदा-नन्दं ब्रह्मेत्यर्थः, पार्थोऽर्जुनो धनुर्धरः श्रीः = लक्ष्मीः सकलसम्पत्तिः विजयः = परम उत्कर्षः । भूतिः = ऐश्वर्यम् । नीतिः = नयः । स्पष्टमन्यत् । गम्भीरतत्त्व-रेखान्यत्र दर्शितम् ।

पृ० ३६८ ॥ **अरुणोदयः** = प्रातःकाल इत्यर्थः । "अरुणोदय-वर्णनेनोपक्रम्य तेनैव समापयन् उपक्रमोपसंहारयोरैक्यं दर्शयति ग्रन्थकारः" इति प्राचीनलघुटिप्पणे उक्तम् । **कलविङ्कैः** = चटकैः । **तनूभूतम्** = सूक्ष्मीभूतम् **तमः** = अन्धकारः । **इरम्मदः** = मेघः । **मयूरान्** = बर्हिणः । **मतङ्गमोहनम्** = गजमत्तताकरम् । **उद्गिरति** = वमति बहिःप्रकटीकरोतीत्यर्थः । **रसा** = पृथिवी । "रसा विश्वम्भरा" इत्यमरः । कथम्भूता—नवेति—नवानां नूतनानां वारिदानां मेघानां वारिभिः जलैः सरसिता आर्द्रा सतीत्यर्थः । **दिष्ट्या** = हर्षे अव्ययम् । **मनोरथैः**=सङ्कल्पैः । **गुप्तवेषः**=गोपिताकृतिः । **ह्यः**=गतेऽह्नि । **आनन्दमयः**= आनन्दप्रचुरः । **विषादम्**=खेदम् । **समनुभव**=भुङ्क्ष्व । **महादेवसेवायाः**= शिवार्चनायाः । **नमस्यायाः** = नमस्कारस्य । **तपस्यायाः** = तपश्चर्यायाः **परिणामम्** = फलम् । **अवसन्नानि** = अवसितिं गतानि समाप्तानीत्यर्थः । **दुरदृष्टानि** = दुष्टानि आरब्धकर्माणि । **सन्तापेति**—सन्तापेन विरहदुःखेन तप्तैः श्वासैः **शुष्कम्** = नीरसम् । **हासरसैः**=नर्मालापसुखैः अधरं **रक्षय**=रक्तीं कुरु । अधरे रागो दीयते सुन्दरीजनेन । **अञ्जनरञ्जनरहिते** = कज्जलचर्चनशून्ये । **क्रन्दनेति**—क्रन्दनवारिबिन्दुव्रजैः = विलपननेत्रजलकणगणैः यद्दुर्दिनदुःखं तत्र स्थिते वर्तमाने अर्थात् रोदनविह्वलीभूते । 'नयने' इति कर्मभूतम् । **आमोदामृतासारैः** = आमोदो हर्ष एवाऽमृतम् तस्य आसारैः धाराप्रपातैः **स्नपय** = धावय । **सतोरणाः** = बहिर्द्वारसहिताः । 'तोरणोऽस्त्री बहिर्द्वारम्' इति (अमरः) ।

पृ० ३६९ ॥ **महादेवम्** = शिवम् । **परिक्रम्य** = प्रदक्षिणीकृत्य । **पुलकाऽवरुद्धकण्ठा** = पुलकैः रोमाञ्चैः अवरुद्धः गलच्छ्वासः कण्ठो यस्याः । **व्यतीताः** = गताः **दुर्घटनाः** = दुरवस्थाः । **स्मारस्मारम्**=स्मृत्वा २ । एवमन्यत् । **समूलतपस्या**=परिपूर्णतपस्या इत्यत्र तात्पर्यम् । **तत्**=तस्माद्धेतोः **तपस्विनीवेषम्** = व्रतिनीनेपथ्यम् । **गङ्गाधरस्य** = महादेवस्य । **परमेति**—परमानन्दसंदोहस्य प्रगाढहर्षसमूहस्य मदेन मन्थरा=सालसा सती । **व्याहृत्य**= वाचयित्वा । **आनन्देन**=रघुवीरागमश्रवणजनितेन हर्षेण या अश्रुकला=नेत्रवारिबिन्दुकणिका ताभिः आकुलितौ स्नावितौ कपोलौ गण्डयुगलं यस्याः सा (सौवर्णी) **अस्तोष्ट** = गुणैरकीर्तयत् । **भस्मोद्धूलितेन** = भस्मना लिप्तेन । **माभैरिति**—३०० पृष्ठे दशमे निश्वासे 'सुन्दरि मास्म भैषीः' इति

लिखन् अत्र "माभै" रित्यसकृदाभाष्य—इति ग्रन्थन् ग्रन्थकारः युक्तोऽयुक्तो वेति पण्डितैरेव चिन्त्यः। अस्माकन्तु महन्मानपात्रम्, शब्दवारिधिश्चागाध इति संक्षेपः। **वलित**:=वेष्टितो व्यालबाल एव वलयो यस्मिन् तेन 'बलितवालव्यालवलयेन' इति तु युक्तमाभाति।

**पृ० ३७० ॥ तत्परिपूजितमूर्त्तौ** = सौवर्णसमर्चितमहादेवप्रतिमायामित्यर्थः। **निलीनः** = लयङ्गतः। '**स्वयञ्च**—तथैव समस्थित' इत्यन्वयः। **बद्धसौवर्णोष्णीषम्** = धृतसुवर्णमयशिरोवेष्टनम्। **लोलच्चन्द्रहासम्** = दोलितखड्गम्। **पुलकांशुपूरिपूर्णेति**—'पुलकांशुपरिपूर्णमालोललोचनम्' इति स्याच्चेत्तदाऽयमर्थः—'पुलकांशुपरिपूर्णम्'=सरोमाञ्चम् 'आलोललोचनम्'= हर्षवशात् समन्ततश्चपलनेत्रम् 'दृशा लिहन्तमिव'—इत्यादिषु सर्वत्रोत्प्रेक्षालङ्कारः।

**कर्णरसायनम्** = श्रोत्रानन्दकरम्। **उन्मील्य** = उद्घाट्य। **रघुवीरसिंह**मदर्शत्' इत्यन्वयः। कथम्भूतं तम् = **जीवनाधारम्** = प्राणाश्रयम्। ध्याने—समाधौ विहितः कृतः साक्षात्कारो यस्य तम्। **विलुलिता** = प्रेमवशात् प्रचलिता अश्रुधारा यस्य तम्। **संसारसारम्** = संसारे सारभूतम् अतिप्रियत्वात् पतिव्रतानां पत्युरेवसारत्वाच्च। प्रापितः = गमितः पीडायाः पारावारः समुद्रो येन तम्। **अभिहितः** = कथितः प्रवाहितः इत्यर्थः वचनमेव पीयूषममृतं तस्य आसारः धाराप्रपातो येन तम्। **अनपेक्षितेति**—अनपेक्षिता न ध्याता व्रीडा लज्जा येन सा, **समनुभूता**=सम्यक् भुक्ता या चिरविरहपीडा—बहुकालवियोगव्यथा तया आकलिता रचिता कृता विक्षिप्तक्रीडा उन्मत्त (पागल) खेला यया सा मुक्तकण्ठं यथा स्यात् तथा **रुरोद**=विललाप। **कण्टकितेति**—कण्टकितकरेण रोमाञ्चवता पाणिना आकलितो धृतो यः पटखण्डः कर्पट इति तेन, **कपोलतले** गलन्ती स्खलन्ती या अश्रुधारा ताम् **प्रोञ्छितवान्**=ममार्ज। **उपवेश्य**=ताम् आसयित्वा **उपविश्य**=(स्वयम्) आसित्वा। **दुरदृष्टदशा** = दुर्ग्रहदशा। तैव **पुण्यैः** = सुकृतैः। **दुष्कीर्तिवेदनाम्**—अपयशोव्यथाम्। **विधूय**= दूरे नीत्वा विनाश्येत्यर्थः **परमपुरस्कारभाजनम्**—परमपारितोषकपात्रम्।

**पृ० ३७१॥ 'अहह** क्व ते नवनीतकोमलानि अङ्गानि क्व चैतद्ब्रह्मचर्यम्' इत्यत्र **विषमालङ्कारः** उक्तञ्च—"विरूपयोः सङ्घटना"—इति। **प्रकृतिकुञ्चिताः**—स्वभाववलनावलिताः **कचाः** = केशाः। **जटाजूटताम्**—जटारूपेण जूटभावम्। **भसितसंघर्षम्**—भस्मलेपम्। **मौक्तिकमालागौरवम्**—मुक्तामालाभारम्। **सम्लान**—म्लानम्। **रुद्राक्षराशिभारकष्टम्**—रुद्रा-

क्षमालापरिधानमित्यर्थः । कुसुमेति—कुसुमानां पुष्पाणां शयनसनाथनस्य = शयनविलासस्य प्रार्थनाया भाजनं पात्रम् । **स्थण्डिलशय्याम्** = भूमिशयनम् । **साधयामि** = गच्छामि । **आनन्दपरवशा** = रघुवीरसिंहमिलनजनितहर्षाधीना । **जडीकृतेव** = स्तब्धेव । **चित्रार्पितेव** = लिखितेव । **मन्त्रकीलितेव** = मन्त्रयन्त्रितेव । **मायामोहितेव** = ऐन्द्रजालिकविद्यामुग्धेव । **विक्रीतचित्तेव** = दत्तचित्तेव । **हृतहृदयेव** = चोरितहृदयेव । **मथितमानसेव** = विलोडितस्वान्तेव । **अविरलेति**—अविरलं गलतो नयनजलस्य धारया **भसितसम्मर्दम्** = भस्मलेपमिव **क्षालयन्ती**—प्रोञ्छन्ती । **मोमोद्यमानः** अतिशयेन प्रसन्नीक्रियमाणः । **सच्चरीक्रियमाणः** = अत्यन्तं सत्क्रियमाणः ।

**पृ० ३७२** ॥ परमं मादसन्दोहमवाप = रघुवीरसिंह इति कर्त्ता । मोदसन्दोहम् = हर्षकूटम् । **तत्पूजकेन** = हनूमन्मन्दिरपूजाधिष्ठात्रा । **सशीराशिसमाश्लिष्टः** = आशिषां राशेर्दानपूर्वकमालिङ्गितः । **प्राप्ता** प्रसादमाला येन सः । **सम्पादितं** सम्भूषितं सिन्दूरतिलकेन भालं मस्तकं येन सः । **साष्टाङ्गम्** = दण्डवदित्यर्थः **प्रणनाम**=अभ्यवन्दिष्ट । "**देवशर्मा तु**-वक्षसि गाढमालिलिङ्ग" इति सम्बन्धः । **तादृशं स्वरम्**—रघुवीरसदृशं शब्दम् । **चकितः** = विस्मितः । **जड इव स्तब्धः** = मूढ इव निश्चेष्टः । **उपनेत्रम्**-अयनकम् । **श्मश्रुकूर्चम्** = श्मश्रुश्चकूर्चश्च अनयोः समाहारः तत् "मूर्च्छादाढिके" । इत्यर्थः **प्रक्षाल्य** = आर्द्रयित्वा . **पतन्तीभिः**—प्रस्खलन्तीभिः **वाष्पधाराभिः** = अश्रुप्रवाहैः । **तम्**—रघुवीरम् । **आसिच्य** = क्लिन्नं कृत्वा । **समुदञ्चितैः**—उद्गितैः **श्वेतरोमभिः** = सितवालांकुरैः व्याप्तः । श्वेतरोमव्याप्तिम् '**आनन्दाक्षतैरिव**' इति तृतीयान्तैरुत्प्रेक्षते । **आनन्दाक्षतैः** = हर्षतण्डुलैः **वात्सल्येति**—वात्सल्यं प्रेमैव रजतं तैरिव । **प्रेमा** एव पीयूषममृतं तस्य धाराणामुद्गारैर्निस्सरणैरिव, **निःसरद्भिः** निर्यद्भिः । **कष्टस्य** कण्टकैरिव समुदञ्चितैः । **वलिततवलीपलिते**........................**अस्थिचर्ममात्रे** = अस्थिचर्मावशेषे । **वक्षसि**=क्रोडे । **सोऽपि** रघुवीरोऽपि । **तुरगनिगालम्**-अश्ववल्गाम् । **आस्फाल्य** = आकृष्य । **सोत्फालम्** = सकूर्दम् । **अभीषून्** अश्वरश्मीन् । **पलाशिनाम्** = वृक्षाणाम् ।

**पृ० ३७३** ॥ 'तत्र कुटीरे' इत्यग्रिमं वृत्तमाह—**जटिलः** = ब्रह्मचारिवेषः । **वीरगतिम्** = वीराणां गतिं निर्भीकं मृत्युम् । **शोकविमोकम्** = शोकस्य विमोचनम् । **चिरेति**—चिरमनुभूतं मुक्तं सुताविषयीभव

विरहस्य दुःखं येन सः। '**खिद्यतेतमाम्**'—अत्यन्तं दुःखितो भवति । **ऊर्जस्वलैः**—उद्भटैः । **वागासारैः** = वाचांप्रवाहैः **मन्दं चक्रुः** = शमयाम्बभूवुः । **कृष्णकर्णी**—तुरगं चालयन्' इति सम्बन्धः । द्वितीयान्तानि तुरगविशेषणानि । **चञ्चदिति**—चञ्चत् चमत्कुर्वत् चन्द्र इव वर्चो यस्य तम् । **उन्नतग्रीवम्** = ऊर्ध्वीकृतकन्धरम् । **मेचकेति**—मेचकानां कृष्णवर्णानां कचानां केसराणां प्रचयेन वीजितः भजमानः निगालः = गलोद्देशो यस्य तम् । **धूम्रेति**—धूम्रलाङ्गूलस्य = धूसरवर्णपुच्छस्य उद्धूननेन विहितं चामरचालनस्येव चातुर्यं चातुरी येन तम् । **चर्वणावशिष्टैः** निगरणाशेषभूतैः **प्रत्यर्थियशोभिरिव** = शत्रुयशोभिरिव **फेनैः**—डिण्डीरैः । **आलिप्ता** = सर्वतोव्याप्ता सृक्किणी = ओष्ठप्रान्तभागो यस्य तममुं तुरगं चालयन् । **उपत्यकाम्** = अद्रेरासन्नां भूमिम् **परिक्रम्य** = परितो भ्रान्त्वा इत एवायाति । **अनुकरोति** = अनुसरति । अस्य **आकृतिः**—मूर्तिः । **हयारोहभङ्गी** = अश्वारोहणप्रकारः । **संशेते**—संदेहाकुलं भवतीत्यर्थः ।

**पृ० ३७४** ॥ **व्याजह्रुः** = अवोचन् । **प्रसूतिः** = प्रसवः सन्ततिरित्यर्थः । **समाकर्णि** = अश्रावि । **तोषितप्रभुः** = तोषितः प्रसन्नीकृतः प्रभुर्येन । **वीरेन्द्रसिंहव्रतस्य** = वीरेन्द्रसिंहकृतमहादेवाराधनरूपस्य फलम् । **विजृम्भितः** = प्रकटीभूतः । **परिणामः** = परीपाकः । **वटूनाम्** = ब्रह्मचारिणाम् । **अश्रुकलाभिः** = वाष्पधाराभिः आकुलिते लोचने यस्य सः ।

**पृ० ३७५** ॥ '**न लक्षितः** केनापि' इत्यन्तेन गद्येन जनबाहुल्यं प्रेमप्रवाहोच्छलनप्राचुर्यञ्च व्यज्यते । **तयोः** = पितृपुत्रयोः । **मेलनेति** = मेलनस्य समागमस्यावलोकनेन चकितः विस्मित इव । **महापरिणाहः** = विशालतरः । **गतव्राहः** = .... ....... ........विगलन् = प्रस्रवन् स्वदप्रवाहो यस्य सः **वाहः** = अश्वः । **निरभीषूकृत्य** = निष्प्रग्रहीकृत्य । **घोटकः** = अश्वः । **हर्षवर्षपरवशः** = आनन्दवृष्टिपराधीनः । **पारस्परिकेति**—पारस्परिक प्रेमपूरप्रवाहस्य = अन्योन्यप्रीत्युच्छालौघस्य ये आवर्त्ताः = अम्भसां भ्रमाः एव गर्त्ताः तास्मिन् यत् परिपतनं स्खलनं ततो भीतेव त्रस्तेव **वाणी** = वाक् । न **प्रचचार**= नैव प्रासरत् । **व्यतीतेति**—व्यतीताया गताया व्याकुलतायाः दुःखपरम्परायाः विषये ।

**पृ० ३७६** ॥ **नेदिष्ठानाम्**=अत्यन्तमन्तिकवर्त्तिनामपि, परस्परदिदृक्षया= परस्परदर्शनेच्छया नाम् = कृशम् हृदयं येषाम् । **अपरिचिन्वताम्** = परिचय-

मकुर्वताम् । '**नेदिष्ठानामपि**—मिलिता वयम्' इत्यन्तं गद्यमलग्नार्थकमिव मे भाति ।

**भोक्तव्यम्** = अवश्यं भोगार्हं सुखं दुःखं वा । **विद्रावितनिद्राः** = विद्राविता दूरीभूता निद्रा यासु । **तन्द्रादरिद्राः**=प्रमीलोपेताः । **महायामयामिन्यः** = दीर्घतरप्रहरवत्यः **यामिन्यः** = रात्रयः । **नोदासितव्यम्** = औदासीन्यं नाश्रयणीयमित्यर्थः । **सारगर्भाम्** = उचितार्थोपेताम् । **उपदेशपूर्णाम्** = भोक्तव्यस्याऽवश्यभोग्यतादिरूपः उपदेशः तद्युक्ताम् ।

**धैर्यधुराणाम्** = धीरताविशिष्टाम् **कोमलाम्** = मृद्वीम् । **अमलाम्** = शुद्धाम् । **वाचम्** = वाणीम् **परमेति**—परमानन्दसन्दोहेन समुद्वेल्लन्तः उच्छलन्तो ये वाष्पाः तेषां विन्दूनां कणानां व्रजेन समूहेन । **क्षालयाम्बभूवुः** = स्नावयामासुः अर्थात् तेषां प्रेम्णाऽस्रप्रवाहो निरगात् । '**कलितकम्पया**'—इत्यादि तृतीयान्तं 'लेखन्या' इत्यस्य विशेषणम् ।

**पृ० ३७७ ॥ अविरलेति**—अविरलं गलन्ती प्रस्रवन्ती साञ्जनवारिधारा = मषीधारा यस्याः सा तया । **सामग्रीसाधनम्** = व्रतपारणोपकरणम् । स्पष्टमन्यत् । **सादी** = अश्वारोहः । **एनम्** = पूर्वारूढमश्वम् **आर्द्रपृष्ठीकरणाय** = विश्रामोपेतीकरणाय ।

**तौ** = रघुवीरः रघुवीरानुसरसादी च **खुराग्रेण** = शफपुरोभागेन **शारदघनपटलमिव** = शरत्कालीनमेघमण्डलमिव **रेणुकाराशिम्** = धूलिपुञ्जम् । **उद्गिरन्तौ** = उत्थापयन्तौ, **प्रलम्बपुच्छौ** = दीर्घलूमौ **आयतग्रीवौ** = विशालकन्धरौ **समीरणस्य** = पवनस्य संसरणेन संस्तब्धाः कण्ठस्यकेशाः ययोस्तौ । **सप्तसप्तिः** = सूर्यः तस्य सप्तयः अश्वाः तेषां **दर्पम्** = गर्वं दूरीकर्तुमिवेति उत्प्रेक्षा ।

**पृ० ३७८ ॥** अङ्गारपरिपूर्णाम् = इङ्गालव्याप्तामिव **भुवम्** = पृथिवीम् । **उत्फालमुत्फालम्** = उत्पाटमुत्पाटम् । '**पलमेकं** स्पृशन्तौ' इत्यस्य स्थाने '**पदमेकं** स्पृशन्तौ' इति युक्तं भाति अतिशीघ्रचालत्वात् एकमिव पदं = चरणं स्पृशन्तौ इति **लुप्तोत्प्रेक्षा** स्यात् । एवंभूतौ **वाजिनौ** = घोटकौ चालयन्तौ = तावित्यर्थः । **निलिल्यतुः** = निलीनौ बभूवतुः । '**गणेशशास्त्री** महोत्सवमकारयत्' इत्यन्वयः । **वीरम्** = वीरसिंहम् । **व्रतोत्सर्गम्**=व्रतपारणाम् । **उद्वर्त्य** = उद्वर्त्तनं कारयित्वा । **अभ्यञ्ज्य** = तैलं मर्दयित्वा । **प्रणमय्य** = नमस्कारयित्वा । **अवितर्कित**... = अतर्कितोपनतः । **आपयत्**=

ददौ । ' **सच**—गणेशहस्ते आर्पयत् ' इति । सच = वीरेन्द्रसिंहः । **श्रीदिगन्तेति**—दिशामन्ताः दिगन्ताः तेषां दन्तैः मुखैरित्यर्थः दन्तुरिता गर्भीकृता या कीर्त्तिरेव कौमुदी चन्द्रिका, तया धवलिते शुभ्रीभूते वसुधातले पृथिवीतले यो राजपुत्रदेशः तस्य चूडामणीभूतो शिरोमणीभूतो यो जयपुरप्रदेशः तस्मिन् ये सामन्ताः माण्डलिका राजानः तेषां मण्डल्या मस्तकमण्डनेन ललाटभूषणेन अर्थात् मुकुटेन मण्डितं सज्जितं पादारविन्दं यस्य स एवम्भूतः—जयपुराधीशः । **साशीराशि** = आशिषां शशिभिः सह। **अन्वेषणैः** = गवषणैः। **चिरम्** = बहुकालम् **अन्वभूम** = अभुञ्ज्महि **चिन्ताकलापम्** = चिन्तासन्तानम् । भवतः **सम्पत्** = गृहादिसम्पत्तिः । **शीर्णानि जीर्णानि** = त्रुटितानि स्फुटितानि ।

पृ० ३७६ ॥ **मण्डलेश्वरतापर्यवसायि** = माण्डलिकशास्तिरूपमित्यर्थः । **राजपदमर्पयामः** = अर्थात् ' एनं ' सामन्तं राजानं विधास्यामः ' इति । **दैवघटनायाः** = प्रारब्धयोगस्य। **वैचित्री** = विचित्रता। **नैष्ठिकतपसाम्** = ब्रह्मचर्याणामित्यर्थः । **समोदम्** = सहर्षम्। **सुगन्धितसलिलैः** = सुरभिपानीयैः " **अभितः** पन्थानम् "—मार्गस्य समन्तादित्यर्थः **रम्भास्तम्भाः** = कदलीस्तम्भाः **सम्भाविताः** = सुसज्जायिताः । **कुङ्कुचर्चिताः** = केसरच्छुरिताः । अम्भःपूर्णाः = जलभरिताः, कुम्भाः स्थापिताः । मङ्गलहेतवे इत्यर्थः । **अशोककिशलयमाला** = अशोकपत्रमालाः ।

पृ० ३८० ॥ **ध्वजाः**=पताकाः। **आरोपिताः**=आयोजिताः । इतः पश्चाच्च **सन्तस्थे**=अत्र प्रायः सम्पूर्वकस्थाधातोरमङ्गलव्यञ्जकत्वाद**श्लील**मिदम्पदमिति मे मतिः, परं सूरयः प्रमाणम्। '**संस्थाञ्च** पाण्डुपुत्राणाम्' इत्यादौ 'संस्थाम्'=मृत्युमित्याद्यर्थदर्शनात् ।( **शोणितं** = रक्तं शीर्षण्यं = शिरस्त्रं शीर्षे येषाम् । **सधनुर्बाणानाम्** = धनुष्पाणीनाम्, सायकधारिणाञ्चेत्यर्थः । **कलितवारबाणानाम्** = धृतसन्नाहानाम् । " वर्मभृतां नाम् = धृतकञ्चुकानाम् । **कावचिकानाम्** = धृतसन्नाहानाम् । " ठञ् कवचिनश्च " ( ४।२।४१ ) इति सूत्रेण कावचिकं गणे " इति ( अमरः ) । " ठञ् कवचिनश्च " ( ४।२।४१ ) इति सूत्रेण समूहार्थे ठञ् । कवचिनां समूहः " कावचिकम् " तेषाम् । **पङ्क्तिः** = राजिः । कीदृशानां—" अपरा—सादिभटानां श्रेणी अवतस्थे " इति सम्बन्धः । **व्यूढकङ्कटानाम्** = परिधृतजगराणाम् । "उरच्छदः कङ्कटको जगरो कवचोऽस्त्रियाम् " इति ( अमरः ) । पुनः—**आस्फोटिताः** = आपोथिता घोटकानां केसरालियैः तेषाम् । पुनः—मौर्व्याः प्रत्यञ्चाया घातसंघट्टेन = पुनःपुनराताडनेन

यः किणः घर्षव्रणः तेन विकटे = निम्नोन्नते मणिबन्धे करभे संसर्पीणि हाटककटकानि सुवर्णवलया येषाम् । **प्रतिघोटकेति**—घोटकविंशतिकं घोटकं विंशतिकं प्रतीति प्रतिघोटक विंशतिकम् तावत्यन्तराले " कुञ्जराः उपस्थिताः " इति सम्बन्धः । कुञ्जराः = गजाः । कुञ्जरान् विशिनष्टिः—**विविधेति**—विविधैरनेकप्रकारैः मण्डनैः भूषणैः मण्डिताः शुण्डादण्डा येषां ते । **मौक्तिकानां** = मुक्तानां स्तवकैः गुत्सकैः चोचुम्ब्यमानाः तथा दानवारिधारायाः = मदजलधारायाः आसारेण सम्पातेन क्षालितानि कपोलानि येषां ते । **वमथुना** = सजलफूत्कारेण परिषिक्ताः आर्द्रीकृताः पार्श्वपरिवर्त्तिनां तुरङ्गारोहाणां सादिनां अङ्गनिचोलाः कवचा यैः ते, **नीलाद्रिसानुमञ्जुलाः** = नीलपर्वतशृङ्गसुन्दराः । " **यान्** = कुञ्जरान् बहवो ब्राह्मणबटवः समारूढाः " इति । कीदृशः—**कुसुमानां** पुष्पाणां निचयैः समूहैः आकीर्णानि व्याप्तानि पात्राणि हस्ते पाणौ येषां ते ब्राह्मणबटवः ।

प्रतिगजद्वयानन्तरम्=प्रत्येकगजद्वयान्तराले । **दौन्दुभिकेति**—दौन्दुभिकाः= दुन्दुभिवादकाः । वैणविकाः = वैणवशिल्पिनः । वैणुवादनशीला इत्यर्थः । वैणिकाः= वीणावादकाः । **मार्दङ्गिकाः** = मृदङ्गवादकाः । मौरजिकाः = मुरजवादिनः एषु सर्वत्र—**शिल्पम्** ( ) इति सूत्रेण ठक् । **पाणिघाः** = पाणि-ताड़काः । **पाणिघताडघौ शिल्पिनि** ( ३ । २ । ५५ ) इति निपातनात् साधुः । पाणिं घ्नन्तीति " पाणिघाः "

"**अथ**—सत्पथेऽस्मिन् न्यविशत महाराष्ट्रचक्रवर्त्ती" इति दूरेऽभिसम्बन्धः । वारुणीति—**वारुणी** = पश्चिमा दिक् तस्याः संसर्गेण अधिकशोणे = अत्यन्तं रक्ते अस्तमनकाले सूर्यस्यैवंवर्णत्वात् । वारुणी = सुरा च, अन्योऽपि वारुणीसंसर्गेण ( पानेन ) रक्तस्याधिकसञ्चारात् शोणो भवतीति **वस्तुध्वनिः** । **लज्जयेव** = व्रीडयेव । **पाश्चात्येति**=पाश्चात्यपर्वतस्य पङ्क्तय एव जवनिका प्रतिसारिणी तस्या अन्तर्निलीने अन्तःहिते, सुरादिनिन्दितं कर्म कुर्वाणोऽन्योपि लज्जाहतोऽन्तर्निलीयते इति **व्यङ्ग्यम्** । एवम्भूते **चण्डमरीचिमण्डले** = सूर्यबिम्बे । **चिरेति**— चिरकरस्पर्शेन उदीर्णो निष्कलितो यः स्वेदः तेन स्नातानि धौतानि वदनानि येषाम् एवम्भूतेषु **वीरेषु** = भटेषु । पुनः कथम्भूतेषु—पटान्तसङ्घर्षेण = अम्बरकोण संघट्टनेन अधिका द्विगुणा कान्तिः छविर्येषां तेषु । **परःशतेति**—परःशतानाम-संख्यानानां वादित्राणां वाद्यानां वादनेन उद्भूतो यो महाध्वनिः = महानादः तेन बधिरीकृतेषु **दिगन्तरालेषु** = दिशां प्रान्तभागेषु सत्सु ।

पृ० ३८१ ॥ **उदग्रीवैः** = उन्नतकन्धरैः । विस्मयात् ... तद्दर्शनैकचित्तः

त्वात्, निर्निमेषनयनैः = अनुरागाधिक्यात् । **निपीयमानः** = सादरमीक्ष्यमाणः। **सहस्रगुणयन्** = अतिमात्रं कुर्वन्नित्याशयः । "**चिरविरह**विधुराम्" = अतिकालवियोगव्याकुलाम् **आत्ममात्र**शरणजनगात्रयष्टिम् = स्वाऽनन्याश्रित-प्रजाजनशरीरमित्यर्थः। **पुनरुज्जीवयन्**=भूयोऽपि प्राणयन् । **दुर्दिनेति**–दुर्दिनैः दुःखप्रदैर्दिनैः शोषितं नाशितं यत् भारतस्यसौभाग्यम् ऐश्वर्यं तस्य, पुनरभिवर्षणेन= **हर्षमयम्** = आनन्दमयम् **अपरम्** = द्वितीयम् । "मेघच्छन्नेऽह्नि दुर्दिनम्" इति ( अमरः ) । "**दिशोऽपि** हासयन्"—इत्यादिगद्ये प्रायः **उत्प्रेक्षा** = **सुषुप्तिस्वादनस्पर्धिनः** = सौषुप्तानन्दप्रतिद्वन्द्विनः लोकोत्तरमहानन्दस्य । **आशीर्भि**रभिनन्द्यमानः इत्यादि निगदव्याख्यातम् ॥

**वाहुमूलेति**—वाहुमूले भुजमूले रोपिताः धारिता मल्लिकामतल्लिकाः = प्रशस्ता ( अतितीक्ष्णाः ) भल्ला यैः तेषामित्यर्थः । मल्लतल्लजानाम् = महामल्लानाम् आवलिपटलम् = राजिपरम्परेति विवक्षितोऽर्थः । **वनीयकी**—कृतेति । वनीयकी-कृतः याचकीकृतः अवन्यां भूमौ यवनीसमुदायः म्लेच्छकामिनीसमूहो येन सः । एतेन—अनेकयवनहन्तेति व्यक्तम् ।

**पृ० ३८२** ॥ **विप्रवटवः**—सुमनसः संववर्षुः इति सम्बन्ध । **मकरन्देति**—मकरन्दः पुष्परसः तस्य विन्दूनां सन्दोहप्रसारेण तुन्दिलानि स्थूलानि "वहुसौरभभाञ्जि" इत्यर्थः । **महासौरभेन** = अधिकगन्धेन समाकृष्टाः आसञ्जिताः परःकोटयः रोलम्बकदम्बाः = भ्रमरपुञ्जाः यैः तानि, मोदितानि हर्षितानि सकलानां जनानां मनांसि चेतांसि यैः एवम्भूतानि । **सुमनसः** = पुष्पाणि । "स्त्रियः सुमनसः पुष्पम्" इति ( अमरः ) । महासन्नाहेति—महान् सन्नाहो येषाम् एवम्भूतो यो विविधानां वाहानां घोटकादीनां प्रवाहाः यूथाः तैरित्यर्थः **सञ्चक्रम्यमाणा** = अत्यन्तं गम्यमाना **मोदेनेव** = हर्षेणेव **चकम्पे** = एजाञ्चक्रे । **वसुन्धरा** = पृथिवी एतेन जनतासम्बाधातिशयो व्यज्यते । **कुसुमेति** = कुसुमानां **मरन्दविन्दुभिः** मकरन्दकणैः **स्नातः** = व्याप्तः **समीरणः** = वायुः पुलकमिव समाससाद इत्यन्वयः । **आजुहाव** = आकारयामास । अत्र सर्वत्र उत्प्रेक्षा । **अखर्वेति**—अखर्वाणां महाकायानां गन्धर्वाणाम् अश्वानां खुराघातैः = शफोत्पाटनैः **धूलीभूय** रजोभूय उद्धतया **भुवा** = पृथिव्या अपि **आलिङ्ग्यमानः**=आश्लिष्यमाणः "प्रतापदुर्गमाससाद देवः" इति सम्बन्धः । "सादि" इत्याकारं पदमलग्नार्थकम्—"ससादि" इत्याकारं क्रियाविशेषणं तु भवितुमर्हति ।

**पृ० ३८३** ॥ '**तत्र** च—स्वावलोकनामोदपरवज्जनसमाकीर्णान् एव समद्राक्षीत्' इति सम्बन्धः। स्वस्य अवलोकनेन दर्शनेन परवन्तः नाथवन्तो ये जनाः तैः समाकीर्णान् व्याप्तान् 'गण्डशैलान्' इत्यादि । **दृक्पातेन** = दृष्टिदानेन **सम्मान्य** = मानयित्वा । **सपल्लवकलशहस्तान्** = सपत्रकुम्भपाणीन् ! **गिरतः** = उच्चारयतः। स्पष्टमन्यत् । **जननीति**—जनन्याः मातुः स्मरणेन् उद्भूतोद्भूतया = अत्यन्तं निर्गतया बाष्पधारया व्याकुलं विह्वलं लोचनद्वयम् = नयनयुगलं यस्य सः। दुर्गान्तः प्रविशेश । **अन्येद्युः**=अपरस्मिन् दिवसे। **महाराजेति**—महाराजस्य महाराष्ट्रमेदिनीस्वामिनः श्रीशिववीरस्य आगमनमहोत्सवेन पराधीना परतन्त्रा तदुत्साहवतीत्यर्थः या अनेकसहस्रशोपायना प्रजा तया परिवृतः वारितः प्रघाणोऽलिन्दप्रदेशो यस्य एवं भूतस्य **महाप्रासादस्य**= महाहर्म्यस्य, **चन्द्रशालायाम्** = शिरोगृहे। **उपविष्टः** = कृतासनः।

**प्राणयसि** = जीवयसि। **सङ्गरकष्टानि** = संग्रामदुःखानि। **सहसे**= मर्षयसे।

**पृ० ३८४** ॥ **यवनोद्दण्डेति**—यवनाःम्लेच्छा एव उद्दण्डशुण्डादण्डिनः = महागजाः तेषां गण्डमण्डम् = मुखमण्डलमित्यर्थः **केसरीव** = महासिंह इव। '**विश्वस्मिन्नपि** विश्वस्मिन्' = सर्वस्मिन्नपि संसारे। **सामन्तसिंहासनम्** = मण्डलेश्वरपदम् **विभ्रियेत** = अतिशयेन भ्रियेत पाल्येतेत्यर्थः।

**संवृत्येत** = भवेदित्यर्थः। **शासनम्** = राज्यव्यवस्था । **दक्षिणेति**—दक्षिणभारताभिजनस्य भरणे पालने यो भारः तेनाकुलः । **प्रकृतीः** = प्रजाः। **महापरिणाह**मिव = अतिविशालतामिवेत्यर्थः।

**पृ० ३८५** ॥ **प्रत्यर्थिनां** = शत्रूणां खड्गेन असिना आलीढप्रायः= प्रायः स्पृष्टः। '**भवान्** मां नारक्षिष्यत् चेत् शास्त्रिखानं नाजेष्यम्' इत्यत्र लृङ्।

**यवनानां** कारागार एवान्ध कूपः तस्मात् न **निरयास्यम्** = नैव निरगमिष्यम्। **जन्मान्तरीणपाप्मनाम्** = पूर्वजन्मपापानाम्।

'**इतः परः** दूरपर्यन्तं प्रायः गद्यं निगदव्याख्यातम् कानिचिद् स्वयमपि व्याख्यतव्यानि व्याख्याभ्यासपरैरिति ग्रन्थगौरवकरणाद् विभिमो वयम्।

**पृ० ३८६, ३६०** ॥ **परमप्रीतिपूरपूर्णः** = परमप्रेमपुञ्जभरितः। **देवं सम्बोध्य** = श्रीमन्तमामन्त्र्य । **अवदधामि** = दत्तचित्तो भवामि। **मदःपाटिताश्वरो देवः** श्रीशिवराजवीरवरेषु यथोचिताचारपुरःसरं स्वामिप्राय

प्रकटयति ' इति सम्बन्धः ।

कथम्भूतेषु श्रीशिवराजवीरवरेषु—**श्रीसकलेति**—श्रिया सहिता या सकला वसुमती पृथिवी तस्य वलये देदीप्यमानो जाज्वल्यमानो धैर्य-वीर्य—गाम्भीर्य प्रभावो येषां तेषु । तथा—स्वच्छन्दानां स्वतन्त्राणाम् उच्छृङ्खलानां निर्मर्यादानां म्लेच्छानां मण्डलस्य व्रातस्य मूर्च्छादीक्षायाम् अर्थात् हत्यादीक्षायां दक्षेषु = निपुणेषु । तथा—रणरङ्गे = समरभूमौ अगणिताः प्राणाः यैः तेषु । तथा—वैरिणां शत्रूणां व्राते समूहे कृपाकृपणः दयाशून्यो यः कृपाणः असिः तस्य धारया अवली ढानां चुम्बितानां भारतस्य प्रत्नसपत्नानां पुरातनशत्रूणां व्यग्रेभ्यो विकटेभ्यो ग्रीवाग्रेभ्यः कन्धराग्रेभ्यः प्रविगलता प्रस्खलता कवोष्णशोणेन ईषदुष्ण शोणितेन रुधिरेण,शोणच-न्दनद्रवे रक्तचन्दनरसेन इव चर्चिता भूभागाः यैः तेषु । तथा—स्वातन्त्र्यम् = स्वाधीनता स्वाराज्यमिति यावत् तदेव पीयूषममृतं तस्य प्रवाहेन राञ्जिता महारा-ष्ट्रदेशप्रदेशाः यैः तेषु । तथा—क्षत्रियभूपानाम् अनुरूपैर्योग्यैः आचारप्रचारैः वैदिकधर्मरक्षादिसव्यवहारपालनरूपैः प्रचुरीकृतः महामहीकृतः आस्माकीनः अभिमानो यैः तेषु । तथा—**परमस्नेहभाजनेषु** = परमप्रीतिपात्रेषु एवम्भूतेषु महाराष्ट्रचक्रवर्त्तिषु । **यवनवनदावदहनः** = म्लेच्छवनानलः । **करप्रदता**= बलिदानमेव कलङ्काङ्कपङ्कः = कलङ्कमुद्राकर्दमः तेन अनङ्कितस्य अस्पृष्टस्य वंशस्य अन्वयस्य अवतंसः शिरोभूषणभूतः वीरमित्रः—वीरपुत्र इत्यादि स्पष्टम् । **मेदपाटक्षितीश्वरः** = मेवाडाधीश्वरः। **तत्रभवतः** = पूज्यस्य । **म्लेच्छेति**— म्लेच्छाना मुच्छेदनं ध्वंस एव महाव्रतं तच्छ्रवणेन रोमाञ्चितानि प्रफुल्लितानि गात्राणि येषाम् एवंभूता अपि वयम्—' क्षुब्धहृदया आस्म ' इति सम्बन्धः । **चिरमखेदयत्** = चिरायं अपीडयत् । **करालः** = कठोरः । **कर्णशूल** इव= श्रवणशूल इव । **रोधोदन्तः** = बन्धनवृत्तान्तः । **सिंहवाहिनी** = दुर्गा । ' **ततश्चाहम्**—शार्दूलम्—वदनमण्डलम् च पश्यन् तूष्णींक एव तस्थिवान् ' इति दूरेऽभिसम्बन्धः । **शार्दूलम्** = ( देव्या वाहनं ) सिंहमित्यर्थः । कीदृशम्— प्रलम्बं दीर्घः सावर्त्तं=वलयितं लांगूलं लूमं यस्य तम्, तथा—विद्युतः चपलायाः विनिन्दकेन तिरस्कारिणा छटापटलेन द्युतिपुञ्जेन परिव्याप्ताभिः सटाघटाभिः जटाततिभिः आलिङ्गितः कण्ठो यस्य तम्, तथा—जाज्वल्यमानलौहगोलकयुगल-स्य=देदीप्यमानायसगोलद्वन्द्वस्य अवगूरणगरिम्णा = न्यक्कारगौरवेण गुरु बृहत् नयनगोलकं यस्य तम्, तथा—**शूली** = महादेवः तस्य शूलाग्रमहिम्नः उन्मूलनानां ध्वंसकराणां दशनानां दीप्त्या प्रकाशेन दूरीकृतोऽन्धकारप्रचारो येन तम्, तथा—

**पृष्ठेन** संस्पृष्टं देव्या दिव्यं दुकूलमुत्तरीयं वासो येन तं **परिपन्थि**प्रतिकूलम=शत्रुध्वंसनकरं **शार्दूलम्** = महासिंहं केसरिणमिति यावत् ।

**तलाग्रेति**—तलाग्रे विलसतां=शोभमनानां माणिक्यमणीनां मर्दनेन घर्षणेन यः शोणितसंघातः रुधिरस्यैकत्रीभवनं तेन शोणीकृतः रक्तीकृतः पञ्चानस्य सिंहस्य पृष्ठदेशो येन तादृशं **पादयुगलम्** = चरणद्वन्द्वम् अर्थात् देव्याः एव । **बालो**ऽभिनवोदितो यो भास्करः तस्य करनिकरैः = मयूखसंघैरेव **ग्रथितमिव**=स्यूतमिव **स्वप्रभाप्रवाहेन**=निजद्युतिपुञ्जपूरेण व्याप्तमम्बरम् आकाशं येन तादृशम् **अम्बरम्**=वासः । तथा **हरितेति**—हरित = पालाशः, शोणितः = कोकनदच्छविः, अर्जुनः = श्वेतः, हारिद्रम् = पीतवर्णः तदादीनामनेकावधं नानाप्रकारं यच्चाकचक्यं चमत्कारः तेन आक्षिप्तानि अक्षीणि ( अर्थात् द्रष्टॄणामेव ) यैः एवम्भूता ये अलङ्काराः तेषां निचयम् = वृन्दम् । **असीति**—अस्यादयः शस्त्रविशेषाः पूर्वं व्याख्यात प्रायाः ।

**पृ० ३६१ ॥ अहो** = आश्चर्यम् । **यस्याः** = भगवत्याः महामायायाः **चरणयोः** = पादयोः यो रेणुनिकरः = धूलिव्रातः तेनैव **ब्रह्माण्डमण्डलम्**= भुवनमण्डलम् **रचितम**स्ति ' इत्यन्वयः । कीदृशं तत् **शेषस्यापि** = अनन्तनागस्यापि **शिरोधार्यम्** = उत्तमाङ्गेनोद्वाह्यम्, **गङ्गाधरस्य**=महादेवस्य **भस्मच्छुरणछद्मना** = भसितलेपनव्याजेन । ' **आः** पश्यतोः पित्रोर्बालाः करपत्रैः कर्त्त्यन्त ' इत्यादिना पुनरपि वीररसाङ्गतय करुणरसमुपनिबध्नाति । व्याख्यानं स्पष्टमिव ।

**दिल्लीति** = दिल्लीदौर्भाग्यस्य दिल्लीदुरदृष्टस्य परिणामस्वरूपः फलरूपः ।

**पृ० ३६२ ॥ करालान्**=क्रूरान् । **जगज्जननीपदेन**=जगदम्बापदेन **विडम्ब्यसे** = अनुक्रियसे । **सत्ताविषयः** = अस्त्येव जगदम्बा इत्याकारकज्ञानविषयः । **विश्वासः** = श्रद्धा । **खिद्येथाः** = खेदं भजेथाः ।

**करटैः** = काकैः । सरटैः = कृकलासैः **एते प्रासादाः** = शत्रूणां हर्म्याणि । **स्वप्नकथानकानि** = स्वप्नवृत्तान्ताः । **वितथानि** = मिथ्याभूतानि न भवन्तीत्यन्वयः ।

**प्रबुद्ध** एव = शयनादुत्थितएव । **प्रहिणोमि** = प्रेषयामि । यवनराज्यस्य **स्तम्भभूतः** = मुख्य आधारः । **यवनकुलकरिकदम्बकेसरिणः** = यवनकुलमेव करकिदम्बं = गजयूथः तस्य तेषु वा सिंहान् **हस्तयित्वा** = हस्ते कृत्वा वशमानीयेत्यर्थः **युद्धमहाम्बुधिनिमग्ने** = युद्धमेव महाम्बुधिः महासागरः

तत्रनिमग्ने त्रुडिते । **सक्रन्दम्** = सविलापम् ।

पृ० ३६३ ॥ **विपत्तिम्** = शत्रुकृता क्रमणरूपामापदाम् । **प्रासीदत्** = जहर्ष । **निजभटैः** = स्वयोद्धृभिः **द्विगुणयन्तौ** = वर्धयन्तौ । बलद्दम् = शुद्धम् पक्षम् = पार्श्वम्, अस्माकं युद्धस्य न्याय्यत्वादिति भावः । **न चैषामिति**— एतेषां पक्षं नावलम्ब्यिन्ते इत्यर्थः । कीदृशां दुराचारयवनानाम्—**शरणागतघातकानाम्** = महानीचानामिति फलितार्थः अतएव **विहितं** कृतं महापातकं गोब्रह्महत्यादिरूपं यैः तेषाम् । तथा—**कुक्कुटानां** = चरणायुधानां कूटस्य = समुदायस्य कवलीकारेण आकलितं यत् कलुषं पाप्मा तेन कुटिलो वक्रो विश्वासानर्हः कर्कशः कठोरश्च आकारविकारप्रकारो येषाम् अतएव—**अकीर्त्तिसवनानाम्** = अपयशस्विनामित्यर्थः **श्मश्रूप्रान्तम्** = मूर्च्छितकोणम् । **परिमृशन्** = परिमार्जयन् ।

पृ० ३६४ ॥ **आख्यानुकूलाकारौ** = नामसदृशाकृती । **आखेटपरिभ्रष्टौ** = मृगयां कुर्वाणौ प्रनष्टौ । **स्थावरजङ्गमसम्पत्ती** = क्षेत्रादिरूपा स्थावरसम्पत्तिः, पश्वादिरूपा जङ्गमसम्पत्तिः ।

**भारताभिजन**भूरिभाग्यभवनम् = भारतदेशीयबहुभाग्यप्रसवकारि, तथा—**भारताभिभावकानाम्** = भारतशत्रूणां भाग्यस्य ऐश्वर्यस्य पराभवनम् = विध्वंसनकरञ्च **ऐक्यम्** = स्वजात्यसङ्घबलमित्याशयः आसादनीयम् । **पारस्परिको** विरोधः एव ज्वरः रोगराट् तेनाऽवलीढानि = कवलीकृतानि **बलानि** = **दुर्बलानि** = क्षीणशक्तीनि भवन्ति । **प्रेम** एव पीयूषं तस्य धाराभिः अभ्युक्षितानि = सिक्तानि ( तान्येव बलानि ) **महामहांसि** = महान्ति तेजांसि सम्पद्यन्ते ।

पृ० ३६५ ॥ 'दुग्धदग्ध' इति लौकिकमाख्यानम् । **सन्धेर्ज्ञातास्वादैः** = सन्धिनामकोपायरसविद्भिः । **अभाणकः** = लोकोक्तिः । **तिमिङ्गिलगिलप्रायैः** = तिमिङ्गिलगिलनामकमत्स्यसदृशैः । **गण्डूपदवृन्दानिव** = किञ्चुलकसंघानिव, **अदयिष्याव**: = भक्षयिष्यावः । **सचेति**—विजयध्वजो नाम सेनापतिरित्यर्थः ।

**सौवर्णेति**—सौवर्णप्रान्तैः अरुणैः रक्तैर्वस्त्रैः आलिङ्गिताङ्गः = परिवृतशरीरः कट्यां विलम्बितः महाचन्द्रहासः महाखड्गो यस्य स एवम्भूतः । **मण्डलेति**—मण्डलेश्वरमण्डलस्य=माण्डलिक समुदायस्य चूडामणिभिः चोचुम्ब्यमानं चरणतलं यस्य सः महाराजाऽधिराजः । **अस्माभिरञ्चितानि** = अस्माभि-

राक्रान्तानि ।

पृ० ३९६ ॥ **सौवर्णकङ्कणयुगलम्** = हिरण्मयवलयद्वन्द्वम् । **बहुविधेति**—बहुविधाः नानाप्रकारा वीररसकलिताः कविताः **भूस्वामितासूचकम्** = पृथ्वीभोग्यता सूचकम् **ओजस्विपदविन्यासाः** = ओजोगुणविशिष्टपदरचिताः। **याः**=कविताः श्रुत्वा **तत्रत्यवीराणाम्** = माल्यश्रीकगौरसिंहरघुवीरप्रभृतीनाम्। 'कृपाणः स्वयं कोशादि' त्यत्र **अतिशयोक्तिः** । **क्षत्रियकुल**कमलदिवाकरेण = राजन्यवंशसरोजभास्करेण । 'धन्यो भवान् य एवं—श्रीमदुदयपुरमेदिनीपरिवृढेन सततं स्मर्यते' इत्यन्वयः । कीदृशेन—पूर्ण—**प्रतापेति**—पूर्णप्रतापपटलपुञ्जेन पाटलीकृतः श्वेतरक्तीकृतः मेदःपाटो येन तेन । तथा—**दुष्टानां** गणस्य संघस्य या दुर्घटघटना अनिष्टकारिणी घटना तस्य विघाटनेन शत्रुपक्षहन्त्रेत्यर्थः । तथा-**प्रत्यर्थिनां** शत्रूणां प्राचीरकपाटानां = प्रकारकपाटानां विपाटनं = विच्छेदनं यस्मात् तेन तथाभूतेन । **साऽनुजः** = ससहोदरः । **कौमारमहाव्रतम्** = बालब्रह्मचर्यमहानियमम् ।

पृ० ३९७ ॥ भगवते = परमेश्वराय प्रसादीकृतमुपायनीकृतं यदास्वाद्यं तस्य आस्वादनसमयः भोजनवेला इति ।

**नवाधिकृतराज्यस्य** = नवमधिकृतम् अधिष्ठितं राज्यं येन तस्य । **नवेति**—नवः नूतन आसादितो यः प्रासादः महाहर्म्यं तस्य **परिष्कारशोभा** = मण्डनीकारणच्छविः । 'प्रतिद्वारम्' इत्यादिषु अव्ययीभावः व्याख्यातप्रायश्च । **रम्भास्तम्भाः** = कदलीखण्डाः । **मङ्गलकलशाः** = विवाहमङ्गलार्थं स्थापिताः पूर्णकुम्भाः । **अशोकपल्लवतल्लजावली** = अतिमनोहराशोकवृक्षपत्रावली । **प्रतिस्तम्भम्** = स्तम्भं स्तम्भं प्रति परिवेष्टयन्त्यः या कुसुमिताः = प्रफुल्लिताः वल्लीमतल्लिकाः = मनोहरा लताः, **प्रतिकलशम्** = प्रतिकुम्भम् **कुङ्कुमेति**—कुङ्कुमम् = काश्मीरकेसरम् । कस्तूरी=मृगनाभिः । चन्दनम्= मलयजरसः एतेषां **चर्चामचर्चिकाः**=छुरणमतल्लिकाः प्रतिगवाक्षम्=प्रतिगोऽक्षम् **यक्षकर्दमेति**—तत्र * **यक्षकर्दमः** = यक्षप्रियः कर्दमो लेपविशेषः, **वृकधूपः**=वृक इव धूपः दशाङ्गादिधूपः घनसारधूपः = कर्पूरधूपः एतेषां धूमैः उद्भूताः

* "कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः" इति ( अमरः )

कर्पूरागरुकस्तूरीकक्कोलघुसृणानि च ।
एकीकृतमिदं सर्वं यक्षकर्दम इष्यते ॥ इति ( व्याडिः )।

उत्थिता ये घनाः सान्द्रा घनाघनाः मेघा ते च ते उद्धाः महामेघाः, **प्रतिकुञ्जम्** प्रतिलतापिहितद्वारम् **माङ्गलिकमण्डनप्रकाराः** = मङ्गलप्रयोजनकनानाप्रकारसज्जीकरणविधानानि । एते सर्वे—**परितः** = समन्ततः मङ्गलामिव वर्षन्ति स्म' इति सम्बन्धः ।

रम्भेति—रम्भादीनां **श्रेणीश्रेयांसि** = मङ्गलश्रेणय इत्यर्थः । मार्गमभितः **विश्राणयन्ति** = ददते भूषयन्तीत्यत्र तात्पर्यम् । **दुन्दुभीति**—दुन्दुभ्याद्या वाद्यविशेषाः ( पूर्वं व्याख्यातप्रायम् ) । तेषां **सप्रसादनादाः** = मनोहर्षकाः ध्वनयः **दिवम्** = आकाशं **स्पृशन्ति** = ध्वानयन्ति इत्यर्थः । **सुहासिनीनाम्** = स्मेरमुखीनाम् **सुवासिनीनाम्** = मनोहारिवेषवतीनां युवतीनाम् **कलिताभिः** आश्रिताभिः ललिताभिर्मनोहराभिः काकलीभिः = मधुराऽस्फुट कलध्वनिभिः उन्नीतानि = उत्थापितानि उल्लापितानीत्यर्थः एवंभूतानि गीतानि **पुंस्कोकिलान्** = पिकान् अपि **कलकूजनम्** = मधुरपञ्चमस्वरालापनम् **शिक्षयन्ति** = शासयन्ति कोकिलादपि सुन्दरीणां गीतध्वनिरत्यन्तं मनोहर इति भावः । **अतिशयोक्तिरलङ्कारः** । **पीतारुणेति**—पीतादिविविधवर्णवासोभिर्भूषिता इत्यर्थः । **कुंकुमतिलकाः** = काश्मीरजकेसरतिलकाः **क्रमुकेति** क्रमुकम् = पूगफलम् । कुसुमानि—पुष्पाणि, **कुंकुमम्** = केसरम्, अक्षताः = तन्दुलाः अम्लरम् = एतन्नाम्ना प्रसिद्धं ( बहुमूल्यम् ) गन्धद्रव्यम्, नारिकेलम् = लाङ्गलीफलम् इत्यादीनि यानि महामाङ्गलिकानि उपायनानि = उपढौकनिकानि हस्ते पाणौ येषां एवम्भूताः सहस्रशो **नागरिकाः** पारा जनाः **यातायातैः** = गतागतैः पदवीः = मार्गान् **आकुर्यन्ति** = व्याप्नुवन्ति सङ्कीर्कुर्वन्तीति यावत् ।

**पृ० ३९८** ॥ **'प्राप्तराज्यस्य** गौरसिंहस्य श्यामसिंहस्य च केन वर आनन्दो वर्णनीय स्यात्' इति सम्बन्धः । कीदृशस्य—**सोदर्यायाः**—सहोदरायाः पाणिपीडनमहोत्सवः उपयमन ( विवाह ) महोत्सव एव पीयूषम् अमृतं तस्य पूरप्रवाहेन स्नातस्य = व्याप्तस्येत्यर्थः । **दक्षिणदिक्चक्रचक्रवर्तिनी** = दक्षिण-देशमहाराजेन शिववीरेण **सनाथ्यमानस्य** = सभाजितस्य **महोत्सवरसरसायनैः** = ( कोशलाविवाह ) महोत्सवरस एव रसायनानि = जीवनौषधानि तैः तरुणीकृत इव = युवक इव जात इत्यर्थः ।

**औद्वाहिकीः** = विवाहप्रयोजनिकाः **सामग्रीः** = उपकरणानि । **राजतपात्रेषु** = रूप्यभाजनेषु स्थापिताः रचिताः **आयस्त इव** = श्रान्त इव । **श्रूयते**—समाकर्ण्यते । **दविष्ठः** अतिशयेन दूरमिति दविष्ठः—स्पष्टमन्यत् ।

..............दूरशब्दात् **अतिशायने**—( ५ । ३ । ५५ ) इति इष्ठन् प्रत्ययः । **स्थूलदूरयुवह्रस्व**—( ६ । ४ । १५६ ) इति सूत्रेण यणादिपरलोपे पूर्वस्य गुणाऽवादेशे रूपसिद्धिः । **नेदिष्ठताम्** = अतिसमीपताम् । अन्तिकशब्दस्य **अन्तिकबाढयोर्नेदसाधौ** ( ५ । ३ । ६३ ) इति सूत्रेण अजादिप्रत्यये परे नेद इत्यादेशः । नेदिष्ठस्य भावो 'नेदिष्ठता' । **कलकलः** = कोलाहलः **समुदस्थात्** = उत्थितोऽभूत् । **सत्पथाभिमुखं** = राजमार्गाभिमुखं या श्चन्द्रशालाः । तासु **गवाक्षेषु**=जालकेषु **चिरण्टयः**=सुवासिन्याः सौभाग्यवत्य इत्यर्थः । '**सुवासिन्यां** चिरण्टी स्यात् द्वितीयवयासि स्त्रियाम्' इति रुद्रः । **उपतस्थिरे** वरयात्रादर्शनार्थं स्थितिश्चक्रुरित्यर्थः । **सम्बाधः**=संघट्टः । रम्भास्तम्भानां कदलीखण्डानां सहस्रैः भरिते=पूर्णे **आरक्तानां**=समन्ततो रक्तवर्णानां पताकानां पटलैः वृन्दैः अरुणिते राञ्जिते । **जाम्बूनद**वितानानां सौवर्णोल्लोचानां याः प्रभाः तासां पुञ्जेन समूहेन पीते पीतवर्णे अनेकशतमञ्चाधिष्ठिते **महाकुट्टिमे**=विशालायां निबद्धायां भुवि ।

**पृ० ३६६ ॥ क्रमशः**=व क्रमेण **मञ्चान्=अध्यवसन्**=आरुरुहु रित्यर्थः । **सतारापुरीवास्तव्याः** पूनासविधे वर्तमाना या 'सतारा' नामकनगरीतन्निवासिनः । **सोपायनेति**—उपायनैः प्राभृतै । सह वर्तमानानि यानि राजतभाजनानि चान्द्रपात्राणि तैः सभाजिताः शोभायमानाः कराः पाणय एव कोकनदकुड्मलानि येषां ते ।

**मेदःपाटवाटवास्तव्याः**=मेवाडनिवासी । **महामहः**=महोत्सवः । 'मह उद्धव उत्सवः' इति ( अमरः ) । **प्राणसंशयापादिकाः**=मरणसंशयजनिकाः **कष्टपरम्पराः**=दुःखघटनाः । **दयताम्**=दयां कुर्यात् । **दीनदयार्द्रहृदयः**=दीनेषु अनन्यशरणेषु स्वभक्तेषु आर्द्रं कोमलं हृदयं यस्य सः **दयोदन्वान्**=कृपासागरः । **दामोदरः**=श्रीकृष्णो भगवान् । '**रामं विना** कोशलायाः सौभाग्यभवनम् भवेत्' इति श्रीरामसीतासादृश्यं गर्भीकृतम् ।

**श्रूयते राम** एव क्रूरं—हतवान्' **क्रूरं**=क्रूरसिंहम् यथा क्रूरं=दुष्टं रावणं रामः=श्रीजानकीजानिर्हतवान् तथैव रामसिंहः इत्यर्थः ।

**सैन्धवनियामकवेष**:=सैन्धवनियामकः अश्वसेवी 'साईस' पदवाच्यः । **लब्धेति**—लब्धा=प्राप्ता पारम्परीणा=परम्पराप्राप्ता स्थावरजङ्गमसम्पत् येन सः । **जयपुराधीश्वराणाम्**=जयसिंहनाम्नाम् । **महासेनेति**=महासेना एव समुद्रः सागरः तस्य [illegible] लहरीसहस्रैः **सञ्चारयितुकामम्**=[illegible]

काममित्यर्थः । **पक्षिराज इव**=गरुड इव **सुप्तसर्पम्**=शयानं फणिनम् । **निभृतम्** गुप्तम् । **अहह**=इति हर्षेऽव्ययम् आश्चर्ये वा महदाश्चर्यमित्यर्थः । **धन्या**=प्रशस्या अनन्यसाधारणपतिव्रता यतः । **अवधूतवेषेण**=साध्वीवेषेण **विधूतेति**—विधूता दूरीकृता या इतरवासना अन्यविषयकामना तया पूतेन पवित्रेण **हृदा**=मनसा । **भूतनाथम्**=भूतपतिं शिवम् । **चिरमाराधयाम्बभूव**=चिराय सिषेवे । **कलितेति**=कलितं प्राप्तं दुर्घटघटानानाम् अचिन्तनीयप्रकाराणां नैपुण्यं चातुर्यं यैः तेषां **पुण्यानाम्** = सुकृतानामेव फलमिदम् । **बाल्ये**=शैशवे । **देवशर्मणः** यो भिक्षाभागः तस्य भागे भागधेयं प्रारब्धं यस्याः एवं भूतापि अधुना **महाराजा**धिराजेन=श्रीशिववीरेण । रामसिंहस्य **राज्ञी**= महिषी पट्टाभिषिक्ता । इत्येवम्—**आलपन्तः**=भाषमाणाः । **परितः**=समन्ततः **समुपतस्थिरे**=स्थितिं कुर्वाणा अभूवन् । **वरयात्रासमारोहः** = जन्यासमारोहः । वरयात्रासमारोहमेव वर्णयति—**एकतानेति—एकतानश्रुतिशतैः** एकाग्रीकृतकर्णशतैः **सुखेन** = आनन्देन आस्वाद्यानाम् = श्रवणार्हाणां वाद्यानां भेरीपटहादीनां परतः वाद्यानि । **रञ्जितेति**—रञ्जिताः रक्तीकृताः विविधरङ्गैः नानावर्णैर्भङ्गाः=प्रकारा आकृतिविशेषा येषाम् एवंभूतानां **मतङ्गानाम्**= गजानाम् । **अनवरतं** यथा तथा पातिता फेनराशिः—डिण्डीरपुञ्जो यैः तेषाम्, तथा—**खरैः** कठोरैः खुराणां शफानामग्रैः कोटिभिः उद्धृतया उत्खानितया धूल्या यो महान्धकारः तेन अन्धीकृताः महान्तः आजयः संग्रामाः यैः तेषां **वाजिनाम्** = घोटकानाम् । **पीतेति**—पीतारुणाद्यनेकवर्णैः वर्णनीयानि अम्बराणि वासांसि येषाम्, तथा —**मणीनां** गणाः संघाः तेषां प्रभाभिः द्युतिभिः प्रभासितानि शोभायमानानि अम्बराणि वासांसि येषां तेषां **वीरवराणाम्**= महाभटानाम् । **नानेति**—नानाचित्रचयैः चकितीकृताः विस्मेरीकृताः अवलोचकलोचनानां द्रष्टृदृष्टीनां व्रजाः समूहाः यैः तेषां ध्वजानां पताकानाम् ।

**तुण्डेति**—तुण्डस्य मुखस्य यत् सौष्ठवं सुष्ठुभावः अर्थात् तेजनं तस्य परिस्पर्धि=प्रतिद्वन्द्वि यद् अग्रं कोटिः तेन व्यग्रीकृताः अर्थात् चकितीकृताः शकुन्ताः श्येनाः यैः तेषां **कुन्तानाम्** = शस्त्रविशेषाणाम् । **इति** = तात्कालिकसौवर्णविवाहमहोत्सवं नवीनाः कविकोविदम्मन्याः कथमिव वर्णयेयुः इति सम्बन्धः । कीदृशास्ते—**स्मरणमात्रेणापि** पराधीनाः=नवीनैः स्वयं साक्षात्काराभावात् अनुभवं विना स्मरणाऽनुपपत्तेश्च परतन्त्राः, तथा—**अलौकिकसामर्थ्यविहीनाः**=अलौकिकं यत् सामर्थ्यं योगजधर्मात्मकप्रत्यासत्तिरूपं तेन विहीनाः

रहिताः, यदि नवीनाः युक्तयुञ्जानान्यतरयोगिनो भवेयुः तादृशालौकिकसामर्थ्येन ज्ञात्वा वर्णयेयुः, परं तदपि नास्तीति भावः । एतेन तात्कालिकमहस्य अलौकिकतैव व्यज्यते ।

पृ० ४०१ ॥ '**वरयात्रा**महासत्सारोहस्यैतस्य शेषभागे=( पृष्ठभागे ) जित धारधराधीशस्य श्रीवीरेन्द्रसिंहस्य कुमारः श्रीमान् **रामसिंहः**। तस्य विशेषणानि—कथम्भूतो रामसिंहः—**क्षत्रियवंशावतंसैरावृत**:=राजन्यवंशशिरोभूषणभूतैः परिवृतः । कथम्भूतैः क्षत्रियवंशावतंसैः—**परिहितमहाकञ्चुकैः** = धृतमहाचोलकैः, तथा—**आबद्धपीतारुणोष्णीषैः**=आबद्धं सम्यक् वेष्टितं पीतमरुणमुष्णीषं शिरोवेष्टनं यैः तैः । तथा—आमुक्तानामनर्घ्याणां मुक्तामाणिक्यवैडूर्यहीरकमरकतपद्मरागादीनाम् अगणितानामसंख्यातानां मणीनां ये गणाः समूहाः तेषां प्रभापुञ्जः द्युतिविसरः पिञ्जरीकृतं श्वेतरक्तादिविविधवर्णमिश्रीकृतं निजमण्डलं यैः तैः । तथा—कमलानां पद्मानां मुकुलकुलैः कोरकनिकरैः आकलितानां रचितानां सौरभभारप्रचारेण सौगन्ध्यनिचयविस्तारेण आकृष्टाः आसञ्जिताः भ्रमन्तः इतस्ततः सञ्चरन्तः ये भ्रमराः अलयः तेषां निकटस्य संघस्य झङ्कारेण गुञ्जनरवेण स्तूयमानैः गीयमानैरिवेतीति **लुप्तोत्प्रेक्षा**। पुनः कीदृशो रामसिंहः—**बडवामेकारूढः**= एकां घोटकीमधिष्ठितः,वरो हि घोटकीमधिरोहतीति अद्यापि लोकाचारः । '**रीतिरेषा** राजपुत्रदेशस्य ' इति कथनमत्यल्पायः । कीदृशीं घोटकीम्—**परःसहस्राणां** मौक्तिकानां मुक्तामणीनां जालेन समूहेन आवृतैः सज्जितैः सर्वैरङ्गैः आकलिता धृता आलोचकानां द्रष्टॄणां लोकनलोभस्य दर्शनलोभस्य वहा जनयन्ती शोभा यया ताम्, द्रष्टृजनदृष्ट्याकर्षणशोभावतीमिति निर्गलितोऽर्थः। पुनः—**नूपुराशिञ्जितैः**= मञ्जीरध्वनिभिः **अखिलानां** = विश्वेषां द्रष्टॄणां मनोहरतीति **वस्तुध्वनिः** । पुनः—**लोललाङ्गूलेन** = लोलेन चपलेन लाङ्गूलेन लूमेन पुच्छेनेति यावत् **चामरदोलनम्** = चमरिकाहिल्लोलनम् **अनुकुर्वतीम्** = विडम्बयन्तीम्, तथा **उन्नतग्रीवाम्** = उत्कन्धराम् , **स्तब्धकर्णाम्** = शङ्कुकर्णाम् । **हरितवर्णाम्** = इति * बडवा**जातिरपि**। पुनः कीदृशः रामसिंहः—**सौवर्णशिल्पेति**—सौवर्णशिल्पं सुवर्णतन्त्वादिरूपं कारुकृत्यं ' सिलमासतारा ' इति नाम्ना प्रसिद्धं यत् ' कनारी ' योजकानां सूचीकर्मकराणां कृत्यमित्यर्थः तस्य

---

* उत्तमजातीयाया बडवाया वरयात्राकाले एवं रूपदर्शनात् **स्वभावोक्ति**-रलङ्कारोपीत्यर्थः ।

सौष्ठवं यत्र एवंभूतानि आसादितानि परिहितानि अरुणानि रक्तानि सर्वाङ्गीणानि सर्वाङ्गव्याप्तिमन्ति वासांसि येन 'रञ्जितवासा हि वरो भवति' इति प्राचामाचारः। तथा **कुसुमकोरकेति**—कुसुमानां पुष्पाणां कोरकैः कलिकाभिः रचितानि यानि हारमालाकंकणकेयूराऽवतंसानि तैर्ललामः सुन्दरः, तथा—**विविधालङ्कारालङ्कृतः**=अनेकविधभूषणसज्जितः। तथा—**ताम्बूलरसाऽरुणिताधारः**=ताम्बूलरसेन अरुणितः रक्तोऽधरो निम्नौष्ठो यस्य नागवल्लीदलरसरञ्जितदन्तच्छद इत्यर्थः भगवतः **कुसुमधन्वनः** = रतिपतेः पञ्चबाणस्य **प्रतिरूपमिव** = प्रतिकृतिरिव, **माधुर्यस्य** = सौन्दर्यस्य अवतार इव एवम्भूतः **विश्वेषां** नयनानि = सर्वेषां द्रष्टॄणां नेत्रानि **मनः** = हृदयम् **मोदयन्** = हर्षयन्।

**मौक्तिक**जालावलीललितप्रान्तम् = मुक्तामालापंक्तिमण्डितकोणम् **महापुण्डरीकमञ्जिमामत्रम्** = महापुण्डरीकस्य महाकमलस्य मञ्जिम्ना सौन्दर्येण (रचितमिव) अमत्रं = पात्रमिव **छत्रम्** = अस्य = छत्रस्य **वाहकः** = धारकः **आकञ्चुयितुम्** = मीलयितुम् **यतते** = उद्यतो भवति, चक्रवर्त्तिसविधे अन्यदीयच्छत्रचामरादिधारणमर्यादाया अभावात्। तावत्—**देवेन** = महाराष्ट्राधीशेन वारितः। **उद्वाहसमये** अलमेतेनाचारेण = विवाहकालेऽयमाचारो न विधेय इत्यर्थः। **माङ्गलिकगीतिगानपराः** = मङ्गलकालिक सौभाग्गीतितत्परा इत्यर्थः **सुन्दर्यः** = सुवासिन्यः। **सुमनसः** = पुष्पाणि। **ववर्षुः** = प्राकिरन्। **द्वारपूजायाम्** = वरीयद्वारप्रवेशकाले सत्कारविशेषादिरूपे व्यवहारे निवृत्ते सतीत्यर्थः।

**पारस्परिकेति**—पारस्परिकाऽवलोकनेन अन्योन्यसन्दर्शनेन विकसिताः प्रादुर्भूता ये विविधाः भावभङ्गाः = प्रीतिप्रवाहाः तेषां तुङ्गतरङ्गैः = महामहोच्छलनैः आकुलस्य = विह्वलीभूतस्य हृदयस्य अर्थात् कोशलारामयोरेव मनसः।

**शिथिलेति**—शिथिलितं जालबन्धनं यस्याः सा **शफरी** = मत्स्यी इव। ' दृष्टिः परस्परमभिमुखीभवतीति सम्बन्धः। **तडागतलम्** = सरोवराधोभागम्। **निर्झरवारां** प्रसार इव = प्रस्रवणनिर्गतजलप्रवाहमिवेत्यर्थः।

**पृ० ४०३ ॥ प्रस्रवति** = वहति। **स्वेदविन्दुव्रजः** = घर्मकणगणः। अरुणेति—अरुणवसनादीनां प्रभासहस्रैः **अरुणीक्रियमाणा**ऽपि = रक्तीक्रियमाणा **तालीदलद्युतिम्** = तालीपत्रशोभाम् **कपोलपाली** = गण्डस्थलम्। **उभयोः** = वरवध्वोः। **नेदीयांसौ** = अतिनिकटवर्त्तिनौ विवाहविधिसम्पादनकरणहेतोः **अभ्यर्णस्थाः**=समीपस्थाः। **जडतास्त**म्भादिर्व्याख्यातप्रायमस्माभिः **पूर्वं ३६ पृष्ठे चतुर्थे**.........निश्वासे। **ऊर्द्धतनशालासु** = चन्द्रशालासु।

**ब्रह्मघोषैः** वेदपाठैः। **पारिषदानाम्** = परिषदि भवानां सभ्यानाम् कर्णौ = श्रुती। **पावयन्ति** = पवित्रयन्ति। **घनानन्दानुभवपुरःसरम्**=महाहर्षपूर्वकम् असौ **कोशला**परिणयमहोत्सवः = कोशलायाः पाणिपीडनमहामहः समाप्तः। '**रामाविरहेण** चिरग्लाना कोशला'—इत्यनेन सीतासहितस्य दाशरथेरयोध्याप्राप्तिवृत्तान्तोऽपि व्यज्यते—शब्दशक्तिमूलोऽयं **ध्वनिः**। **अमोमुद्यन्ततमाम्** = अत्यन्तं जहृषुः। **पौराः** = नागराः। **चिन्ताचक्रस्य** = चिन्तैव चक्रम्। **गृहीतेति**—गृहीतं सुकुलकन्यायाः पाणिपद्मं येन तम्। **सन्तोषम्**= प्रमोदम्। **आससाद** = भेजे। **महाराजः** = श्रीशिववीरः।

**पृ० ४०४॥ निर्वाधः** = बाधाशून्यः यथार्थ इति यावत्। **निष्प्रतिवन्धः** = प्रतिबन्धविहीनाः भीतिशून्य इति यावत्। **विलासैः**=हावभावादिभिः। '**कोशलारामयोः** शुद्धोऽनुरागः—साफल्यमापेदे' इति सम्बन्धः। **अधुना**— 'सतारानगर्यां महाप्रासादे सकुटुम्बो महाराष्ट्रपतिर्वसति' इति सम्बन्धः। स्त्रियां सप्तम्यन्तैः सतारानगरीं विशिनष्टि—कीदृश्याम्—**पुण्यनगरो**पकण्ठस्थायाम् = पुण्यनगरसमीपवर्त्तिन्याम्। पुनः—**तारामण्डलेति**—तारामण्डलचुम्बिनाम्= आकाशव्यापिनां सौधानां हर्म्याणाम् अग्रशतैः = शिरोभागशतैः विहिता अमरालयाः इन्द्रपुर्या विडम्बना अनुकृतिर्यया तस्याम्। पुनः—**नीलगिरीति**—नीलगिरिप्रतिमाः नीलपर्वतसदृशाः ये: महामत्ताः = मदोत्कटाः मतङ्गजकाण्डाः = महागजाः तेषां गण्डमण्डलेभ्यः कपोलस्थलेभ्यः संस्रूयमाणया = अतिशयेन स्रवन्त्या मदधारया दानवारिधारया अभ्युक्षिताः सिक्ताः घण्टापथाः राजमार्गाः यस्यां तस्याम्। पुनः—**अनवरतम्** अनारतं सरीसृयमाणानाम् अत्यन्तं सरतां आजानेयानां घोटकानां सहस्रस्य ये खुराः = शफाः तेषां खराग्रेण= कठोरेखाग्रेण खननात् विलिखनात् उद्धूतया रेणुकपटलघटया = धूलिपुञ्जघटया आलिङ्गितैः व्याप्तैः प्राचीरैः प्राकारैः परिवेष्टितायाम्। पुनः—निरन्तरमनारतं महाराष्ट्रराजस्य जयध्वनिसमाकर्णनेन = जयजयेतिशब्दश्रवणेन सञ्जातः समुद्भूतो यः संस्कारः भावनारूपः तस्य भारोऽतिशयः तेन तदानुपूर्वीरटने = तत्क्रमानुसन्धानपूर्वपरिभाषणे पटुभिः चतुरैः कीरसारिकादिभिः = शुकशारिकादिभिः चङ्क्रम्यमाणाः जङ्गम्यमाना ये विटपाः = वृक्षाः तैः आवृतानि व्याप्तानि उद्यानकदम्बानि = आरामसमूहाः यस्याम् एवम्भूतायां सतारानगर्याम्—**महोद्यानवर्त्तिनि** = विशालतरारामनिर्मिते **महाप्रसादे** = महाहर्म्ये **सकुटुम्बः** = सपरिवारः।

* **पाणिगृहीतया** = भार्यया। **सैनिकानाम्** = भटानाम्। **व्यूहरचनाकौशलम्** = सेनानिवेशचातुर्यम्। 'व्यूहः स्याद्बलविन्यासे निर्माणे वृन्दतर्कयोः' इति (विश्वः)। **शस्त्रक्षेपेति**—शस्त्राणां तलवारभृप्रतीनां क्षेपः शत्रोरुपरिप्रपातः तस्य लाघवकौशलं=शीघ्रताचातुर्यम्। **परीक्षमाणः**=आलोचनां कुर्वाणः। **सैन्धवैः** = घोटकैः **विलसति** = भ्राजते। **एतस्य** = शिववीरस्य सौजन्येन सज्जनतया **वशंवदा**=आयत्ता इत्यत्र दीपकालङ्कारः। **दिल्लीश्वरस्य**= अवरङ्गजीवस्य **महाभिमानः**—महागर्व एव मतङ्गजः = गजः **कीर्त्तिदेवधुन्याः**=कीर्त्तिर्यश एव देवधुनी स्वर्गङ्गा तस्याः प्रवाहे। **कृपाणधारास्फालनैः**= कृपाणानां धारैव धारा तदास्फालनैः तद्वीयगलनवलनैः **गम्भीरतरे**=अतिगम्भीरे अत्र—**परम्परितं**—**रूपकम**लङ्कारः। तथा.............................**ग्रावशकलवत्**=ग्राव्णां पाषाणानां शकलवत् खण्डवत् **निमग्नः**=ब्रुडितः। **विश्वेषाम्** = सर्वेषाम् **अन्तराकाशे**=हृदयाकाशे **प्रचकाशे** = दिदीपे। **अस्य** = प्रतापतपनस्य धूमैरिव। **स्वान्तम्** = हृदयम्।

**पृ० ४०५ ॥ एततिदि**—एतस्य महाराष्ट्राधीशस्य चामराहतानां चमरिकाचालनानां समीरप्रसारैः = पवनगतिभिरेव। **परमनो**० परेषां शत्रूणां ये मनोरथाः सङ्कल्पाः ते एव कासाराः = महासरांसि ते **शोषिताः** = शोषणं नीता इव। **रूपकोत्प्रेक्षयोः** संसृष्टिः।

'**एकदा**—अट्टालिकायां गजदन्तपर्यङ्के पयः फेननिभायां तूलिकायां शयानो महाराजः स्वप्नममुमपश्यत्' इति सम्बन्धः। कथम्भूतायाम् अट्टालिकायाम्—**केतकीति**—केतक्याः = तृणद्रुमपुष्पविशेषस्य सौरभेन=सौगन्ध्येन वासितं सुरभीकृतं यत् पानीयं जलं, तेन पूरिते भरिते पात्रे तिष्ठन्तीति तादृशानि यानि मरन्दतुन्दिलानि = मकरन्दपुञ्जितानि कुसुमानि पुष्पाणि तेषां वृन्दस्य समूहस्य मोदेन अन्धाः = अन्धीभूताः मत्ता इति यावत् ये मधुपाः = भ्रमराः तैः झङ्कृतायाम् = गुञ्जारितायाम्, पुनः—नागदन्तिकायाम् = पङ्के अवलम्बी दोलायमानो यः करालः = खरः करवालः खड्गः तस्मिन्निपतन्ती प्रतिसङ्क्रामन्ती या दीपावलीनां प्रतियातना = प्रतिकृतिः तस्याः प्रभूतप्रभूतप्रभाभिः = प्रचुरप्रचुरद्युतिभिः प्रभासितायाम् = भ्राजमानायाम्, पुनः—**अत्युच्चतया** =

* 'पाणिगृहीती भार्यायाम्' इति वार्त्तिकेन सिद्धम्। या न भार्या सा 'पाणिगृहीता' भवति

अत्यौन्नत्येन **पादार्पित**चित्रगतस्य इव समस्तानि सर्वाणि यानि सातारायां सतारानाम्न्यां नगर्यां गृहादीनि तस्य—**सौष्ठवा**वलोकनस्य सौन्दर्यदर्शनस्य यत् सौकर्यं सौख्यं तस्य प्रदायाम् = **परितः** समन्ततः **गवाक्षमण्डलावृतायाम्** = वातायनपटलभूपितायाम् **ताराग्रहमण्डलं** स्पृशन्त्याम् = एतेन महदौन्नत्यं व्यज्यते । अतिशयोक्तिरलङ्कारश्च । **गजदन्तपर्यङ्के** = हस्तिदन्तनिर्मिते पल्यङ्के **पयःफेननिभायाम्** = दुग्धडिण्डीरसदृशायां **तूलिकायाम्** = तूलवत्यां **शयानः** = निद्रां भजमानः । **अमुम्** = वक्ष्यमाणम् स्वप्नम् अपश्यत् ।

तदेव स्वप्नं वर्णयति—**यदित्यादिना**—**सौवर्णपर्यङ्के** = हिरण्मये पल्यङ्के **महोपधाने** = महति उपबर्हे अवलम्बितः आश्रितः पृष्ठदेशो येन सः **अवरङ्गजीवः** = दिल्लीपतिः । अवरङ्गजीवस्य दशां ग्रथ्नाति—**कदाचित् पादा**—वित्यादिना । **वीजयन्तमपि** दासेरम् = वातयन्तमपि भृत्यम् **आश्यकृति** = भत्सर्यति । **स्वेदाक्लिन्नम्** = धर्मवारिणा आर्द्रीभूतम् **कञ्चुकम्** = चोलकम् । **जाम्बूनदभाजनम्** = सुवर्णपात्रम् । **विशिथिलेन** = दुर्बलेन कम्पमानेनेति । तात्पर्यमाभाति । **करेण** = पाणिना । **उल्वणम्** = उष्णं दीर्घञ्च । **मन्त्रकीलितः** = मन्त्रेण जडीकृतः **जीर्णाजगर इव** = वृद्धमहासर्प इव **स्तब्धनेयनः**=निर्निमेषनेत्रः । **ललाटतले**=मस्तकफलके **पिच्छलीभवत्स्वेदराशिम्**= घनीभवद्घर्मघटाम् । **लशुनेति**—लशुनम् = गृञ्जनम् **प्रियालम्**=ग्रन्थकम् "प्याज" इति प्रसिद्धम् । **पललम्** = मांसम्, तेषामिति द्वन्द्वः लशुनादिमिश्रः यः पूतिगन्धः दुर्गन्धः तस्योद्गारैः डात्कारैः 'मशाकनपि मूर्च्छयन्' इत्यनेन तस्य मुखे दुरवस्थाहेतोर्मशका अपि भिनभिनायाञ्चक्रिरे' इति व्यज्यते । **नासामिव छित्वा**=नासिकां कर्त्तयित्वेव । **कूर्चम्**=दाढिकाम् ।

पृ० ४०६ ॥ **समूलम्** = मूलसहितम् । **उल्लूय** = उत्पाट्य । **पादत्राणेन इवाहत्य**=जूतिकामिव मारयित्वा, **निष्ठीवनेव**=थूत्कारेणेव **अभिषिच्य** = आर्द्रयित्वा इत्यादि लोकप्रवादानुकरणात् **लोकोक्ति**रलङ्कारः ।

**कालाजगरेति**—काजाजगरः कृष्णमहाशीविषः तस्य यो जगरज्वलनः उदर्यो वह्निः तस्य ज्वालासु कीलासु पतङ्गः । **तद्गतप्राणा**=शिवराजनिष्ठमानसा तदासक्तेत्यर्थः। **अपचीयते**=विरहेण कृशीभवतीत्यर्थः । **'जागरे'** इति । एकेति—एकसम्बन्धी यथा हस्तिपकः तस्य ज्ञानम्, अपरसम्बन्धिनो गजस्य स्मारकम्=स्मृतिजनकं भवतीत्यर्थः । अयं विषयो मदीय[illegible] शब्दरत्न[illegible]

पृ० ४०७ ॥ **वाष्पेति**—वाष्पधारया स्नापितं = प्रवाहितं स्तनद्वयं कुचद्वन्द्वं यया सा । '**अस्थिचर्म**मात्राऽवशेषा' इत्यादीनि रसनायां विशेषणानि विरहसीमावोधकानि ज्ञेयानि । **व्याहृत्य** = उक्त्वा, स्पष्टमन्यत् ।

पृ० ४०८ ॥ **कुक्कुटम्** = नाम द्विजविशेषम् एतद्विषये पुरातनपताकायां स्कन्दपुराणप्रमाणमुक्तम्—तथाहि—

**वाराणस्यां दक्षिणेऽस्ति कुक्कुटो नाम वैद्विजः ।**
**तस्य स्मरणमात्रेण दुःस्वप्नं सुखदं भवेत् ॥** इति ।

**ज्वरजर्जरित** : ज्वरशीर्णाङ्गः **जराजीर्णः** = अतिवृद्धः । **जयपुरज्याजानिः** = जयपुरस्य ज्या पृथिवी जाया यस्य सः अर्थात् जयपुराधीशः । **जायाया निङ्** ( ५ । ४ । १३४ ) इति समासान्तः । **भवेति**— भवः संसार एव रोगो व्याधिः तस्य भेषजभूतानि औषधरूपाणि—**भगवन्नामानि**= 'हरे राम हरे राम राम राम हरे हरे । हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे' इत्यादीनि, अथवा—'गोविन्द! हे दामोदर ! माधव !' इत्यादीनि । **भज्यमानेन**= ( कण्ठस्य घुर्घुरायितत्वात् ) त्रुट्यता स्वरेण ।

पृ० ४०९ ॥ **अवहेल्येत** = तिरस्क्रियेत । **महायन्त्रणाम्** = महतीं पीडाम् । **कल्मषेति**—कल्मषेण = मिथ्योक्तिरूपेण पापेन मलीमसेन = दूषितेनं **आत्मानम्** = स्वस्वरूपं मनो वा । **कलुषयितुम्** = मलिनयितुम् **उत्सहे** = कामये । **अस्थाने** = अनवसरे **ग्लानिः** = खेदः । **शुभोदर्कविघटकः** = शुभपरिणामनाशक एव **स्वतन्त्रः** = तदीयकरप्रदतामनङ्गीकुर्वाण इत्यर्थः ।

पृ० ४१० ॥ युयुत्सौ = युद्धं कर्त्तुमिच्छौ । **दिल्लीति**—दिल्लीदुरितस्य दिल्लीकलङ्कस्य अवरङ्गजीवस्यैव दर्पदलने अहङ्कारभञ्जने दीर्घो भुजदण्डो यस्य सः । **भारताभिजनप्रतापपताकाः** = भारतदेशप्रतापध्वजाः । **दोधूयन्ताम्**— स्फारीभवन्तु । **हिमसानुषु** = हिमालयशृङ्गेषु । **अकूपारकूलेषु** = समुद्रतटेषु । 'भारतीयभेरीनादः कर्णं स्पृशतु' इति सम्बन्धः ।

पृ० ४११ ॥ **क्रौर्यकण्टकोत्सारिताः**—क्रूरस्य भावः क्रौर्यम् तदेव कण्टकं तेना उत्सारिताः = विद्धा इत्यर्थः **मदिति**—मत्प्रतिज्ञायाः रक्षणे पालने सक्षणं सावसरं सोत्सवं वा । **निरवद्यम्** = अधारयिष्यम् ।

पृ० ४१२ ॥ **वर्षीयसः** = अतिशयेन वृद्धस्य । **प्राज्यम्** = प्रभूतम् **अमेयम्** = अक्लेशम् । **समपत्स्यत** = अजनिष्यत । **नन्दकेति**—

कदाचाराणाम्=दुष्टाचाराणाम्। प्रजाम्रगवृकाणाम्=प्रजाभक्षकाणामित्यर्थार्थः।

पृ० ४१३ ॥ शारदाकाशेति—शारदाकाश इव श्यामेषु तारका इव=नक्षत्राणीव । गलितेति—गलितं स्खलितं कुसुमानां बन्धनं येषाम् एवम्भूताः—कुञ्चितमेचककचाः-वक्रकृष्णशिरोवालाः । सौदामिनीति-सौदामिन्याः विद्युतः वृन्दस्य विनिन्दकं तिरस्कारकं ततोऽप्यतिचपलद्युतिभाक् वसनम्=वस्त्रम् । 'गुञ्जातोलनेन—' इत्यादिगद्येन महाराष्ट्रपतेर्दानशूरतां प्रतिपादयति । विजयध्वजेन=विजयध्वजनाम्ना सेनापतिना । 'रिपूणाम्-' इत्यत्र उत्प्रेक्षा । 'अलिकुलाकुलैः कमलैरिव' इत्यत्र उपमा ।

पृ० ४१५ ॥ प्रतिध्वनीति—प्रतिध्वानिनिवहैः=प्रतिशब्दपरम्पराभिः सहस्रगुणितम् । जयध्वनिध्वानम्=जयशब्दशब्दम् । कन्दरिकन्दरेषु-पर्वतगुहासु । समाधिसन्धौ=समाध्यवस्थायाम् । त्राटकीति त्राटकी योग-मुद्राविशेषः 'यतोधर्मस्ततः कृष्णः' इत्याद्युक्त्या उपक्रमोपसंहारयोरैक्यं प्रदर्शयन् ऐक्येनैव सर्वं समवयितुं शक्यते इति व्यक्तीकरोतीति शिवोम् । श्रीकृष्णाय नमः ॥

कृष्णे दले रविदिने मधुमासि वर्षे
श्रीवैक्रमे गुण-भुजङ्ग-नवेन्दु (१९८३) सङ्ख्ये ।
टीका नवा शिवजयध्वजनामरूपा
पूर्णा कृता नृहरिणा कविनेति विज्ञाः !

सम्भाव्यते सुलभमानवबुद्धिदोष-
प्राग्भारभूमिरतुला स्खलिताङ्कुराणाम् ।
तस्मात्प्रमार्ज्य गुणशालिनमाश्रयध्वं
दोषो ममास्तु शिरसा वहनक्षमोऽहम् ॥ २ ॥

भूपान्तराणां वचसाऽप्यवाच्या
विज्ञानसत्कौशलचाकचक्या ।
कीर्त्तिर्यदीया विपुलास्ति तस्मिन्
श्रीमज्जयोर्जे रचिता पताका ॥ ४ ॥

शिवा यदीयाङ्गविभागभाग्या
यो देवमौलीलितपादकञ्जः ।
सदाशिवः शान्तचिदम्बरेश-
स्तं भूतराजं प्रणमामि नित्यम् ॥ ५ ॥



इति (नूतन) शिवराजविजयपताकायां द्वादशो निश्वासः ।